नतं सार्धत्रयोदशाधिकमतः सार्धत्रयोदश-१३।३० हीनम् १।४०। इदं चतुर्गुणितम् ६।४०। अनेन समाख्यः १२२।४३हीनः। जातः स्पष्टः समाख्यः ११६।३। अनेन हारः १३२।३६ रहितः १६।३३। अक्षकर्णेन१३।१९भक्तः फलमभिमतो हरः १।१४। भाज्यः १२०।१४ अभिमतहरेण भक्तः फलमिष्टकर्णः ९७।२९। अस्य वर्गः ९५०३।०। अर्कवर्गः १४४। अनयोरन्तरं ९३५९।०। षष्ट्या सवर्णितम् ३३६९२४००। अस्य मूलं जाता इष्टच्छाया ९६।४४।३०। ॥

अथ विलोमविधिना नतसाधनम्। छायावर्गः ९३५८।५७ अर्कवर्गः १४४। अनयोर्गः ९५०२।५७ मूलं जातः कर्णः ९७।२९ अनेन भक्तो भाज्यः१२०।१४ फलमाभिमतो हरः १।१४।पलकर्णेन१३।१९ गुणितः १६।२५। अनेन मध्यो हरः १३२।३६ रहितः ११६।११। द्विगुणः २३२।२२। अयं वेदाङ्कधराधिकः पृथक् स्थापितः २३२।२२। अयं वेदाङ्कभूमी १९४ रहितः ३८।२२। त्रिभिर्भक्तः फलेन १२।४७ पृथक्स्थः २३२।२२ युक्तः २४५।९। अस्य मूलम् १५।४०। अर्धनाडीरहितं जातं कल्पितनतम् १५।१०। ॥

रसाप्त्याढ्यस्तस्यपदमित्यस्योदाहरणम्।चेद्वेदाङ्कधराधिकःपृथगतो वेदाङ्कभूनादित्यादिना जातोऽयमङ्कः ३८।२२ अस्य षडंशेन ६।२३ पृथक्स्थः २३२।२२ रहितः २२५।५९। अस्य मूलं १५।१। अर्धनाडीरहितं जातं नतम् १४।३१। इदं कल्पितनत-१५।१० तुल्यं न जातमिति कारणात् गुणाप्त्याढ्य इति पाठो युक्तः ॥ १० ॥

सुधाकरः—पूर्वप्रकारवैपरीत्येन पूर्वार्धोपपत्तिरतिसुगमा।

एवं समसंज्ञा नतोत्क्रमज्या जाता। तत्र नतं यदि सार्धत्रयोदशाधिकं तदा पूर्वविधिना

$$\text{समः}=\text{स}=\frac{(\text{न}+\frac{१}{२})^२}{२}-४(\text{न}-१३\tfrac{१}{२})=\frac{(\text{न}+\frac{१}{२})^२-८(\text{न}-१३\frac{१}{२})}{२}$$

$$\text{छेदगमेन}\ २\text{स}=(\text{न}+\tfrac{१}{२})^२-८(\text{न}-१३\tfrac{१}{२})=(\text{न}+\tfrac{१}{२})^२-८(\text{न}+\tfrac{१}{२}-१४)$$

$$=(\text{न}+\tfrac{१}{२})^२-८(\text{न}+\tfrac{१}{२})+११२$$

$$\therefore २\text{स}-११२+१६=२\text{स}-९६=(\text{न}+\tfrac{१}{२})^२-८(\text{न}+\tfrac{१}{२})+१६$$

$$\text{मूलग्रहणेन}\sqrt{२\text{स}-९६}=(\text{न}+\tfrac{१}{२})-४ \therefore \text{न}+\tfrac{१}{२}=\text{न}_१=४+\sqrt{२\text{स}-९६}\ ।$$

एतेन।

समो द्विघ्नो हीनो रसनवभिरस्मात् पदमथो समुद्राढ्यं हीनं क्षितिदलमितेनैव भवति।
नतं विद्वन् सूक्ष्मं करणगतितेनात्रवि मलं गणेशोक्तं स्थूलं गणितमिति चिन्त्यं बुधवरैः॥

इति मदुक्तमुपपद्यते।

अथ $(\text{न}+\tfrac{१}{२})=४+\sqrt{२\text{स}-९६}$। अतः $(\text{न}+\tfrac{१}{२})^२=\text{न}_१^२=१६+२\text{स}-९६+८\sqrt{२\text{स}-९६}$

$$=२स-८०+८\sqrt{२स-९६} \quad =२स-८\left\{१०-\sqrt{२स-९६}\right\}$$

$$=२स-८\left\{१०-\sqrt{९८-९८+२स-९६}\right\}$$

$$=२स-८\left\{१०-\sqrt{९८+(२स-१९४)}\right\}$$

अत्र यदि स्वल्पान्तरात् ९८ एतन्मूलं १० कल्प्यते तदाऽऽसन्नमूलग्रहणेन

$$न\frac{२}{१}=२स-८\left\{१०-\sqrt{९८+(२स-१९४)}\right\}$$

$$=२स-८\left\{१०—१०-\frac{(२स-१९४)}{२०}\right\}$$

$$=२स+\frac{८}{२०}(२स-१९४)=२स+\frac{(२स-१९४)}{३}$$ स्वल्पान्तरात् ।

अतो 'घ्याहतश्चेद्वेदांकधराधिकः पृथगतो वेदांकभूनाद्गुणात्प्राढ्य' इत्युपपद्यते । ततोऽस्य पदम् $=न+\frac{१}{२}$।अर्धनाडीरहितं नतं भवतीति सर्वमुपपन्नम्।अथ कदेदं कर्म कर्त्तव्यमित्येतदर्थं विचारः। पूर्वं ८ श्लोकोपपत्तौ प्रदर्शिताऽऽस्ति यद्यावन्नतोत्क्रमज्या सप्तनवतिसमा तावदेव घटिकार्ध-युङ्नतकृतेर्द्व्यंशसमा समाख्यैव नतोत्क्रमज्या भवति । अतः $\frac{(न+\frac{१}{२})^२}{२}=स=९७$ ।

छेदगमेन $(न+\frac{१}{२})^२=२स=१९४$ । अतो यावद्द्विगुणसमो वेदाङ्कधराल्पस्तावद्द्विगुणसमस्यैव मूलमर्धनाडीरहितं भवति । वेदांकधराधिके द्विगुणसमे तु 'पृथगतो वेदांकभूनादि' त्यादि कर्म कर्त्तव्यमिति सर्वं निरवद्यम् ॥ १० ॥

**चत्वारिंशदशीतिरद्रिकुभवः क्वक्षेन्दवो भूधृती**
**षट्खाक्षीणि जिनाश्विनोऽङ्कविकृती खाब्ध्यश्विनः सायनात्।**
**खेटाद्दोर्लवदिग्लवप्रमगतोऽङ्कोऽसौ तदूनागता--**
**च्छेषघ्नाद्दशलब्धियुग्दशहृतोंऽशाद्योऽपमःस्यात्स्वदिक्११॥**

**मल्लारिः**—अथ क्रान्तिसाधनमाह । सायनादयनांशयुक्तात् खेटाद् ग्रहाद्दोर्लवा भुजभागास्तेषां दिग्लवो दशमांशः । तेन प्रमः संमितो गतोऽङ्कः स्यात् । ततस्तेन गताङ्केनोनादागतादग्राङ्कात् शेषघ्नात् शेषांशगुणितात् । या दशलब्धिस्तया गताङ्को युग्युक्तः । ततो दशभक्तोऽशांद्यो भागाद्यः स्वदिक् सायनग्रहगोलादिगपमः क्रान्तिः स्यात् । चत्वारिंशत् ४० । अशीतिः ८० । अद्रिकुभुवः सप्तदशाधिकशतम् ११७ । क्वक्षेन्दव एकपञ्चाशदधिकशतम् १५१ ।

भूधृती एकाशीत्याधिकशतम् १८१ । षट्खाक्षीणि षडाधिकशतद्वयं २०६ । जिनाश्विनश्चतुर्विंशत्याधिकशतद्वयम् २२४ । अंगविकृती षट्त्रिंशदधिकशतद्वयम् २३६ । खाब्ध्यश्विनश्चत्वारिंशदधिकशतद्वयम् २४० । एते नवाङ्काः स्युरिति ॥

अत्रोपपत्तिः । ग्रहो यैर्भागैर्विषुवद्वृत्ताद्दक्षिणोत्तरगमनं करोति ते क्रान्त्यंशाः। क्रमणं क्रान्तिः । तस्य अंशा इत्यन्वर्थं नाम । विषुवद्वृत्तं यद्वर्त्तते तन्निरक्षे समं पूर्वापरमित्यर्थः । मेषतुलादिस्थो ग्रहस्तस्मिन् वृत्ते तिष्ठन् भ्रमति । मेषादयः षट् तस्योत्तरार्द्धे तुलादिका दक्षिणा एव । न तु मेषादिषड्राशय उत्तरतश्चैकत्राव-तिष्ठन्तो भ्रमन्तीति । किन्तु मेषादिराशित्रयं यावत् प्रतिक्षणमुत्तरतः क्रमेण चतुर्विंशत्यंशान् यावदहोरात्रवृत्ते परिभ्रमन् गच्छति । ततः परावर्त्त्य राशित्रयं कन्यान्तं यावत्तेनैव मार्गेण पुनस्तदेवविषुवद्वृत्तमाश्रयति एवं तुलादेर्दक्षिणत एव राशित्रयं गत्वा पुनस्तेनैव पथा परावर्त्त्य तदेव विषुवद्वृत्तं मेषादिस्थ एवाश्रयति । एवं भगोले तद्दिक्स्थक्रान्तिरिति परि-भाषा । एवं सूर्यस्य अन्येषां ग्रहनक्षत्राणां च स्वस्वविमण्डलानुगतत्वात् गोलार्द्धयोर्वैपरीत्यसम्भवः स्यादिति । तद्यथा । विषुवद्वृत्तात्क्रान्तिवृत्तं तिरश्चीनं वर्त्तते तयोर्मेषतुलादौ सम्पातद्वयम् । तत्र क्रान्त्यभावः । मकरकर्कटादौ परमं दक्षिणोत्तरं चतुर्विंशत्यंशान्तरं तत्र क्रान्तेः परमत्वम् । एवं तिरश्चीनात् क्रान्ति-मण्डलादपि ग्रहमण्डलं तिरश्चीनं वर्त्तते । तयोः स्वक्षेपपाते सषड्भे च सम्पातौ तस्मात् त्रिभेऽन्तरे परमं विक्षेपांशतुल्यं दक्षिणोत्तरमन्तरं विक्षेपः । एवं पृथग्-ग्रहनक्षत्राणां विमण्डलानि तिरश्चीनानि वर्त्तन्ते तत्क्षेपवशात् तद्गोलान्यत्व-सम्भवः स्यादित्युपपन्नम् । तदुक्तं सिद्धान्तशिरोमणौ ।

नाडिकामण्डलात्तिर्यगेवापमः क्रान्तिवृत्तावधिः क्रान्तिवृत्ताच्छरः ।
क्षेपवृत्तावधिस्तिर्यगेवं स्फुटो नाडिकावृत्तखेटान्तरालेऽपमः ॥

अतः शरसंस्कृतास्पष्टा क्रान्तिः स्यादित्यग्रे आचार्येणाप्युक्तमास्ति। अत्र गुणक-भाजकोपपत्तिर्यथा। यदित्रिज्यातुल्यभुजज्ययापरमक्रान्तिज्या तदेष्टदोर्ज्यया किमिति फलं क्रान्तिज्या तद्धनुः क्रान्तिः स्यात्। अत्राचार्येण लाघवार्थं दशदशभुजभागाना-मनेनैव विधिना क्रान्त्यंशाः साधिताः। ते सावयवा जाताः अतो दशगुणान् कृत्वा पठिताः । ततोऽन्तरेऽनुपातः । यदि दशभिर्भागैरेको लभ्यते तदेष्टांशैःकिमिति । फलमितो गताङ्कः स्यात् । शेषादप्यनुपातः । यदि दशभिर्भागैर्गतैष्यान्तरं लभ्यते तदा शेषांशैः किमिति फलं गताङ्कयुक्तं कार्यं सा क्रान्तिः स्यात् । परं दशगुणा ततो दशभक्तेत्युपपन्नम् ॥ ११ ॥

**विश्वनाथः**—अथ क्रान्तिसाधनमाह। स्युः *खण्डानीति। खवार्धय इत्यादीनि नवखण्डानि स्युः। यथा ४०।४०।३७।३४।३०।२५।१८।१२।४। सूर्यः १।५।५२।४१। अयनांश-१८।१० युक्तः १।२४।२।४१। अस्य भुजांशः ५४।२।४१। दशभिर्भक्तः फलम् ५ गतखण्डकानि ३०। शेषम् ४।२।४१ एष्यखण्डकेन २५ गुणितम् १०१।७।५। दशभिर्भक्तं फलम् १०।६।४२। अनेन गतखण्डयुति-१८१ युक्ता १९१।६।४२। दशभक्ता जाता लवादिक्रान्तिः १९।६।४०। सायनसूर्यस्योत्तरगोलत्वादुत्तरा। अथ प्रकारान्तरेण क्रान्तिसाधनमाह। चत्वारिंशदिति ४०।८०।११७।१५१।१८१।२०६।२२४।२३६।२४०।

अस्योदाहरणम्। सायनसूर्यस्य भुजांशाः ५४।२।४१। दशभक्ताः फलम् ५। एतत्प्रमितगताङ्कः १८१। अनेन एष्याङ्को २०६ रहितः २५। अनेन शेषं ४।२।४१ गुणितं १०१।७।५ दशभिर्भक्तं फलम्। १०।६।४२। अनेन गताङ्को १८१ युक्तः १९१।६।४२। दशहृतोंऽशाद्योऽपमः स एव १९।६।४० ॥ ११ ॥

**सुधाकरः**—दशदशभागवृद्ध्या सायनभुजभागान् प्रकल्प्य 'त्रिज्यया जिनज्या लभ्यते तदेष्टदोर्ज्यया किम्' इत्यनुपातेन क्रांतिज्यां ततस्तच्चापं भागादिकां क्रांतिं विधाय दशगुणाः क्रान्तिभागा अङ्का अत्र पठिताः। तद्यथा। यदा भुजांशाः=१०°। तदा ज्याभु=२१। क्रांतिज्या

$$=\frac{२१\times ४८\frac{३}{४}}{१२०}$$। क्रान्तिभागाद्या$=\frac{१०\times २१\times ४८\frac{३}{४}}{२१\times १२०}=४^{\circ}$ स्वल्पान्तरात्। इयं क्रांतिर्दशगुणा जातः प्रथमोऽङ्कः=४०। एवं सर्वेऽङ्काः उत्पादनीयाः। शेषोपपत्तिः सुगमा ॥ ११ ॥

**षट्पाडिषूदधिटक्कुभिरर्धैः**
**खेटभुजांशदिनांशमितैक्यम्।**
**शेषहतैष्यदिनांशयुतं वा-**
**शाद्यपमः सुखसंव्यवहृत्यै ॥ १२ ॥**

**मल्लारिः**—अथ लाघवार्थं स्थूलक्रान्तिसाधनमाह। एभिरर्धैः खण्डैः कृत्वा खेटस्य सायनग्रहस्य ये भुजांशा भुजभागाः।तेषां यो दिनांशः पञ्चदशांशः। तन्मितं खण्डैक्यं कार्यम्। तच्छेषेण हतं यदेष्यं भोग्यखण्डं तस्य यो

---

* बहुषु पुस्तकेषु—
स्युः खण्डानि खवार्धयोऽम्बरकृताः शैलाग्नयोऽब्ध्यग्नय-
स्त्रिसत्तत्वधृतीनवारिनिधयस्तैः सायनांशग्रहात्।
बाहंशाभ्रकुभागसंख्यकयुतिः शेषैष्यघाताद्दशां-
शाढ्यो दिग्विहृतो लवादिरपमस्तद्दिक्स्वगोलाद्भवेत् ॥
अयं श्लोकश्चोपलभ्यते। विश्वनाथः प्रथमं तमेव विवृणोति।

दिनांश: पञ्चदशांश: तेन युतं तदंशाद्यपमो भागादिः क्रान्तिः । सुखेन संव्यवहृतिर्व्यवहारस्तदर्थं स्यात् ॥

अत्रोपपत्तिः । अत्र तु पञ्चदशभागानां क्रान्तयो भागादिकाः साधिताः । तत्रानुपातः। यदि पञ्चदशभागैरेकं खण्डं तदा भुजभागैः किमिति लब्धं गतखण्डानां योगमिता क्रान्तिः । शेषादनुपातः । पञ्चदशांशैर्यदि भोग्यखण्डं लभ्यते तदा शेषांशैः किमिति फलं गतखण्डयोगे योज्यं क्रान्तिः स्यात् । परं सा स्थूला खण्डभागोनाधिककलापरित्यागादित्युपपन्नम् ॥ १२ ॥

**विश्वनाथः**—अथ लाघवार्थं स्थूलक्रान्तिसाधनमाह । षट्षाडिति । १।२४।२।४१ सायनसूर्यस्य भुजांशाः ५४।२।४१ पञ्चदशभक्ताः फलम् ३ । एतन्मितगतखण्डयोगः १७। एष्यखण्डम् ४। शेषेण ९।२।४१ । गुणितम् ३६।१०।४४। पञ्चदशभिर्भक्तं फलम् ।२।२४।४३। अनेन गतखण्डयुति-१७ युक्ता । अंशाद्यपमो जातः १९।२४।४३। सुखेन संव्यवहृतिर्व्यवहारस्तदर्थं स्यादिति १२

**सुधाकरः**—अत्रोपपत्तिः । पञ्चदशपञ्चदशभागानां सिद्धान्तोक्त्या क्रान्त्यंशानानीय खण्डकानि पठितानीति सुगमा । यथा १५ भागानां लघुखण्डकैर्ज्या=३१ ततः क्रान्तिज्या $= \frac{\text{ज्याजि} \times \text{ज्याभु}}{\text{त्रि}} = \frac{४८ \times ३१}{१२०} = \frac{२ \times ३१}{५}$ । ततःक्रान्त्यंशाः $= \frac{२ \times ३१ \times १०}{५ \times २१} = \frac{१ \times ३१}{५}$ =६ स्वल्पान्तरात् । एवं सर्वाणि खण्डानि साध्यानि । अथ खण्डकैर्भुजांशेभ्यश्च क्रान्त्यानयनम् । यदि १५ भागैरेकं खण्डं तर्हीष्टभुजभागैः कियन्ति । लब्धानि खण्डानि तेषां योगः शेषांशसम्बन्धिफलेन 'पञ्चदशभागैरेष्यखण्डं तर्हि शेषांशैः किमित्यनुपातागतेन युक्ताः क्रान्त्यंशाः स्युरिति सर्वमुपपद्यते ॥ १२ ॥

**ततो दलानि शोधयेत् तिथिघ्नशेषमैष्यहृत् ।**
**तिथिघ्नशुद्धसंख्यया युतं भवन्ति दोर्लवाः ॥ १३ ॥**

**मल्लारिः**--अथानन्तरानीतक्रान्तिभागेभ्यो वैपरीत्येन भुजभागानयनमाह। ततस्तस्मादपमाद्दलानि षडित्यादीनि यावन्ति शुध्यन्ति तावन्ति शोधयेत् । तिथिभिः पञ्चदशभिर्हन्यते गुण्यते यच्छेषं तदैष्येण भोग्यखण्डेन हृद्भक्तं त्रिष्ठं लब्धं तिथिघ्नया पञ्चदशगुणया शुद्धखण्डसंख्यया युतं सद्दोर्लवा भुजभागा भवन्तीत्यर्थः ॥

अत्र विलोमविधिरेव वासना प्रत्यक्षसिद्धाऽस्ति । यद्यनेन प्रकारेण प्रागानीतसूक्ष्मक्रान्तितो दोर्लवाः साध्यन्ते तदा किञ्चित् सान्तरा भवन्ति। अपमखण्डानां स्थूलत्वात् । अतस्तत्रत्यखण्डैर्दोर्लवार्थं व्यस्तविधिना प्रकारान्तरं चिन्त्यम् ।

तद्यथा ।

दशाहतापमात्त्यजेद्दलानि शेषमेष्यहृत् ।
विशुद्धसंख्यया युतं दशाहतं भुजांशका इति ॥ १३ ॥

**विश्वनाथः**—अथ क्रान्तिभागेभ्यो विलोमविधिना भुजभागानयनमाह तत्तो दलानीति । लघुखण्डकैः साधिता क्रान्तिः १९।२४।४३। अस्याः प्रथमखण्डद्वयं १२ शोधितं शेषम् ७।२४।४३। अस्मात् तृतीयखण्डं ५ शोधितं शेषम् २।२४।४३। तिथिघ्नम् ३६।१०।४५। एष्यखण्डकेन ४ भक्तं फलम् ९।२।४१। शुद्धखण्डसंख्या ३ तिथिघ्नी ४५। अनया लब्धं युतं जाताः सूर्यस्य भुजभागाः ५४।२।४१॥ १३ ॥

सुधाकरः—क्रान्त्यानयनविपरीतक्रिययाऽस्योपपत्तिरतिसुगमा ॥ १३ ॥

**द्युदलतिथिवियोगस्तद्विनाड्यश्चरं स्या-**
**दथ निजगजभागोपेतमक्षप्रभाप्तम्।**
**दिनकृदपमभागास्तत्त्वलिप्तायुताः स्यु-**
**र्द्युदलकृशपृथुत्वे ते क्रमाद्याम्यसौम्याः ॥ १४ ॥**

**मल्लारिः**—अथ रवेरज्ञाने दिनमानादेव क्रान्तिसाधनं स्थूलं स्वयुक्तिदर्शनार्थमाह। द्युदलं दिनार्धं तिथयः पञ्चदश तयोर्वियोगः षष्टिगुणश्चरपलानि स्युः। तच्चरं निजेन स्वीयेन गजभागेनाष्टांशेनोपेतं युक्तम् । ततोऽक्षप्रभयाऽऽप्तं भक्तं ते दिनकृतः सूर्यस्यापमस्य क्रान्तेर्भागाः स्युः । ते तत्त्वकलाभिः पञ्चविंशतिकलाभिर्युक्ताः कार्याः।द्युदलस्य पञ्चदशघटिकाभ्यो न्यूनाधिकत्वे क्रमाद्याम्यसौम्याः। कृशत्वे याम्याः। अधिकत्वे सौम्या इत्यर्थः ॥

अत्रोपपत्तिः। दिनार्धपञ्चदशान्तरं पलीकृतं चरपलानि स्युः। एवं चरपलानि पञ्चभक्तानि चरज्येति युक्तिः पूर्वं प्रतिपादिताऽस्ति । ततस्त्रिज्यावृत्ते इयं चरज्या तदा द्युज्यावृत्ते का लब्धं कुज्या। अत्र द्युज्या स्थूलत्वात् सार्धद्वादशाधिकशतमिता धृता। एवं पलभाभुजे द्वादशकोटिस्तदा कुज्याभुजे का कोटिरिति जाता क्रान्तिज्या। तदनुःकरणार्थं द्वौ हरः स्थूलत्वादङ्गीकृतः । एवं चरपलानां जातो गुणघातो गुणः १२५०। हरघातो हरः १२००। पलभाहरस्तु वर्त्तत एव। गुणहरौ खतिथिभि-१५० रपवर्त्तितौ गुणस्थाने जाताः ९।हरस्थानेऽष्टौ८। यो राशिर्नवभिर्गुण्यतेऽष्टभिर्भज्यते स स्वाष्टांशयुक्त एव भवति। अत उक्तं चरं निजगजभागोपेतमक्षप्रभाप्तमिति। सा स्थूला क्रान्तिरतः पञ्चविंशतिकलायुक्ता सती सूक्ष्मासन्ना दृष्टा। दक्षिणोत्तरोपपत्तिर्यथा। दिनदलं दक्षिणगोले पञ्चदशघटिका

भ्यो न्यूनमस्त्यतः कुशे याम्या । उत्तरगोले दिनदलं पञ्चदशाधिकमतः पृथुत्वे सौम्या इत्युपपन्नम् ॥ १४ ॥

**विश्वनाथः**—अथ सूर्यं विना स्वयुक्तिदर्शनार्थं दिनार्धात् स्थूलं क्रान्तिसाधनमाह । द्युदलोत्त । दिनार्धम् १६।३३। तिथयः १५। अनयोरन्तरम् १।३३। षष्टिघ्नं जातं पलात्मकं चरम् ९३। इदं स्वर्कीयेन गजभागेन ११।३७।३० युतम् १०४।३७।३०। अक्षप्रभया ५।४५ भक्तं सवर्णितौ भाज्य-३७६६५० भाजकौ २०७०० भजनाल्लब्धं भागाः १८।११।४४। एते पञ्चविंशतिकलाभिर्युक्ता जाताः सूर्यस्य क्रान्तिभागाः १८।३६।४४। द्युदलकुशपृथुत्वे क्रमाद्याम्यसौम्या भवन्ति । तद्यथा पञ्चदशघटिकाभ्यो दिनार्धे न्यूने सति दक्षिणाः । अधिके उत्तरा ज्ञेयाः । एते क्रान्तिभागा द्युदलस्य पञ्चदशभ्योऽधिकत्वादुत्तरा जाताः ॥ १४ ॥

**सुधाकरः**—दिनार्धानयनवैपरीत्येन द्युदलपञ्चदशवियोगो घट्यात्मकं चरं स्यात् । पलात्मकचरज्ञानार्थं तद्विनाघ्न्यः कार्या इति । अथ मानीयपलात्मकचरात् क्रान्त्यानयनं 'चरज्य-कार्काभिहतित्रिमौर्व्या भक्ते' त्यादिना सिद्धान्तशिरोमणिप्रकारेण ।

$$\text{ज्याक्रा} = \frac{१२\ \text{ज्याच}}{\sqrt{\text{वि}^२ + \frac{१२^२\ \text{ज्या}^२\text{च}}{\text{त्रि}^२}}} = \frac{१२\ \text{ज्याच}}{\text{वि}\sqrt{१ + \frac{१२^२\text{ज्या}^२\text{च}}{\text{त्रि}^२\text{वि}^२}}}$$

अत्राचार्येण हरस्यासन्नमूलं–वि$\left(१ + \frac{१२^२\text{ज्या}^२\text{च}}{२\ \text{त्रि}^२\text{वि}^२}\right)$ मिदं गृहीतम् । तत्रापि द्वितीयखण्डं $\frac{१२^२\ \text{ज्या}^२\text{च}}{२\text{त्रि}^२\text{वि}}$ इदं रूपाल्पत्वात् त्यक्तं ततो जाता ज्याक्रा $= \frac{१२\ \text{ज्याच}}{\text{वि}}$ ........(१)

अथ पलात्मकं चरम्=च, दशभक्तं तदंशात्मकं चरम्$=\frac{\text{च}}{१०}$। चरस्याल्पत्वात् प्रथमलघुखण्डकेन

$\text{ज्या} = \text{ज्याच} = \frac{२१\ \text{च}}{१०\times१०}$ (·१) समीकरणे एतदुत्थापनेन

$\text{ज्याक्रा} = \frac{१२ \times २१\ \text{च}}{१० \times १० \times \text{वि}}$ । प्रथमलघुखण्डकेन चापं क्रान्तिः $= \frac{१२\times२१\times१०\ \text{च}}{२१\times१०\times१०\times\text{वि}}$

$$= \frac{१२\text{च}}{१०\text{वि}} = \frac{\frac{१२ \times ३}{४}\text{च}}{\frac{१० \times ३}{४}\text{वि}} = \frac{९\ \text{च}}{८\ \text{वि}}$$ स्वल्पान्तरात् ।

आसन्नमूले हरादिके च स्थूलत्वात् तारतम्येन तत्त्वलिप्ताद्युताः कृता इत्युपपन्नं सर्वम् ।

यथा दिङ्नागसत्र्यंशगुणैरित्यादिभास्करविधिना परमं पलात्मकं चरम् $= \frac{६४वि}{३}$ ।
तत आचार्योक्त्या

क्रान्तिः $= \frac{६४ \times ९}{३ \times ८} = ८ \times ३ = २४$ । अत्र तु न तत्त्वलिप्ता युताः कार्याः । एवं पद्ममध्ये

पलात्मकं चरम् = १४ वि । तत्राचार्योक्त्या क्रान्तिः $= \frac{१४ \times ९}{८} = \frac{७ \times ९}{४} = \frac{६३}{४} = १५^{\circ}।४५$

अथ गोलयुक्त्याऽनुपातेन तत्र ज्याक्रा $= \frac{१९५ \times १६९}{४ \times १२० \times २} = \frac{३९ \times १६९}{४ \times २४ \times २} = \frac{१३ \times १६९}{४ \times ८ \times २}$

$= \frac{२१९७}{६४} = ३४ । २०$ । एतच्चापं क्रान्तिः $= १६^{\circ}।४०'$ पूर्वागतां क्रान्तिं विशोध्य शेषम् ५५' ।
अतस्तत्त्वलिप्तापदेन पञ्चविंशतिर्न ग्राह्या किन्तु तत्त्वेन तत्त्वानुसन्धानेन या लिप्ता अन्तररूपा आगच्छेयुस्तास्तारतम्येन योज्या इत्याचार्यस्याभिप्रायकोऽर्थ इति मदीयकल्पनं बुद्धिमद्भिर्भृशं विचिन्त्यम् ।

क्षुदलकर्णाप्रथुत्वे इत्यादिवासनाऽतिसुगमा । यतो दिनार्धेऽल्पे दक्षिणगोलो दिनार्धेऽधिके उत्तरगोल इति सर्वं निरवद्यम् ॥ १४ ॥

**क्रान्त्यक्षजसंस्कृतिर्नतांशास्तद्धीना नवतिःस्युरुन्नतांशाः। दिनमध्यभवास्ततोऽपि येस्युःक्रान्त्यंशालघुखण्डकैः पराख्यः।१५**

**मल्लारिः**---अथ दिनार्धे नतांशोन्नतांशसाधनमाह । ग्रहस्य क्रान्तिः । अक्षांशाः स्वदेशीयाः । एतदुत्पन्ना या संस्कृतिः सा नतांशाः स्युः । अत्रैकदिशोर्योगो भिन्नदिशोरन्तरमिति संस्कृतिः । तैर्नतांशैर्हीना नवतिरुन्नतांशाः स्युः । परं ते दिनमध्यभवा नहीष्टकाले क्रान्त्यक्षसंस्कारो नतांशाः । ततोऽपि तेभ्य उन्नतभागेभ्यो लघुखण्डकैः षडित्यादिभिर्ये क्रान्त्यंशाः स्युस्तेषां पर इति संज्ञा । अत्र पराख्यार्थं या क्रान्तिर्यन्त्रभागानां च क्रान्तिःसा अयनांशान् दत्त्वैव कार्या॥

अस्योपपत्तिः प्रत्यक्षसिद्धास्ति तथाप्युच्यते। विषुवद्वृत्ताद्दक्षिणोत्तरतःपरमक्रान्त्यंशैः क्रान्तिवृत्तं भवति । रवौ क्रान्तिवृत्तं भ्रमति सति द्युरात्रवृत्तं दक्षिणोत्तरवृत्ते दिनार्धे यत्र लग्नं तस्मात्प्रदेशात् खस्वस्तिकपर्यन्तं नतांशाः । खस्वस्तिकात्तैर्भागैर्दिनार्धे सूर्यो वर्त्तत एवेत्यर्थः । दक्षिणोत्तरवृत्तक्षितिजसंयोगाद्दिनार्धे यैर्भागैरुन्नतस्त उन्नतांशाः । स्वद्युरात्रवृत्तविषुवन्मण्डलमध्ये क्रान्त्यंशाः । खस्वस्तिकात् द्युरात्रवृत्तपर्यन्तं नतांशाः।दक्षिणगोले क्रान्त्यक्षांशयोगे कृते सति खस्वस्तिकात् द्युरात्रवृत्तपर्यन्तं दक्षिणा नतांशाः । उत्तरगोले क्रान्त्यक्षयोरन्तरे कृते सति उत्तरा दक्षिणा वा नतांशाः। यदोत्तरक्रान्तिरक्षांशेभ्यो न्यूना तदाऽक्षांशेभ्य

क्रान्तौ शोधितायां दक्षिणतो द्युरात्रवृत्तं नतं स्यात् तदा दक्षिणा नतांशाः । यद्य-धिकास्तदा क्रान्त्यंशेभ्योऽक्षांशेषु शोधितेषु खस्वस्तिकादुत्तरतो द्युरात्रवृत्तं नतं स्यात् । तदोत्तरा नतांशा स्युः । अत उक्तं क्रान्त्यक्षजसंस्कृतिरिति । अत्रोन्नतां-शजीवाया उपयोगोऽस्तीष्टकर्णसाधनार्थम् । अतोऽत्राचार्येण त्रिज्या चतुर्विंशति-मिता धृता । ततः पञ्चदशभागानां खण्डान्युत्पादितानि तानि तु क्रान्तेर्लघु-खण्डान्येव । अत उन्नतांशानां क्रान्तिः कार्येत्युक्तम् । तस्याः परसंज्ञा कृता ॥ १५ ॥

**विश्वनाथः**--अथ खण्डकैर्विना क्रान्तिसाधनमाह ।

सायनखेटभुजांशदशांशोनघ्नधृतिस्तु तले द्विनगाप्ता ७२ ।

लब्धवियुक्सदलाब्धि--४ । ३० हृतोर्ध्वांशाद्यपमो निजगोलककुप्स्यात् ॥

सायनेति । सायनसूर्यस्य भुजांशाः ५४ । २ । ४१ । एषां दशांशः ५ । २४ । १६ । अनेन धृतिः १८ रहिता १२ । ३५ । ४४ । इयं दशांशेन गुणिता ६८ । ४ । १९ । इयं द्विस्था ६८ । ४ । १९ । द्विनगै- ७२ भक्ता फलम् ० । ५६ । ४३ । अनेन सदलाब्धयो ४ । ३० । रहिताः ३ । ३३ । १७ । अनेन पृथक्स्था भक्ताः फलं भागाद्यपम उत्तरः १९ । ८ । ५९ । यत्रकुत्रापि ग्रहस्य क्रान्तिसाधनं तत् प्रथ-मप्रकारेणैव कार्यम् ॥

अथ नतांशपराख्यसाधनमाह ।

क्रान्त्यक्षजसंस्कृतिर्नतांशा मध्यास्तेऽङ्गहृता पृथक् स्वनिघ्नाः ।

युक्ताः पृथगास्थितैर्यमाप्ताः शक्रक्ष्मा ११४ पतिता भवेत् पराख्यः ॥

अत्रैकदिशि योगो भिन्नदिश्यन्तरमिति संस्कृतिर्ज्ञेया । क्रान्तिरुत्तरा १९ । ६ । ४० । अक्षांशा दक्षिणाः २५ । २६ । ४२ । अनयोर्भिन्नदिक्त्वादन्तरे जाता नतांशा दक्षिणाः ६ । २० । २ । एते मध्या मध्याह्नजाः स्युस्ते नतांशाः ६ । २० । षड्भक्ताः फलम् १ । ३ । २० । पृथक् १ । ३ । २० । अस्य वर्गः १ । ६ । ५१ । अयं पृथक्स्थैर्युक्तः २ । १० । ११ । द्वाभ्यां भक्तः फलम् १ । ५ । ५ । अनेन शक्रक्ष्मा ११४ । रहिता जातः पराख्यः ११२ । ५४ । ५५ ॥

अथोन्नतांशपराख्यसाधनमाह । क्रान्त्यक्षजेति । क्रान्त्यक्षजसंस्कारेण जाता नतांशा दक्षिणाः ६ । २० । २ । नतांशैर्हीना नवतिः ९० । जाता उन्नतांशाः ८३ । ३९ । ५८ । एते दिनार्धजाः स्युः । तत उन्नतांशेभ्यो ये क्रान्त्यंशालघुखण्डकैः स पराख्यो भवति । उन्नतांशाः ८३ । ३९ । ५८ । अस्मात् लघुखण्डकैः साधिता क्रान्तिः २३ । २४ । ३९ । अस्याः पराख्या इति संज्ञा ॥

अथ नताद्यन्त्रभागानाह ।

घटीदल-३० युतं नतं तिथिगुणं दिनार्धोद्धृतं

कृतीकृतमिदं पराख्यहृतमाब्धिरुद्रो-११४ द्धृतम् ।
गजाकृति-२२८ युतं यमा-२ हतपरोनितं तत्पदं
रसघ्नमनलोनितं स्युरिति यन्त्रभागा नताः ॥

नतम् ६।३। घटीदल-३० युतम् ६।३३। तिथि-१५ गुणम् ९८।१५। दिनार्धेन १६।३३। भक्तं फलम् ५।५६।११। वर्गीकृतम् ३५।१४।२६। पराख्येन ११२।५४।५५। गुणितम् ३९७९।११।४९। अब्धिरुद्रो--११४ द्धृतम् ३४।५४।१८। गजाकृति-२२८ युतं २६३।५४।१८। द्विगुणितपराख्येन २२५।४९।५० रहितम् ३७।४।२८। अस्य मूलम् ६।५।२०। रस-६ घ्नम् ३६।३२।०। अनलो-३ नितं नता यन्त्रभागाः स्युः ३३।३२।०। यत्र नतसम्बन्धस्तत्र नतांशात्साधितो यः पराख्यः स ग्राह्यः। यत्रोन्नतसंबन्धस्तत्रोन्नतांशात्साधितो यः पराख्यः स ग्राह्यः ॥

अथ यन्त्रभागेभ्यो विलोमविधिना नतसाधनमाह ।
सरामनतभागका रस-६ हृताः फलं वर्गितं
द्विनिघ्नपरयुग्गजाकृति-२२८ वियुग् युगेशा ११४-हतम् ।
परोद्धृतमतः पदं दिनदलघ्नमक्षेन्दु-१५ हृद्
घटीमुखनतं भवेद्विरहितं खरामैः ३०। पलैः ॥

यन्त्रभागाः ३३।३२।०। त्रिभिर्युक्ताः ३६।३२।०। षड्भिर्भक्ताः फलम् ६।५।२०। अस्य वर्गः ।३७।४।२८ । द्विगुणितपराख्येन २२५।४९।५०। युक्तः २६२।५४।१८ । गजाकृतिभी २२८ रहितः ३४।५४।१८। युगेशै-११४ र्गुणितः ३९७९।१०।१२। पराख्येन ११२।५४।५५ भक्तः फलम् ३५।१४।२५। अस्य मूलम् ५।६।१०। दिनार्धेन १६।३३ गुणितं ९८।१५ पञ्चदशभि-१५ र्भक्तं फलम् ६।३३। खरामैः ३० पलै रहितं जातं घटिकादिनतम् ६।३ ॥१५॥

**सुधाकरः**—मध्यनतांशोन्नतांशसाधनं 'पलावलम्बावपमेन संस्कृता' वित्यादिभास्करविधानेन सुगमम् ।

अथ यदि स्वल्पांतरात् खार्कमित-१२० व्यासार्धे जिनज्या=२४×२ तदेष्टभुजज्यासंबन्धिनी क्रान्तिज्या = $\frac{\text{ज्याभु}\times २४\times २}{१२०}$। द्वाभ्यां भक्तेन क्रान्तिः= $\frac{\text{ज्याभु}\times २४}{१२०}$। अथ खार्कमितव्यासार्धे यदि भुजज्या तर्हि चतुर्विंशतिव्यासार्धे केति लब्धा चतुर्विंशतिव्यासार्धे भुजज्या = $\frac{\text{ज्याभु}\times २४}{१२०}$ पूर्वागतक्रान्त्यंशसमा । अतः षट्षडिषूदधि—इत्यादिक्रान्तिखण्डानि पञ्चदशभागवृद्धया भुजांशानां ज्याखण्डानि तेभ्योऽभीष्टभुजांशानां क्रान्त्यंशाश्चतुर्विंशतिव्यासार्धेऽभीष्टभुजांशानां ज्या भव[illegible] पराख्य इति नामनिर्देशः कृतो ग्रन्थकृता ।'ज्याचापकर्मरहित

मिति प्रतिज्ञापालनाय ज्यानामस्थाने वाक्छलेन क्रान्त्यंशा इति नामनिर्देशः कृतः । यथा परशुरामेण दाल्भ्यस्तुतितोषितेन क्षत्रियविध्वंसप्रतिज्ञापालनाय दाल्भ्यशरणं गतायाश्चन्द्रसेनभार्याया गर्भेऽत्या गर्भस्थबालकस्य जातिः कायस्थनाम्ना प्रकटीकृतेति सर्वं पद्मपुराणाद्विद्वद्भिर्विचिन्त्यम् ॥ १५ ॥

**नवतिगुणितमिष्टमुन्नतं द्युदलहृतं फलभागतोऽपमः ।**
**कथितपरगुणस्तदुद्धृता रविनवषट् श्रवणोऽथवा भवेत्॥१६**

**मल्लारिः**—अथान्यथा लाघवेनेष्टकर्णं साधयति । इष्टमुन्नतं घटिकाद्यं नवतिगुणितं द्युदलेन हृतं फलम् यद्भागाद्यं ततोऽपमः क्रान्तिः । सोऽपमः कथितेन पराख्येन गुण्यस्ततस्तेन रविनवषट् उद्धृता भक्ता अथवा प्रकारान्तरेण श्रवण इष्टकर्णो भवतीत्यर्थः ॥

अत्रोपपत्तिः । उन्नतघटिकानां भागकरणार्थमनुपातः । यदि द्युदलघटीभिर्नवत्यंशास्तदेष्टोन्नतघटीभिः किमिति । जाता भागास्तेषां ज्या कार्या । अतोऽपमज्या कृतेति । अत्र ज्या क्रान्तितुल्यैव धृतास्ति । ततोऽन्योऽनुपातः । यदि परसंज्ञोन्नतांशज्याकोटौ त्रिज्या २४ कर्णस्तदा द्वादशकोटौ कः कर्ण एवं द्वादशासिद्धघातो भाज्यः २८८ पराख्यो हारः । एवं जातो दिनार्धकर्णः । अन्योऽप्यनुपातः । यदि त्रिज्यातुल्यया उन्नतघटीज्यया २४। अयं दिनार्धकर्णस्तदेष्टोन्नतघटीज्यया किमिति एवं लब्धमिष्टकर्णः । अत्र व्यस्तत्रैराशिकं यतः सर्वदा दिनार्धकर्णादिष्टकर्णेनाधिकेनैव भवितव्यम् । अतश्चतुर्विंशतिर्गुणः । एवं भाज्याङ्के चतुर्विंशतिगुणे जातः सिद्धो भाज्याङ्कः ६९१२ ।अस्य हरः पराख्य उन्नतघटीजातोऽपमश्च । अतोऽपमः परगुणः । तदुद्धृता रविनवषाडित्युपपन्नम् ॥ १६ ॥

**विश्वनाथः**--अथ प्रकारान्तरेणोन्नतादिष्टकर्णसाधनमाह । नवतिगुणितमिति । इष्टकाले उन्नतं १० । ३० नवत्या ९० गुणितम् ९४५ । ० । दिनार्धेन १६।३३ भक्तं फलं भागाः ५७।९।१५। अस्माल्लघुखण्डकैः क्रान्तिः २० ।१४।२८। कथितपरः २३।३४।२९।अनेन गुणिता क्रान्तिः४७६।५३।१२। अनेन रविनवषट् ६९१२ भक्ताः फलमंगुलाद्यक्षकर्णः १४।२९ । ॥ १६ ॥

**सुधाकरः**—स्वल्पान्तरात् दिनार्धसमोन्नतकाले लग्नरव्यन्तरं नवतिं प्रकल्प्य द्युदलेन नवतिसममन्तरं तदेष्टोन्नतकालेन किमित्यनुपातेनेष्टलग्नरव्यन्तरांशाः साधितास्ततोऽपमश्च तदन्तरज्या




जाता ततः शंक्वानयनार्थं क्षेत्रदर्शनम् । स$_1$खस$_2$=याम्योत्तरवृत्तम् । लरवि=क्रान्तिवृत्तम् । लवि=९०° । खविप=वित्रिभदृङ्मण्डलम् । खरदि=रविदृङ्मण्डलम् । र=इष्टकाले रविः । रदि=शंकुचापम् । पवि=वित्रिभोन्नतांशाः स्वल्पान्तरान्मध्योन्नतांशसमाः । तज्ज्या=परः । लर= पूर्वानुपातागतं लग्नरव्यन्तरं तज्ज्या च=इष्टापमः । ततश्चापजात्येन इष्टशंकुः= $\frac{\text{इअपम}\times\text{पर}}{२४}$

'दृग्ज्यात्रिजीवे रविसंगुणे ते शंकूद्धृते' इत्यादिना छायाकर्णः

$= \frac{२४ \times २४ \times १२}{\text{इअपम} \times \text{पर}} = \frac{६९१२}{\text{इअपम} \times \text{पर}}$ अत उपपन्नं सर्वम् ॥ १६ ॥

**तरणिनवरसाः श्रवोद्धृताः परविहृता अपमो भवेत्ततः।**
**दिनदलगुणिता भुजांशका नवतिहृता अथवेष्टमुन्नतम् ॥१७॥**

**मल्लारिः**--अथ व्यस्तविधिनेष्टकर्णादुन्नतघटिकाज्ञानमाह । तरणिनवरसाः श्रवसा इष्टकर्णेन हृताः। ततस्ते परेणापि हृता लब्धमपमः क्रान्तिर्भवेत् । ततस्ततो दलानि शोधयेदित्यादिना ये भुजांशास्ते दिनदलेन गुणिताः नवतिहृताः। अथ वा इष्टमुन्नतमिष्टोन्नतघटिकाः स्युरित्यर्थः । अत्र विलोमविधिरेव वासना १७

**विश्वनाथः**--अथ विलोमविधिनेष्टकर्णादुन्नतघटीसाधनमाह। तरणीति। तरणिनवरसाः ६९१२ कर्णेन १४ । २९ भक्ताः फलम् ४७७।१४।१७। पराख्येन २३।३४।३९ भक्तम् । सवर्णितौ भाज्य–१७१८०५७भाजकौ ८४८७९। भजनाल्लब्धा क्रान्तिः २० । १४ । २८ । अस्मात्ततो दलानि शोधयेदित्यादिना जाता भुजांशाः ५७।९।१५। एते दिनार्धेन १६।३३ गुणिताः ।९४५।५४ नवति--९० हृताः फलमिष्टोन्नतम् १०।३० ॥ १७ ॥

**सुधाकरः**—पूर्वोपपत्तिवैपरीत्येनास्य वासनातिसुगमा ॥ १७ ॥

**अभिमतयन्त्रलवास्ततोऽपमोऽसौ**
**जिननिघ्नः परहृत्ततो भुजांशाः।**
**द्युदलघ्नाः खनवोद्धृताः कपाले**
**प्राक्पश्चाद्घटिकाः क्रमाद्गतैष्याः ॥ १८ ॥**

**मल्लारिः**--अथ यन्त्रवेधितोन्नतभागेभ्यः कालज्ञान कथयति । अभिमता इष्टा ये यंत्रभागाः स्युः ।ततो योऽपमोऽसौ चतुर्विंशति गुणः। ततः परेण हृत्

यल्लवाद्यं फलं तस्माद्ये भुजभागास्ते द्युदलगुणाः खनवभिर्नवत्या उद्धृता भक्ताः फलं प्राक्कपाले गताः पश्चिम एष्या दिनशेषा घटिकाः स्युरित्यर्थः ॥

अत्रोपपत्तिः। अत्र यन्त्रांशानामपमः पराख्यव्यासार्धान्तस्थितोऽस्ति धनुः करणार्थं त्रिज्याव्यासार्धस्थानीयः कार्यः। अतोऽनुपातः। यदि पराख्ये व्यासार्धेऽयं यन्त्रांशापमस्तदा चतुर्विंशतिमितव्यासार्धे कः।अतो जिननिघ्नः परहृदिति। ततो धनुः करणार्थं भुजांशा इति। घटीज्ञानार्थमनुपातः। यदि नवतिभागैर्द्युदलतुल्याः घटिकास्तदैभिर्भागैः किमिति। अतो द्युदलघ्नाः खनवोद्धृता इति। यद्वा परपर्यायदिनार्धशंकुना जिनतुल्योन्नतघटीज्या लभ्यते तदेष्टयन्त्रापमसमेष्टशंकुना किमिति इष्टोन्नतनाडीजन्यभागज्या भवति तच्चापमिष्टोन्नतनाडीजन्यभागाः। ततो घटीज्ञानं तु द्युदलानुपातेनेति सर्वमवदातम् ॥ १८ ॥

**विश्वनाथः**--अथेष्टयन्त्रजोन्नतांशज्ञाने सति उन्नतकालमाह। अभिमतेति। अभिमतयन्त्रलवानां ५५।४५।४८। लघुखण्डकैः क्रान्तिः१९।५२। १३। जिन०२४ निघ्ना ४७६।५३। १२। पराख्येन २३।३४।३९ भक्ता फलम् २०।१३।३५। अस्माद्भुजांशाः ५७।५।५६। दिनार्धेन १६।३३। गुणिताः ९४५ खनवोद्धृताः फलं पूर्वकपाले जाता गतघटिकाः १०।३०। ॥ १८ ॥

**सुधाकरः**—द्रष्टव्यं १६ श्लोकसंबन्धि क्षेत्रम्। तत्राभीष्टयन्त्रवेधेन रव्युन्नतांशादिरवापसमा उपलब्धास्तेभ्योऽपमश्च चतुर्विंशतिव्यासार्धे तेषामुन्नतांशानां ज्या जाता। ततश्चापजात्यविधिना। रलचापस्य ज्या $= \frac{\text{अपम} \times २४}{\text{पर}}$। ततो भुजांशा रलचापमानम्। ततःपूर्वानुपातवैपरीत्येन यदि लग्नरव्यन्तरेण नवतिमितेन दलसममुन्नतं लभ्यते तर्हीष्टलग्नरव्यन्तरेण किम्। लब्धाः प्राक्पश्चिमकपालयोरुन्नतघटिका इत्युपपन्नम् ॥ १८ ॥

**खाङ्घ्नोन्नतघटिका दिनार्धभक्ता**
**भागाः स्युस्तदपमजांशकाः परघ्नाः।**
**सिद्धाप्ता निगदितवत्ततो भुजांशा--**
**स्तत्काले स्युरिति च यन्त्रजोन्नतांशाः ॥ १९ ॥**

**मल्लारिः**—अथोन्नतघटीभ्यो विलोमेन यन्त्रभागान् कथयति। खाङ्कैर्नवत्या हन्यन्ते गुण्यन्त एवंभूता या उन्नतघटिकास्ता दिनार्धेन भक्ताः सत्यो भागाः स्युस्तेभ्यो भागेभ्यो येऽपमजांशकाः क्रान्त्यंशाः स्युस्ते परेण गुण्याः। ततः सिद्धैश्चतुर्विंशत्या आप्ता भक्ता लब्धं यत् ततो निगदितवद्य भुजांशाः स्युस्ते तस्मिन् काले यन्त्रजा उन्नता अंशा भागाः स्युरित्यर्थः ॥

अत्रोपपत्तिः। पूर्वोक्तवैपरीत्येन सुगमा॥ १९॥

**विश्वनाथः**—अथेष्टोन्नतकालाद्यन्त्रजोन्नतांशानयनमाह। खाङ्केति। उन्नतघटिकाः १०।३०। खाङ्क-९० हताः ९४५।०। दिनार्धेन १६।३३ भक्ताः फलं भागाः ५७।५।१८। अस्माल्लघुखण्डकैः क्रान्तिभागाः २०।१३।३५। पराख्येन २३।३४।३९ गुणिताः ४७६।५३।१२। सिद्धा-२४ प्ताः १९।५२।१३। अतस्ततो दलानि शोधयेदित्यादिना जाता भुजांशाः ५५।४५।४८॥१९॥

**सुधाकरः**—पूर्वोपपत्तिवैपरीत्येनास्य वासना स्फुटा॥१९॥

**यन्त्रलवोत्थक्रान्तिलवाप्ता वस्विभदस्राः २८८ स्यादिह कर्णः। कर्णहतास्ते स्यादपमोऽतो बाहुलवाः स्युर्यन्त्रलवा वा॥२०॥**

**मल्लारिः**—अथ यन्त्रांशेभ्य इष्टकर्णसाधनमिष्टकर्णाद्यन्त्रांशसाधनमेकवृत्तेनाह। यन्त्रलवेभ्य उत्था उत्पन्ना ये क्रान्तिभागास्तैराप्ता भक्ता वस्विभदस्रा इहेष्टकर्णः स्यात्।

अत्रोपपत्तिः। परमक्रान्तिभागाः २४। परमाल्पेन द्वादशतुल्येनेष्टकर्णेन गुणिता जातो भाज्यः २८८। स भाज्यः परमक्रान्त्या यावद्भज्यते तावत्परमाल्पेष्टकर्णो भवति। एवमिष्टयन्त्रभागक्रान्त्या भाज्यमान इष्टकर्णो भवत्येवेति॥

अथ कर्णेन हृता वस्विभदस्रा अपमः क्रान्तिः स्यात्। अतोऽस्याः क्रान्तेर्बाहुभागास्ते वा प्रकारान्तरेण यन्त्रभागाः स्युरित्यर्थः। अत्र व्यस्तविधिरेव वासना२०

**विश्वनाथः**—अथ यन्त्रजोन्नतांशादिष्टकर्णं ततश्च यन्त्रोन्नतांशसाधनमाह। यन्त्रलवोत्थेति। यन्त्रलवानां ५५।४५।४८। लघुखण्डकैः क्रान्तिलवाः १९।५२।१३। अनेन वस्विभदस्रा २८८ भक्ताः फलमंगुलादीष्टकर्णः १४।२९।३८। इष्टकर्णेन १४।२९।३८। वस्विभदस्रा २८८ भक्ताः फलं जातोऽपमः १९।५२।१३। अतस्ततो दलानीत्यादिना भुजांशा जाता यन्त्रोन्नतलवाः:५५।४५।४८॥२०॥

**सुधाकरः**—यन्त्रवेधोपलब्धा य उन्नतलवास्ततःक्रान्तिस्तून्नतलवज्या जाता। ततोऽनुपातः उन्नतलवज्यातुल्यशङ्कुना यदि त्रिज्या कर्णस्तदा द्वादशांगुलशंकुना किम्। जात इष्टकर्णः $= \frac{२४\times१२}{\text{उन्नतलवज्या}} = \frac{२८८}{\text{क्रान्ति}}$। एतद्वैपरीत्येन कर्मणा भाकर्णत उन्नतलवानयनमित्युपपन्नं सर्वम्॥ २०॥

**वृत्ते समभूगते तु केन्द्रस्थितशङ्कोः क्रमशो विशत्यपैति। छायाग्रमिहापरा च पूर्वा ताभ्यां सिद्धतिमेरुदक् च याम्या२१**

**मल्लारिः**—अथ सर्वत्र नालिकाबन्धादिकुण्डमण्डपादिविधौ च दिक्साधनोपयोगोऽस्त्यतो दिक्साधनं कथयति। जलवत्समकितायां भूमौ वृत्तेऽभीष्टकर्क-

टेन कृते सति केन्द्रस्थितस्य वृत्तमध्यस्थस्य शङ्कोर्द्वादशांगुलस्य छायाग्रं क्रमशो विशति इहापरा पश्चिमदिक् । यत्रापैति दिनशेषकाले वृत्ताद्यत्र बहिर्गच्छति तत्र चिह्न पूर्वा दिक्। ताभ्यां पश्चिमपूर्वादिग्भ्यां सिद्धो यस्तिमिर्मत्स्यस्तस्मान्मत्स्यमुख-पुच्छसूत्रादुदगुत्तरा याम्या दक्षिणा स्यात् । एवं यद्दिने त्रिंशन्मितमेव दिनमानं तद्दिवस एवामुना प्रकारेण दिक्साधनमन्यथा तु भुजं विना दिक्साधनं न भवति

अत्रोपपत्तिः । अत्र दिशस्तु प्रतिदेशं भिन्ना न तु प्रतिकालम् । तासां भिन्नत्वे हेतुरुच्यते । यस्मिन् स्थाने सूर्योऽस्ति तदृजुमार्गो हि पूर्वापरा । तत्साधनोपायो यथा । मध्यसूत्रोदयास्तसूत्रयोर्यदन्तरं ज्यारूपं साऽग्रा ततोऽग्रातः शंकुमूलपर्यन्तं यदन्तरं तत् शंकुतलम् । एवमग्राशंकुतलयोर्योगान्तरं भुजः । स भुजो मध्यसूत्राद्यथादिशि देयः सा वै याम्योत्तरा दिक् । तस्मात् मत्स्यात्पूर्वापरेति । अत्र नाडिकामण्डलस्थो ग्रहो यद्दिने भवति तद्दिवस एव दिक्साधनं युक्तमस्ति । यतोऽत्र नाडिकामण्डलस्थे ग्रहे चरज्याक्रान्तिज्याग्राणामभावः अग्राऽभावात् शंकुतलतुल्य एव भुजः स मध्यसूत्राद्देय इत्यत्र यत्र छायाप्रवेशनिर्गमस्थानं तत्रैव भवति यतो हि लघुक्षेत्रे शंकुतलं पलभातुल्यम् । तद्यथा । द्वादशकोटौ पलभा भुजस्तदा शंकुकोटौ क इति जातं शंकुतलं तन्महाशंकुस्थानीयम् । लघुनि छायाक्षेत्रे द्वादशतुल्यैव कोटिः। तत्रत्यकरणायानुपातः।महाशंकुकोटाविदं शंकुतलं तदा द्वादशकोटौ किमिति । एवं शंकुतुल्ययोर्द्वादशतुल्ययोर्गुणहरयोर्नाशे जाता पलभैव । अतश्छायाप्रवेशनिर्गमस्थाने पूर्वापरे तन्मत्स्याद्दक्षिणोत्तरे इति शोभनमुक्तम् ॥ २१ ॥

**विश्वनाथः**—अथ नलिकाबन्धादिकुण्डमण्डपादिविधौ दिक्साधनमाह । वृत्ते समेति । जलादिना समीकृतायां भुवि कृते वृत्ते तत्र केन्द्रस्थशङ्कोर्द्वादशांगुलस्य छायाग्रं यत्र वृत्ते प्राक् कपाले विशति प्रविशति तत्र चिह्नं कार्यं सापरा पश्चिमदिक् स्यात् । अपराह्णे यत्र वृत्तेऽपैति निर्गच्छति सा पूर्वा दिक् भवति । ताभ्यां पूर्वापरचिह्नाभ्यां सिद्धतिमेरुदक् याम्या भवति । एतदुक्तं भवति । पूर्वचिह्नात् परदिक्चिह्नपर्यन्तं वृत्तं कार्यम् । पश्चिमाचिह्नात् पूर्वचिह्नपर्यन्तं वृत्तं कार्यम् । एवं कृते सति मत्स्याकारो दृश्यते मत्स्यमुखपुच्छगता रज्जुर्दक्षिणोत्तरा भवतीत्यर्थः ॥ २१ ॥

**सुधाकरः**— अत्रोपपत्तिस्तु 'वृत्तेऽम्भःसुसमीकृतक्षितिगते' इत्यादिना सुगमात्र क्रान्तिज्यान्तरं प्रवेशनिर्गमकालयोराचार्येण स्वल्पान्तराच्छून्यं कल्पितमिति ॥ २१ ॥

**वार्कक्रान्तिलवाक्षकर्णनिहतिर्भाकर्णनिघ्नी नभोऽक्षाग्न्याप्ता रविदिग्भुजो यमदिशाद्विघ्नाक्षभासंस्कृतः ।**

**केन्द्रे भोत्थवृतौ स पूर्णगुणवद्भाग्रात् प्रदेयो भवेद्**
**याम्योदक् स भुजार्धकेन्द्रनिहितो रज्जुस्तु पूर्वापरा॥२२॥**

**मल्लारिः**—अथ नाडिकामण्डलादन्यत्र यस्मिन् कस्मिंश्चिद्दिवसे दिक्‌साधनार्थं भुजमानयति । वा शब्दः प्रकारान्तरसूची । अर्कस्य ये क्रान्तिलवास्तेषामक्षकर्णस्य च या निहतिः परस्परगुणंन सा भाकर्णेन छायाकर्णेन कर्णः स्यात्पदमर्कभाकृतियुतेरिति साधितेन निघ्नी गुणिता ततो नभोऽक्षाग्निभिः३५०पञ्चाशदधिकशतत्रयेण आप्ता भक्ता सती रविदिक् सूर्यो यस्मिन् गोले वर्त्तते तद्दिग् भुजः स्तात् । स भुजो मध्यमो यमदिशया दक्षिणदिशया द्विघ्नया द्विगुणयाक्षभया संस्कृतः सन् स्फुटो भवति । स भुजः केन्द्रे भोत्थवृतौ छायोत्पादितवृत्ते भाग्रात् छायाग्रात् प्रवेशकालीनाद् वा निर्गमकालीनात् पूर्णगुणवत् यथाशं पूर्णज्या दीयते तद्वद्देयः । भाग्राद्दीयमानभुजमितशलाकाया अग्रं यथा वृत्तपरिधौ लगति तथा देयमित्यर्थः । सा याम्योत्तरा भवति भुजार्धं भुजमध्यः । केन्द्रं वृत्तमध्यम् । अनयोर्मध्ये मिलिता या रज्जुः सा पूर्वापरा ।

अत्रोपपत्तिः। अत्र भुजलक्षणं तु पूर्वमेव प्रतिपादितं तत्साधनं यथा। तत्रादावग्रा साध्यते । कुज्या भुजः । क्रान्तिज्या कोटिः । अग्रा कर्ण इति अक्षक्षेत्रं तथा च पलभा भुजः । द्वादशकोटिः । पलकर्णः कर्ण इति अस्मात्साध्यते ।

तत्रानुपातः । यदि द्वादशकोटौ पलकर्णः कर्णस्तदा क्रान्तिज्या कोटौ कः कर्ण इति अग्रा स्यात् । क्रान्ति। किञ्चिदधिकेन द्वयेन गुणिता क्रान्तिज्या सा पलकर्णगुणा द्वादशभक्ता अग्रा सा त्रिज्याव्यासार्धे ततोऽनुपातः। यदि त्रिज्यावृत्ते इयमग्रा तदा छायाकर्णवृत्ते का ।अतश्छायाकर्णो गुणः। त्रिज्या हरः । तत इयमग्रा द्विगुणा कार्या । यतः सम्पूर्णजीवावत् वृत्तमध्ये भुजो देयोऽस्ति । एवं क्रान्तिः पलकर्णगुणा कार्या ततः सिद्धो गुणद्वयघातो गुणः ४।४। हरघातो हरः १४४०। गुणहरौ गुणेनापवर्त्तितौ लब्धा हरस्थाने ३५० । अत उक्तमर्कक्रान्तिलवाक्षकर्ण निहतिरिति । साग्रा शंकुतलेन संस्कार्या । तत्र लघुक्षेत्रे शंकुतलं पलभातुल्यं तदग्रायां संस्कार्यम् । अग्राया द्विगुणितत्वादिदमपि द्विगुणं कार्यम् । अत उक्तं यमदिशाद्विघ्नाक्षभासंस्कृत इति । स भुजो भाग्राद्दत्तो याम्योदक् स्यात् । भुजस्य द्विगुणत्वाद् भुजमध्यकेन्द्रोपरिनीयमानो रज्जुः पूर्वापरेत्यर्थत एव सिद्धम्॥ २२ ॥

**विश्वनाथः**—अथ प्रकारान्तरेण दिक्‌साधनं भुजसाधनं चाह । वार्केति । वेति प्रकारान्तरम् । सूर्यस्य भाग्रादिक्रान्तिः कार्या तस्या अक्षकर्णस्य च नि-

हतिः परस्परगुणनम् । सा निहतिर्भाकर्णेन इष्टच्छायाकर्णेन निघ्नी गुणिता नभो-ऽक्षाग्निभिः ३५० आप्ता भक्ता फलं रविदिक् सायनसूर्योदगंगुलादिको भुजः स्यात्। स भुजो यमदिशया दक्षिणया द्विगुणया पलभया संस्कृतः । एकदिशि योगो भिन्नदिशि चान्तरं कार्यमित्यर्थः । शेषदिक् भुजोऽसौ स्फुटः स्यात् । स भुजः केन्द्रे भोत्थवृत्तौ पूर्णगुणवत्सम्पूर्णज्यावद् भाग्रात् प्रदेयः । एतदुक्तं भवति । समभुवि केन्द्रे अभीष्टछायापरिमितेन सूत्रेण वृत्तं कार्यं तस्मिन् वृत्ते केन्द्रे शङ्कुर्निवेश्यः। तस्य शङ्कोश्छायाग्रं यत्र वृत्ते लगति तत्र छायाग्रेचिह्नं कार्यम् । तस्मात् चिह्नात् स भुजो याम्यश्चेत्तदा याम्यायां पूर्णगुणवद्देयः। उत्तरश्चेत्तदा भुजेपरिमितैरंगुलैश्छायाग्रात् पूर्णगुणवदुत्तरे देयः । एवं कृते सति यो भुजो भवति सा याम्योदक् दक्षिणोत्तरा ज्ञेया । भुजार्धकेन्द्रमिलिता रज्जुः पूर्वापरा स्यात् । तद्यथा । यो भुजो दत्तस्तस्यार्धात् केन्द्रपर्यन्तं मिलितो रज्जुः पूर्वापरा स्यादित्यर्थः । अस्योदाहरणम् । सूर्यः १।५।४२।३७। गतिः५७।३६। सूर्योदयादिष्टकालः १०। ३०। चालितः सूर्यः १।५।५२।४१। अस्मात् स्युः खण्डानीत्यादिना साधिता क्रान्तिर्भागाद्या उत्तरा १९।६।४०। अक्षकर्णः १३।१९। अनयोराहतिः २५४। २९।४६। इयं भाकर्णेन १४।२५। गुणिता ३६६८।५९।८ नभोऽक्षाग्न्या-३५० प्ता फलं भुजः १०।२८। सायनसूर्यस्योत्तरगोलस्थत्वादुत्तरः । दक्षिणाक्षभया ५।४५। द्विगुणितया ११।३०। संस्कृतो भिन्नादिक्त्वादन्तरे जातः स्पष्टो भुजो दक्षिणः १।२। ॥ २२ ॥

**सुधाकरः**—अत्रादौ 'तत्त्वाश्विनो नन्दसमुद्रवेदा' इत्यादिबृहज्ज्यार्धैर्दशांशानां

$\text{ज्या} = ४४९ + \frac{२२२\times१५०}{२२५} = ४४९+१४८=५९७$ ततोऽनुपातेन खार्क-१२०मितव्यासार्धे

$\text{दशांशज्या} = \frac{५९७\times१२०}{३४३८} = \frac{५९७\times२०}{५७३} = \frac{१९९\times२०}{१९१}$ । अथ दशांशानामियं ज्या तर्ह्ये-

कांशस्य का ज्या – इत्यनुपातेन स्वल्पान्तरादेकांशस्य $\text{ज्या} = \frac{१९९\times२०}{१९९\times१०} = \frac{१९९\times२}{१९१}$

परन्तु $\frac{१९९}{१९१} = १ + \frac{८}{१९१} = १ + \frac{१}{२३ + \frac{७}{८}} = १ + \cfrac{१}{२३ + \cfrac{१}{१ + \cfrac{१}{७}}}$ =पूभि । तत आसन्नमानानि

$\frac{१}{१}, \frac{२४}{२३}, \frac{२५}{२४}$, एते भिन्नांकाः स्वल्पान्तरान्मिथस्तुल्याः पूर्वभिन्नसमाश्च । तेन

पूभि $= \frac{\text{१}}{\text{१}} = \frac{\text{११}}{\text{११}}$ । पूभि $= \frac{\text{२५}}{\text{२४}}$ आभ्यां समच्छेदेन छेदगमेन च

$$\begin{aligned} &\text{११ पूभि} = \text{११} \\ &\text{२४ पूभि} = \text{२५} \\ \text{योगेन} \quad &\text{३५ पूभि} = \text{३६} \end{aligned}$$

ततः पूभि $= \frac{\text{१९९}}{\text{१९१}} = \frac{\text{३६}}{\text{३५}}$ स्वल्पान्तरात् । एतदुत्थापनेन जातैकांशज्या $= \frac{\text{१९९} \times \text{२}}{\text{१९१}}$

$= \frac{\text{३६} \times \text{२}}{\text{३५}} = \frac{\text{७२}}{\text{२५}}$ स्वल्पान्तरात् ।अथैकांशज्या क्रान्तिलवैर्गुणिता स्वल्पन्तरात् खार्कमित-

व्यासार्धे ज्याक्रां $= \frac{\text{७२ क्रां}}{\text{३५}}$ । ततोऽक्षक्षेत्रानुपातेन अग्रा $= \frac{\text{७२क्रां} \times \text{अक}}{\text{३५} \times \text{१२}}$। त्रिभज्याहृता-

ग्रका कर्णनिघ्नीत्यादिना कर्णवृत्ताग्रा $= \frac{\text{७२ क्रां} \times \text{अक} \times \text{भाक}}{\text{१२०} \times \text{३५} \times \text{१२}} = \frac{\text{क्रां} \times \text{अक} \times \text{भाक}}{\text{७००}}$ ।

द्विगुणभुजानयनार्थमियं कर्णवृत्ताग्रा द्विगुणिता जातं द्विगुणफलम् $= \frac{\text{क्रां} \times \text{अक} \times \text{भाक}}{\text{३५०}}$ ।

भाग्रायद्दिक् पूर्वापरा तद्दिग्ज्ञानार्थं कर्णवृत्ताग्रा द्विगुणा व्यस्तगोला न कल्पिता पलभा चापि न सौम्या स्थापिता । तत्र द्विघ्नयमदिक्पलभासंस्कारेण द्विगुणभुजो जातः । छायावृत्ते छाया-ग्राद्द्विगुणभुजे पूर्णज्यावत्स्थापिते पूर्णज्या याम्योत्तरा, केन्द्रात्तदर्धकारिणी रेखा च पूर्वापरेति भुजकोटिसंस्थानत एव भवति–इति सर्वमुपपन्नम् ॥ २२ ॥

**द्युमानखगुणान्तरं शिवगुणं दिनेऽल्पाधिके**
**ह्यपागुदगथानुदग्भवतिथन्त्रभागापमः ।**
**वसुघ्न्युभयसंस्कृतिर्नवतियन्त्रभागान्तरो-**
**द्भवापमहृता ततो भुजलवा दिगंशाः स्मृताः ॥ २३ ॥**

**मल्लारिः**----अथ तुरीययन्त्रात् दिक्साधनार्थं दिगंशान् साधयति । द्युमानं प्रसिद्धम् । खगुणाः त्रिंशत् । अनयोर्यदन्तरं तत् शिवगुणमेकादशगुणितं तत् दिने अल्पाधिके अपाक् उदक् स्यात् । त्रिंशदल्पे दिनमाने दक्षिणमाधिके सति उत्तरं फलं स्यात् । अथ शब्दोऽनन्तरवाची । यन्त्रभागानामपमः क्रान्तिः सदा अनुदक् दक्षिणेति । उभयोर्द्वयोः संस्कृतिः वसुघ्नी अष्टगुणा सती ततो नवति-यन्त्रभागानां च यदन्तरं तदुद्भवस्तस्मादुत्पन्नो योऽपमः । तेन सा हृता । ततः फलाद्ये भुजलवास्ते दिशामंशा दिक्साधनार्थमेतेंशाः स्युरित्यर्थः । एते दिगंशा यन्त्रोत्पन्ना एवेति ।

अत्रोपपत्तिः। अत्र स्वक्षितिजे चक्रांशा अङ्क्याः । ततः पूर्वस्वस्तिकेष्टदिग्विवरे ये भागास्ते दिगंशास्तज्ज्या दिग्ज्या । एवं पश्चिमस्वस्तिकेऽपि । तत्साधनं यथा-। अग्राकर्णवृत्तीया कार्या सा पलभया संस्कार्या स भुजः स्यात्। ततः स त्रिज्यावृत्तीयः कार्यः सा दिग्ज्या भवति । तत्रादावग्रा साध्यते । द्युमानखगुणान्तरं दलितं चरघटिकाः । ततः षष्टिगुणाः पलानि । ततस्तच्चरं नवगुणं पलभाभक्तमष्टभक्तं क्रान्त्यंशा इति युक्तिः पूर्वमुक्तास्ति । एवं द्युमानखगुणान्तरस्य सिद्धो गुणघातो गुणः २७०। अष्टौ पलभा च हरः । सा क्रान्तिश्छायाकर्णगुणा खखाद्रिभक्ता भुजो भवति इत्यग्रे वक्ष्यति । स भुजस्त्रिज्यया गुण्यश्छायया भक्तो दिग्ज्या भवति । एवमत्र छायाकर्णपलकर्णावपि गुणौ खखाद्रीनामष्टानां च घातो हरः ५६०० । चतुर्विंशतिमितत्रिज्या गुणघातगुणा जातो गुणः ६४८०। अत्र छायाकर्णच्छाये साध्ये । यदि शंकुकोटौ त्रिज्याकर्णस्तदा द्वादशकोटौ कः कर्ण इति । तथा च दृग्ज्या भुजो यदि शंकुकोटौ तदा द्वादशकोटौ क इति जाता छाया । एवमत्र छायया भाज्यमाने छायाकर्णेन गुण्यमाने छेदांशविपर्यासे शंकुतुल्ययोस्तथा द्वादशतुल्ययोर्गुणहरयोर्नाशे कृते पूर्वं त्रिज्या गुणो नतांशज्या हरः । अत्र पलकर्णो गुणः पलभा हरोऽस्ति। अत्र पलभा चतुर्मिता कल्पिता स्वल्पान्तरत्वात् त्रिपञ्चपलभयोरपि स्यात् । अन्यत्र ग्रन्थसञ्चारासंभवः । लाघवेन युक्तिदर्शनार्थं स्थूलमङ्गीकृतमतो न दोषाय । एवं चतुर्मितायां पलभायां पलकर्णः १३।३९। अयं पलभया सषडंशत्रय-३।१०गुणितया तुल्या भवति । ततः पलकर्णपलभयोर्गुणहरयोर्नाशे तस्य सषडंशत्रयं गुणः ३।१०एवं सषडंशत्रयचतुर्विंशतिमितात्रिज्याघातेन ७६ गुणितः पूर्वगुणघातो गुणः ४९२४८० । अयं हरः ५६०० । गुणहरौ हरेणापवर्त्य जातो गुणः ८८ । अतोऽत्र द्युमानखगुणान्तरं गुणेनानेन गुण्यं नतांशापमेन भाज्यम् । एवमत्र द्युमानखगुणान्तरं शिवगुणितं कृतम् । अष्टगुणस्य त्यागो यतोऽग्रिमफलस्य शंकुतलाख्यस्य च अष्टौ गुणोऽस्ति नतांशापम एव हरः । अतः फलसंस्कार एवाष्टगुणो नतांशापमभक्त इति वदिष्यति । तद्यथा । अत्रास्यामग्रायां शंकुतलमपि त्रिज्यागुणितं छायया भक्तं संस्कार्यं दिग्ज्या स्यात् । तत्र शंकुतलं पलभा ४ छायया भाज्यमित्यत्रापि छाया साध्या । शंकुकोटौ दृग्ज्या भुजो द्वादशकोटौ क इति जाता छाया।अनया भज्यमाने छेदांशविपर्यासे दृग्ज्या द्वादश च हरः। शंकुः पलभा चतुर्विंशतिमितात्रिज्या च गुणः । अतो गुणघातो गुणः ९६ । गुणहरयोर्गुणेनापवर्तितयोर्जातोगुणः ८। नतांशापमो हरः। इदं फलं सदा दक्षिणम् । पलभाया दक्षिणत्वात् । अतोऽत्र यन्त्रांशापम एव द्युमानखगुणान्तरेण संस्कृतो यत-

स्तस्यापि तौ गुणहरौ वर्तेते अतः फलसंस्कृतेरष्टाभिर्गुण्या नतांशापमेन भाज्ये त्युपपन्नं यन्त्रांशहीननवत्यंशापम एव नतांशापम इति प्रत्यक्षं सिद्धम् । अत्र पूर्वफलस्याग्रासंज्ञस्योत्तरदक्षिणोपपत्तिर्यथा । दक्षिणगोलेऽग्रा दक्षिणा तत्र दिनं त्रिंशदल्पम् । तथोत्तरगोले उत्तराग्रा तत्र दिनं त्रिंशदधिकम् । अतो दिनेऽल्पाधिके अपागुदगित्युपपन्नम् । एवमत्रोत्पन्ना दिग्ज्या तस्या धनुर्दिगंशाः स्युरतो हि ततो भुजलवा दिगंशा इत्युक्तम् ॥ २३ ॥

**विश्वनाथः**—अथ प्रकारान्तरेण दिक्साधनार्थं दिगंशसाधनमाह । द्युमानेति । दिनमानम् ३३।६। खगुणाः ३०। अनयोरन्तरम् ३।६। शिव- ११ गुणम् ३४।६। दिनमानस्य त्रिंशतोऽधिकत्वादुत्तरम् । यन्त्रभागा उत्तराः ५५।४५।४८। एषां यन्त्रभागानामपमः कार्यः । स अनुदक् दक्षिण इत्यर्थः । यन्त्रभागानां ५५।४५।४८। लघुखराडकैः क्रान्तिर्दक्षिणा १९।५२।१३। उभयोः संस्कृतिर्भिन्नदिक्त्वादन्तरम् १४।१३।४७। अष्टभि-८ र्गुणितम् ११३।५०।१६। नवतिः ९०। यन्त्रभागाः५५।४५।४८। अनयोरन्तरम् ३४।१४।१२। अस्य लघुखराडकैः क्रान्तिः१३।२४।४४।अनेन वसुघ्नी भक्ता फलम्८।२९।१५।अस्मात् ततो दलानि शोधयेदित्यादिना साधिता भुजांशा जाता दिगंशाः २१।१३ ॥२३॥

सुधाकरः—चतुरंगुलपलभादेशे दिगंशसाधनम् । तत्र द्युमानखगुणान्तरं घट्यात्मकं द्विगुणचरम् = अं । द्विभक्तं षष्टिगुणं च जातं पलात्मकं चरम् = ३० अं 'द्युदलतिथिवियोगस्तद्विनाड्यश्चरं स्यादित्यादिना रविक्रान्तिलवाः $= \frac{३०\times ९ अं}{८\times वि} = \frac{१३५ अं}{१६}$ । एते लवा लघुखण्डकोत्थैकांशज्यया पूर्वश्लोकोपपत्त्यन्तर्गतया– $\frac{७२}{३५}$ नया गुणिता जाता क्रान्तिज्या

$$= \frac{७२\times १३५ अं}{१६\times ३५} = \frac{९\times २७ अं}{१४}$$ चतुरंगुलपलभायां पलकर्णः$= \sqrt{१२^२+४^२}$

$$= १२\sqrt{१+\frac{१६}{१४४}} = १२\sqrt{१+\frac{१}{९}} = १२\left(१+\frac{१}{२\times ९}-\frac{१}{८\times ८१}\right) =$$

$$१२\left(१+\frac{३५}{८\times ८१}\right) = १२+\frac{३५}{५४} = \frac{६८३}{५४}$$ । ततो द्वादशपलकर्णक्रान्तिज्याभिरक्षक्षेत्रानुपातेन खार्कत्रिज्यायामग्रा $= \frac{९\times २७ अं\times ६८३}{१४\times ५४\times १२} = \frac{३\times ६८३ अं}{८\times १४}$ । ततः परिणत जिनव्यासार्धे अग्रा $= \frac{३\times ६८३\times २४ अं}{१२०\times ८\times १४} = \frac{३\times ६८३ अं}{५\times ८\times १४}$ ।

अथ यन्त्रभागापमश्चतुर्विंशतिव्यासार्धे उन्नतांशज्या शंकुः । ततोऽनुपातेन शंकुतलम्

$= \frac{वि \times शं}{१२} = \frac{४शं}{१२} = \frac{शं}{३}$ । अग्रानृतलयोः संस्कारे जातो भुजः $=$ अग्रा $\pm$ शंत

$= \frac{३ \times ६८३ \text{ अं}}{५ \times ८ \times १४} \pm \frac{शं}{३}$ ततो दृग्ज्यया यद्ययं भुजस्तदा त्रिज्यया क इति चापक्षेत्रानुपातेन

जाता दिग्ज्या $= \frac{त्रि \times भु}{दृग्ज्या} = \frac{२४}{दृग्ज्या}\left( \frac{३ \times ६८३ \text{ अं}}{५ \times ८ \times १४} \pm \frac{\text{अं}}{३} \right) = \frac{८ \times ३}{दृग्ज्या} \times$

$\left( \frac{३ \times ६८३\text{अं}}{५ \times ८ \times १४} \pm \frac{शं}{३} \right) = \frac{८}{दृग्ज्या}\left( \frac{३ \times ३ \times ६८३\text{अं}}{५ \times ८ \times १४} \pm \frac{३शं}{३} \right) = \frac{८}{दृग्ज्या} \times$

$\left( \frac{६१४७\text{अ}}{५६०} \pm शं \right) = \frac{८}{दृग्ज्या}( ११ \text{ अं} \pm शं )$ स्वल्पान्तरात् । ततश्चापं दिग्लवाः ।

खण्डद्वयस्य दिग् गोलयुक्त्या स्फुटेत्युपपन्नम्। अत्र रत्नगिरिनृपतिसमाज्ञया तदीये चतुरंगुलपलभादेशे गणेशदैवज्ञेनानेन प्रकारेण दिगशाः साधिता इति परम्परातो जनश्रुतिः। ततो लेखकाध्यापकाध्येतृदोषैरयं प्रकारस्तदीयग्रहलाघवाख्यकरणमूले निविष्ट इति सुधीभिर्भृशं विचिन्त्यम् ॥ २३ ॥

**समभुवि निहिते तुरीययन्त्रे**
**स्पृशति यथा च दिगंशकाग्रकेन्द्रे ।**
**अवलम्ब*विभोत केन्द्रसंस्थे-**
**षीकाभाथ दिशोऽत्र यन्त्रगाः स्युः ॥ २४ ॥**

**मल्लारिः**—अथ तैर्दिगंशैर्यन्त्रात् कथं दिक्साधनं भवति तदाह । जलवत्समीकृतायां भूमौ तुरीययन्त्रे निहिते सति स्थापिते दिगंशा यावन्तः स्युस्तद्ग्रचिन्हमेव केन्द्रं तस्मिन् अवलम्बकस्य विभा छाया तदुत्थकेन्द्रसंस्थाया ईषीकायाश्छाया यथा स्पृशति तथा यन्त्रे साधिते सति तुरीययंत्रदिगंशकाग्रकेन्द्रोपरि या रज्जुः सा पूर्वापरा । तन्मत्स्याद्याम्योत्तरे भवतः । अत उक्तं यन्त्रगा दिशः स्युरिति ॥ २४ ॥

**विश्वनाथः**--अथ दिगंशेभ्यो दिक्साधनमाह । समभुवीति । जलवत्समीकृतायां भूमौ तुरीययन्त्रे त्रिकोणयन्त्रे निहिते स्थापिते सति पूर्वोक्तदिगंशकान् क्षितिजात् विगणय्य तेषामग्रं तदेव केन्द्रं तस्मिन्नवलम्बस्य विभा छाया अथवा केन्द्रस्थिताया इषीकायाश्छाया यथा स्पृशति तथा यन्त्रे दिशः स्युरेवं स्थापिते यन्त्रे पूर्वापरा स्यात् तस्या याम्योत्तरे भवतः ॥ २४ ॥

**सुधाकरः**—छाया दृक्सूत्रे पतति । अतो दिगंशाङ्किते तुरीये संनिवेशन क्षितिजवत् स्थापिते तत्र यन्त्रगपूर्वापरा वास्तवपूर्वापरा भवत्येव ॥ २४ ॥

क्रान्तिः स्फुटाभिमतकर्णगुणाक्षकर्ण-
निघ्नी खखाद्रि-७०० हृदपक्रमदिग्भुजः स्यात्।
संस्कारितो यमदिशाक्षभया स्फुटोऽसौ
तद्वर्गभाकृतिवियोगपदं च कोटिः ॥२५॥

**मल्लारिः**—अथ नलिकाबन्धनार्थं भुजसाधनमाह। यस्य ग्रहस्य नलिकाबन्धः क्रियते तस्य क्रान्तिः स्वशरेण संस्कृता सती स्पष्टा कार्या सा क्रान्तिरिष्टकर्णेन गुण्या रात्रौ यासु घटीषु नलिकाबन्धः क्रियते तद्घटीभ्यश्छायेष्टकर्णयन्त्रभागग्रहद्युगतादि साध्यम्। तत्साधनमाचार्येणाग्रे प्रोक्तमस्ति। ततः सेष्टकर्णगुणा क्रान्तिरक्षकर्णगुणा सती खखाद्रिहृत्। अपक्रमदिक् स्पष्टक्रान्तेर्या दिक् तद्दिग्भुजो भवति स मध्यमः। यमदिशा दक्षिणदिशा। अक्षभयाऽसौ संस्कृतः स्फुटः स्यात्। तस्य भुजस्य यो वर्गो भायाश्छायाया यो वर्गस्तयोर्वियोगोऽन्तरं तस्य पदं मूलं कोटिः स्यात्। अत्र भुजस्योपपत्तिः पूर्वमेव प्रतिपादितास्ति तत्र द्विगुणः कृतोऽस्ति अत्रैकगुण्योऽतो हरो द्विगुणः पठित एकगुणया पलभया संस्कार्यः॥

अथ कोटेरुपपत्तिः। दक्षिणोत्तरो भुजः। छायैव कर्णः। यतो हि भुजश्छायावृत्तस्थोऽतो दोः कर्णवर्गयोर्विवरान्मूलं कोटिरिति॥ २५॥

**विश्वनाथः**—अथ नृपसभायां स्वकौशल्यदर्शनार्थं नलिकाबन्धार्थं भुजकोटिसाधनमाह। क्रान्तिरिति। यस्य ग्रहस्य नलिकाबन्धः क्रियते स ग्रहो वक्ष्यमाणदृक्कर्मसंस्कृतः कार्यः। तस्य वक्ष्यमाणशरसंस्कृता स्फुटा क्रान्तिः कार्या सा इष्टकर्णेन गुण्या। एतदुक्तं भवति। ग्रहछायाधिकारोक्तप्राग्दृष्टिकर्मखचरेत्यादिना ग्रहस्य दिनगतः कालो भवति। जिनाप्तोक्षाभा इत्यादिना स्फुटचरादिनमानं साध्यम्। ग्रहस्फुटक्रान्तेरुक्तवत् क्रान्त्यक्षजसंस्कृतिरित्यादिनोन्नतपरः कार्यः। ग्रहद्युयातादुक्तवद्यातः शेष इत्यादिनोन्नतं कार्यम्। तस्मादुन्नतात् नवतिगुणितमिष्टमुन्नतमित्यादिनेष्टकर्णस्साध्यः। एवं सिद्धेष्टकर्णेन फुटक्रान्तिर्गुणनीया।

अस्योदाहरणम्। संवत् १६६९ शके १५३४ वैशाखशुक्लपौर्णिमा १५ सोमे सूर्योदयाद्गतघटीषु ५७ भौमस्य नलिकाबन्धः क्रियते। तत्र प्रागानीतः प्रातर्मध्यमो रविः १।४।१३।४२। गतिः ५९।८। भौमः ९।२९।५५।१३। गतिः ३१।२६। इष्टघटीभिः ५७ चालितो रविः १।५।९।५२। भौमः १०।०।२५।४॥

अथ स्पष्टीकरणं रवेर्मन्दकेन्द्रम् १।१२।५०।८। मन्दफलं धनम् ४।२८। ५५।संस्कृतो रविः ११।६।३८।४७। चरमृणम् ९५।संस्कृतः स्पष्टोऽर्कः ११।६।३७। १२। भौमस्य शीघ्रकेन्द्रम् ३।४।४४।४८। शीघ्रफलार्धं धनम् १६।५२।५८। संस्कृतो भौमः १०।१७।१८।२। मन्दकेन्द्रम् ५।१२।४१।५८। मन्दफलं धनम्। ३।११।४५ मन्दफलसंस्कृतो भौमः १०।३।४४।४९। शीघ्रकेन्द्रम् ३।१।२५।३। शीघ्रफलं धनम् ३२।५२।४०। स्पष्टो भौमः ११।६।३७।२९॥

अथ दृक्कर्मसाधनम् । तत्र कुद्वीत्यादिना कर्णः ११।४८।४०। मन्दस्पष्ट-खगादित्यादिना क्रान्तिर्दक्षिणा२३।४४।५९।अंगुलाद्यः शरो दक्षिणः४६।१४।३४ प्राक् त्रिभेण वर्जितेत्यादिना राशित्रयरहिताद्भौमात् ८।६।३७।२९ क्रान्ति-र्दक्षिणा २३।४७।२९। अक्षांशा दक्षिणाः २५।२६।४२। अनयोः संस्कारे जाता नतांशा दक्षिणाः४९।१४।११।*षट्शैलाष्ट इत्यादिना दृक्कर्मकला धनम् ११८। ४४।तत्संस्कृतो भौमः११।८।३६।१३।अस्मात् क्रान्तिर्दक्षिणा ११।७।३०।शरसं-स्कृता जाता स्पष्टा क्रान्तिर्दक्षिणा३।१।३३।इघष्टघ्यः५७ दिनमानम्। ३३।१० रविभोग्यकालः ५९। लग्नम् ०।१५।२३।२१। लग्नभुक्तम् ३० दृक्कर्मदत्तभौमस्य भोग्यकालः १८। + प्राग्दृष्टिकर्म इत्यादिना भौमस्य दिनगतकालः ४।२९। दृक्-कर्मदत्तभौमाच्चरं दक्षिणम् ६। × जिनातोऽक्षभाघ्न इत्यादिना फलं दक्षिणम् ८। स्पष्टं चरं दक्षिणम् १४। दिनमानं २९।३२। स्पष्टक्रान्तेरुक्तवत्क्रान्त्यक्षजसंस्कृ-तिरित्यादिना नतांशाः २८।२८।१५। उन्नतांशाः ६१।३१।४५।अस्मात् पराख्यः २१।१२।१४। ÷ ग्रहद्युयातात् ४।२९। उक्तवद्यातः शेष इत्यादिना उन्नतम् ४।२९। अस्मान्नवतिगुणितमिष्टमुन्नतमित्यादिना इष्टकर्णः साध्यते । उन्नतम् ४।२९। नवत्या ९० गुणितं ४०३।३० दिनार्धेन १४।४६ भक्तं फलं भागाः २७।१९।३७। अस्मात् क्रान्तिः १०।४२।३६। पराख्येन २१।१२।१४ गुणिता २२७।५।३७। अनेन रविनवषड्- ६९१२ भक्ताः फलमिष्टकर्णः ३०।२६। एवं सिद्धेष्टकर्णेन ३०।२६। स्पष्टा क्रान्तिः ३।१।३३। गुणिता ९२।५।१०। अक्षकर्णेन १३।१९ निघ्नी १२२६।१६४८खखाद्रि-७०० हृज्जातो भुजः १।४५।क्रान्तेर्दक्षि-णत्वाद्दक्षिणोऽसौ भुजो दक्षिणाक्षभया ५।४५ । संस्कारितो जातः स्पष्टो भुजः २७।३०। तस्य भुजस्य वर्गः कार्यः । इष्टकर्णात् कर्णार्कवर्गविवरात्

---

* द्रष्टव्योऽस्यैव ग्रन्थस्य ग्रहोदयास्ताधिकारे १७ श्लोकः।

\+ द्रष्टव्योऽस्यैव ग्रन्थस्य ग्रहच्छायाधिकारे १ श्लोकः ।

× द्रष्टव्योऽस्यैव ग्रन्थस्य ग्रहच्छायाधिकारे २ श्लोकः ।

÷ द्रष्टव्योऽस्यैव ग्रन्थस्य ग्रहच्छायाधिकारे ४ श्लोकः ।

पदमित्यादिनेष्टच्छाया कार्या । अस्या वर्गः कार्यः । तयोर्वर्गयोरन्तरात् पदं मूलं सा कोटिः स्यात् । भुजवर्गः ५६।१५। इष्टकर्णः ३०।२६। अस्य वर्गः ९२।६।११ अर्क-१२ वर्गः १४४ । अनयोरन्तरान्मूलं जाता इष्टच्छाया २७।२५। छायावर्गः ७८२।८। भुजवर्गच्छायावर्गयोरन्तरम् ७२५।५३। अस्य मूलं जाता कोटिः २६।१६।०। ॥ २५ ॥

सुधाकरः—२२३लोकेन छायाग्रपूर्वापरसूत्रान्तररूपो द्विगुणभुजः= $\frac{\text{कां}\times\text{अक}\times\text{छाक}}{३५०}\pm$२वि।
अयमर्धितो जातश्छायाग्रात् पूर्वापरसूत्रान्तररूपो भुजः= $\frac{\text{कां}\times\text{अक}\times\text{छाक}}{७००}\pm$ वि । छायाभुजवर्गान्तरपदं पूर्वापरसूत्रे कोटिः 'दिक्सूत्रसम्पातगतस्य शङ्कोश्छायाग्रपूर्वापरसूत्रमध्ये । दोर्दोःप्रभावर्गवियोगमूलं कोटिर्निरात् प्रागपरा ततः स्या'दिति भास्करोक्तेः । अत उपपन्नं सर्वम् ॥ २५ ॥

**ज्ञात्वाऽऽशाः परखेचरे परमुखीं प्राक्खेचरे प्राङ्मुखीं**
**बिन्दोः कोटिमतो भुजं स्वदिशि तन्मध्ये प्रभां विन्यसेत्।**
**बिन्दोर्भाग्रगशंकुमस्तकगते सूत्रे नले खे खगं**
**के बिन्दुस्थनराग्रभाग्रकगते सूत्रे नले लोकयेत् ॥ २६ ॥**

**मल्लारिः**—अथ भुजकोटिकर्णनलिकासंस्थानमाह । आशा दिशो ज्ञात्वा पूर्वोक्तवज्जलसमीकृतभूमौ दिक्साधनं कृत्वा तत्रेष्टकालीनच्छायाव्यासार्धेन वृत्तं कृत्वा तत्र दिक्चिह्नानि कार्याणि।ततो बिन्दोर्वृत्तमध्यात् परखेचरे खमध्यात् पश्चिमकपालस्थे ग्रहे परमुखीं पश्चिमाभिमुखीं कोटिं यथागतां दद्यात् । प्राक्खेचरे पूर्वकपालस्थे ग्रहे प्राङ्मुखीं कोटिं बिन्दोरेव दद्यात् । अतः कोट्यन्तात् स्वदिशि भुजं दद्यात् । छायां विन्यसेत् केन्द्रादारभ्य भुजान्ताग्रपर्यन्तं छाया प्रसार्या स एव कर्णः । एवं जातं त्र्यस्रं क्षेत्रम् ॥

अथ नलिकानिवेशमाह बिन्दोरिति । बिन्दोर्वृत्तमध्याद्भाग्रे गच्छतीति स तथा एवं भूतो यः शंकुः । भुजान्तच्छायान्तसंयोगे द्वादशांगुलः शंकुः स्थाप्यः । तथा केन्द्रे कीलकण्टकादिबद्धं सूत्रं भूलग्नं कृत्वा तत्सूत्रं तच्छङ्कोर्मस्तकोपरि नीत्वा तेनैव ऋजुमार्गेणाप्रादूर्ध्वं नयेत् । तत्र सूत्रे नलो निवेश्यः । तस्य द्वौ वंशौ आधारभूतौ कार्यौ । नलो नामान्तः ससुषिरं वंशनालं तस्मिन् नले यत्कालीनं भुजादि कृतं तद्घटीषु मूलमध्यस्थदृष्ट्या खे आकाशे खगं ग्रहं विलोकयेत् । एवं विलोक्यमाने तस्मिन् नलमध्ये स चेत ग्रहो नावलोक्यते तदा स ग्रहो न

घटते तत्रान्तरमपि लक्ष्यम् । एवमनयैव युक्त्याऽऽचार्येण सर्वग्रहाणां नलिकाबन्धं विधाय अन्तराणि ज्ञात्वा ग्रहसाधनं कृतम् ।

अथ जले ग्रहदर्शनार्थं नलिकानिवेशमाह क इति । उदके ग्रहं विलोकयेत् तद्यथा। अत्र शंकुः केन्द्रे स्थाप्यः।तच्छङ्कग्रात् सूत्रं भाग्रपर्यन्तमधो नयेत्।तत्सूत्रे नलः स्थाप्यः । ततश्छायाग्रस्थाने जलपूर्णपात्रं स्थाप्यम् । तत्र मध्येऽधोदृष्ट्या जले ग्रहो विलोक्यः । अत्रेदं सर्वदिक्साधननलिकानिवेशादि कृत्वा ततस्तस्मिन्नेव काले विलोक्यामिति । उक्तं च सिद्धान्तशिरोमणौ ।

दर्शयेद्दिविचरं दिवि के वाऽनेहसि द्युचरदर्शनयोग्ये ।
पूर्वमेव विरचय्य यथोक्तं रञ्जनाय सुजनस्य नृपस्य ॥

अस्योपपत्तिः । प्रत्यक्षसिद्धार्थत एव ज्ञायते । इदं दिक्साधननलिकाबन्धादि नान्यकरणेष्वस्ति । आचार्येण राज्ञां चमत्कारदर्शनार्थं स्वकृतग्रहघटनार्थं कृतमिति ।

दैवज्ञवर्यस्य दिवाकरस्य सुतेन मल्लारिसमाह्वयेन ।
वृत्तौ कृतायां ग्रहलाघवे त्रिप्रश्नाधिकारः परिपूर्त्तिमागात्।। २६।।

इति श्रीमद्गणेशदैवज्ञकृतग्रहलाघवस्य टीकायां मल्लारिदैवज्ञविरचितायां
लग्नादिच्छायायन्त्रभागादिक्साधननलिकाबन्धाधिकारश्चतुर्थः ।।४।।

**विश्वनाथः**--अथ नलिकबन्धमाह ज्ञात्वेति । आशा दिशो ज्ञात्वा जलवत्समीकृतभूमौ दिक्साधनं कृत्वा तत्रेष्टकालीनच्छायाव्यासार्धेन वृत्तं कृत्वा तत्र दिक्चिह्नानि कार्याणि । ततो बिन्दोर्वृत्तमध्यात् परखेचरे पश्चिमकपालस्थे ग्रहे परमुखीं पश्चिमाभिमुखीं कोटिं न्यसेत् । प्राक्खेचरे पूर्वकपालस्थे ग्रहे प्राङ्मुखीं कोटिं न्यसेत् । कोट्यग्रतः स्वदिशि ज्यावत् भुजकोट्योर्मध्ये तिर्यक् प्रभां छायां न्यसेत् । स एव कर्णः । एवं जातं त्र्यस्रं क्षेत्रम् । बिन्दोर्भाग्रगते सूत्रे नले खे खगं विलोकयेत् । एतदुक्तं भवति । छायाग्रे द्वादशांगुलः शंकुः स्थाप्यः । तस्य मस्तकस्थबिन्दोर्वृत्तमध्यात् गते सूत्रे यष्टिद्वयाभ्यां स्थिरीकृते सूत्रगते नले नलिकायां यत्कालीनं भुजादि कृतं तद्घटीषु मूलस्थदृष्ट्या ;खे आकाशे ग्रहं विलोकयेदित्यर्थः ।

अथ जले ग्रहदर्शनार्थं नलिकानिवेशमाह क इति । बिन्दुस्थनराग्रभाग्रकगते सूत्रे के खगं विलोकयेत् । तद्यथा । यत्र शंकुः स्थाप्यस्तच्छङ्कग्रात् सूत्रं शङ्कग्राच्छायाग्रपर्यन्तमधो नयेत् । तत्सूत्रे नलः स्थाप्यः । तत्र छायाग्रस्थाने जलपूर्णपात्रं स्थाप्यम् । तत्र जलमध्येऽधोदृष्ट्या ग्रहो विलोक्यः । अत्रेदं

सर्वदिक्साधननालिकानिवेशादि कृत्वा ततस्तस्मिन्नेव काले विलोक्यमिति। इदं यथोक्तं विचार्य भुजनस्य नृपस्य रञ्जनाय दर्शयेत् ॥ २६ ॥

इति श्रीदिवाकरदैवज्ञात्मजविश्वनाथदैवज्ञविरचिते ग्रहलाघवस्य लग्नादिच्छायाधिकारोदाहृतिः ॥४॥

**सुधाकरः**—दृक्सूत्र कुत्रापिशंकुमूले गते एकस्मिन् काले तुल्यैव सर्वत्र स्वल्पान्तरात्




छायोपलभ्यत इति तावत् प्रदर्श्यते। कल्प्यते ग्र=ग्रहकेन्द्रम्। यदीयकरवशेन छायोत्पद्यते। मू१ छा१ मू२ छा२ एकैव दृक्सूत्ररूपा रेखा यत्र मू१, मू२, बिन्द्वोः मू१ अ१, मू२ अ२, तुल्यौ शङ्कू स्थापितौ। यदीये छाये च ग्रहकरवशात्। मू१ छा१, मू२ छा२ उत्पन्ने तर्हि ग्रहबिम्बस्य दूरगतत्वाद्यदि स्वल्पान्तरात् अ१ छा१, अ२ छा२, छायाकर्णरूपे रेखे समान्तरे स्यातां तदा <अ१ छा१ मू१=<अ२ छा२ मू२, तथा <मू१ = <मू२ = <समा। मू१ अ१ = मू२ अ२। तेन मू१ अ१ छा१, मू२ अ२ छा२, एते त्रिभुजे मिथः समे जाते तेन मू१ छा१ = मू२ छा२ इति सिद्धयति।

तथा सविस१ जलधरातले यदि ग्र, बिन्दोर्ग्रहकिरणो वि बिन्दौ पतति, वि बिन्दुतः परावर्त्य ग्र१ बिन्दुं याति, तर्हि विग्र१रेखास्थदृष्ट्या वि-बिन्दुगतं ग्र-प्रतिबिम्ब-द्रष्टा पश्यति। वि बिन्दूपरि जलधरातले लम्बश्च विल रेखा पतनपरावर्त्तनरूपाभ्यां ग्रवि, ग्र१ वि किरणाभ्यां समौ कोणौ उत्पादयति, लम्ब-पतन-परावर्त्तनरेखाश्च तिस्र एकस्मिन्नेवधरातले भवन्तीति सर्वं ज्योतिर्विदां स्फुटम्।






यदि वि-बिन्दुर्दिक्सूत्र-सम्पातः। पूविप पूर्वापरा रेखा, तदा यदि वि-बिन्दुगतस्य छाया=विछा, तर्हि तस्मिन्नेव सूत्रे यदि विछा= मू१ वि=मू२ मू१ पूर्वयुक्त्या। तदा मू१ बिन्दुगतस्य तस्यैव शंकोश्छायाग्रं वि-बिन्दुगतं भवति।

तेन मू१ बिन्दुगतशंकुशीर्षोपरि वि-बिन्दुगता रेखा ग्रहबिम्बकेन्द्रं गच्छति, अतस्तत्र स्थापितेन नलकेन खे खगदर्शनं भवति। एवं यदि मू२ बिन्दुगतः शंकुर्भवेत् तदा पूर्वयुक्त्यैव, मू१ बिन्दौ छायाग्रं तेन तत्रस्थे जले ग्रहप्रतिबिम्बम्। परावर्त्तनकरश्च शंकुतुल्यस्य विबिन्दुगतस्य शङ्कन्तरस्य शीर्षोपरि पूर्वयुक्त्या गच्छति। तेन मू१ बिन्दोः, विबिन्दुगतशंकुशीर्षोपरि गते सूत्रे परावर्त्तनकररूपे स्थापितेन नलेनाधोदृष्ट्या मू१ गतजले खगबिम्बदर्शनं भवत्येवेत्युपपन्नं सर्वम् ॥२६॥

इति सुधाकरनिर्मितवासना सकलया कलया कलयासना।
द्युचरकालविधौ परया गता भवलयावलया वलयाऽऽगता॥

इति त्रिप्रश्नाधिकारः समाप्तः ॥४॥

# अथ चन्द्रग्रहणाधिकारः।

**गतगम्यादिनाहतद्युभुक्तेः खरसाप्तांशवियुग्युतो ग्रहः स्यात्।**
**तत्कालभवस्तथाघटीघ्न्याः खरसैर्लब्धकलोनसंयुतः स्यात्॥१॥**

**मल्लारिः**—तत्रेदं चिन्त्यते ननु किं नाम ग्रहणम्। गृह्यतेऽनेनेति ग्रहणं योऽयं ग्रहीतुमिच्छति स तं प्रति यदा गच्छेत् तदैव ग्रहणम्। अतो ग्राह्यग्राहकयोर्योगो ग्रहणम्। योगो नामान्तराभावः। अतो ग्राह्यग्राहकयोरन्तराभावो ग्रहणमिति।

अस्ति ग्रहाणां गतिः षोढा पूर्वापरा याम्योत्तरोर्ध्वाधरा चेति। तत्र किं पूर्वापरयाम्योत्तरोर्ध्वाधरान्तराणामभावो ग्रहणम्। किं वा पूर्वापरयाम्योत्तरान्तराभावो ग्रहणम् किं वा पूर्वापरोर्ध्वाधरान्तराभावो ग्रहणम्। वा पूर्वापरान्तराभावो ग्रहणम्? उत याम्योत्तरान्तराभावो ग्रहणम्। किमुत ऊर्ध्वाधराभावो ग्रहणम्। अत्रोच्यते। ग्रहकक्ष्ययोर्महदन्तरस्य विद्यमानत्वाद्ग्राह्यग्राहकयोरूर्ध्वाधरान्तराभावः कल्पान्तेऽपि न स्यात्। अतः प्रथमतृतीयषष्ठाः पक्षा न सुन्दराः। अथ वक्तव्यं पूर्वापरयाम्योत्तरान्तराभावो ग्रहणमिति साऽपि संज्ञा न घटते यतो हि विद्यमाने शरतुल्ये दक्षिणोत्तरान्तरे ग्रहणं भवत्येव। अनेन हेतुना द्वितीयपञ्चम-

पक्षौ न शोभनौ । अथ वक्तव्यं पूर्वापरान्तराभावो ग्रहणं तत्र प्रतिपर्वाणि ग्राह्यग्राहकयोः पूर्वापरान्तराभावोऽस्त्येव न प्रतिपर्वाणि ग्रहणं भवति । अतो नापि चतुर्थः पक्षः शोभनः । तत्र किं नाम ग्रहणमिति मन्दमतयोऽत्र मुह्यन्ति । अत्रोच्यते । पूर्वापरान्तराभावे मानैक्यखण्डादूने शरे ग्रहणं मानैक्यखण्डतुल्ये शरे बिम्बप्रान्तयोः संयोगमात्रं भवति । यथा यथा मानैक्यखण्डाच्छरो न्यूनो भवति तथा तथा ग्राह्यबिम्बं ग्राहकबिम्बे प्रविशति तावानेव ग्रासः । एवं सत्यपि ऊर्ध्वाधरान्तरे ग्रहणम् । तत्र हेतुः । अस्मदादिदृष्टेरावरणी-भूतत्वं तावद्ग्रहणकर्तृत्वं न तु ग्राह्यग्राहकयोर्बिम्बसंयोगः । अहो आस्तां तावदनेन विचारेण । यतः प्रथमं सूर्यचन्द्रयोर्ग्राह्यग्राहकयोः को वा ग्राहक इति न ज्ञायते । अत्रोच्यते । अत्र सूर्यचन्द्रग्रहणे राहुरेव कारणी-भूतः । यतो राहुर्नाम पातः । पातवशाच्छरः । शरवशादेव ग्रहणमतो ऽवश्यं ग्रहणे राहुर्हेतुभूतः । अत्र 'ग्रहणे कमलासनानुभावात्' । 'राहु-ग्रस्ते दिवाकरे निशाकरे चे'ति स्मृतिवाक्यपर्यालोचनेन च राहुरेव सूर्यचन्द्र-ग्रहणयोर्ग्राहक इति पूर्वः पक्षः । अत्र वयं तु ब्रूमः । ननु राहोर्ग्रहणकर्तृत्वे प्रोच्यमाने राहुणा सूर्यचन्द्रतुल्येन भवितव्यम् । यतः पूर्वापरान्तराभावं विना ग्रहणं वक्तुं न शक्यते । नात्र ग्रहणं राहुणा सह पूर्वापरान्तराभावो दृश्यते नातो ग्रहणे राहोर्ग्राहकत्वमिति सिद्धान्तः । ननु पूर्वपक्षीत्याशङ्कते । अहो भवद्भिः ग्रहणे ग्राह्यग्राहकयोः पूर्वापरान्तराभाव एवोच्यते तदयुक्तम् । यतो यथा ग्रहाणामस्ते भवन्तः कालांशान्तरिते सूर्याद्ग्रहे सति ग्रहास्तादिरिति मन्य-न्ते । तथैवास्माभिः सप्तभिर्द्वादशभिः कालांशैः सूर्यचन्द्राभ्यां यथाक्रममन्तरिते राहौ ग्रहणादिबिम्बसंयोगमात्रं मन्यते कालांशान्तराभावे परमं ग्रहणम् । यथा सूर्यग्रहान्तराभावे परमास्तमय उच्यते । एते कालांशा राहुवशेनैव मानैक्यखण्ड-तुल्यशरादुत्पन्ना युक्तियुक्ता एव सन्ति । अतो राहुणा ग्राहकेण कालांशान्तरितेन सूर्यचन्द्रौ ग्रस्येते इति युक्तिः कथं भवच्चेतो न सहते । एवं चेत् तदाऽस्तेऽपि सूर्यग्रहयोः पूर्वापरान्तराभावमेव वदन्तु भवन्तो न कालांशान्तरे । चेत् तत्र कालांशान्तरमङ्गीक्रियते तर्हि किमनेनापराद्धमिति ग्रहे प्रतिबन्धराहुरेव कारण-मिति युक्तम् । सत्यम् । अहो भवतु राहुर्ग्रहणे कारणं परं तस्य राहोर्ग्राहक-स्य बिम्बसिद्धिः कर्त्तव्या । तद्बिम्बं गगने नावलोक्यते । अत्र तु ऋजुत्रिज्या-मितशलाकाभ्यां बिम्बप्रान्तौ वेध्यौ तन्मध्ये याः कलास्ता बिम्बकलाः । अन-यैव युक्त्या सर्वेषां बिम्बानि साधितानि । अनेन विधिना राहोर्बिम्बं ज्ञातुं नैव शक्यतेऽदर्शनादेव । अतः सति कुड्ये चित्रमिति न्यायात् राहोर्ग्राहकत्वं नैव

सम्भवतीति सिद्धान्तः। अत्रोच्यते। अहो भवद्भी राहुबिम्बसाधनोपायादर्शनान्न तस्य ग्राहकत्वमुच्यते। तद्यथा। राहुश्चन्द्रकक्षायां क्रान्तिमण्डलविमण्डलसम्पातेऽस्ति। तत्र सूर्यग्रहणे सूर्यचन्द्रौ समकलौ। सूर्यात् सम्पातेष्टकालांशान्तर एव राहुः स पुच्छादियुतो मुखपुच्छाकारो वर्त्तते। तस्य मुखं तु क्रान्तिविमण्डलसम्पाते नास्त्येव 'अमृतास्वादवेलायां छिन्नश्चक्रेण विष्णुने'ति स्मृतिवाक्यबलेन राहुमुखं सम्पातात् कालांशान्तरितमस्तीति कल्पनीयमेव। यतो यदाकाशे दृश्यते तदेव गणितेन सिद्धयतीति राहुमुखाभावाद्राहुमुखस्थानाज्ञानात् तस्य मुखहीनशरीरस्य सम्पातसंज्ञं स्थानमङ्गीकृतम्। ततस्तत्सम्पातात् कालांशान्तरे राहुशीर्षं सम्पातात् कालांशान्तरे चन्द्रश्च। सूर्यश्चन्द्रतुल्यः। अतः सूर्यस्य ग्राह्यस्य राहुणा ग्राहकेण सह पूर्वापरान्तराभावोऽप्यस्ति। राहुशीर्षं तु चन्द्रविम्बोपरि तत्समानमेव। एककक्षत्वात् तत्तुल्यत्वाच्च यच्चन्द्रविम्बं श्यामं तदेव सूर्यग्रहणे सूर्यस्यावरणीभूतम्। तथा चन्द्रग्रहणे चन्द्रः षड्भान्तरे सूर्याद् भूछायाऽपि षड्भान्तरेण। चन्द्रभूछाये समाने। चन्द्राद्वृत्तसम्पात इष्टकालांशान्तरे सम्पाताद्राहुशीर्षमपि कालांशान्तरेऽतो राहुशीर्षं भूछायातुल्यम्। अत एव चन्द्रकक्षायां यावती भूछायाविस्तृतिस्तावदेव राहुविम्बम्। अतश्चन्द्रग्रहणेऽपि राहुविम्बं भूभातुल्यं चन्द्रस्यावरणीभूतम्। तयोः पूर्वापरान्तराभावोऽप्यस्ति। अतो विम्बसिद्धिरपि वर्त्तत इति युक्तिबलादागमप्रामाण्याच्च राहुरेवावश्यं ग्रहणद्वयेऽपि कारणीभूतो वक्तव्य इति सिद्धम्। ननु सूर्यग्रहणे चन्द्रविम्बतुल्यं राहुविम्बं भवद्भिरुच्यते चन्द्रग्रहणे भूछायातुल्यं राहुविम्बम्। इदं न घटते यत एककक्षास्थितस्य राहोर्विम्बं कथं महान्तरितम्। चन्द्राविम्बाद् भूछाया तु त्रिगुणितासन्ना। दूरस्थग्रहे विम्बं लघु गतिश्च लघ्वी। समीपस्थे ग्रहे विम्बं पृथु गतिश्च पृथ्वी। तत्र राहोर्गतिः सदा समैव। अतो विम्बलघुमहत्त्वं न स्यादेव।

अथ वक्तव्यं चन्द्रकक्षायां राहुः। यथा चन्द्रस्योर्ध्वाधरगमनेन विम्बलघुमहत्वं तथैव राहोरिति तदप्ययुक्तम्। यतश्चन्द्रविम्बोर्ध्वाधरगमनवशेनैव यदास्य विम्बोनाधिक्यं स्यात् तदा सर्वदा सूर्यग्रहणेऽपि चन्द्रविम्बतुल्यमेव राहुविम्बं नाधिकं स्यात्। कथं चन्द्रग्रहणे भूछायातुल्यं राहुविम्बमुच्यते। अतस्तदसत्। यदि ग्रहणद्वयेऽपि चन्द्रविम्बतुल्यमेव राहुविम्बं वक्तव्यं तदा चन्द्रग्रहणे स्थितिर्महती सूर्यग्रहणे स्थितिर्लघ्वी एवं कथं स्यात्। स्थितिलघुमहत्वं तु प्रत्यक्षं ग्रहणे दृश्यते। अतश्चन्द्रविम्बतुल्यं राहुविम्बं सर्वदा कल्प्यमित्येतदप्यसत्। अन्यच्च। सूर्यग्रहणेऽर्धग्रासे सूर्यविम्बशृंगे तीक्ष्णे चन्द्रग्रहणे शृंगयोः

कुण्ठता दृश्यते। अतो हि छादको ग्रहणद्वये भिन्न एव कल्प्यः। अतोऽपि राहुर्न छादकः। पूर्वं भवद्भिः कालांशान्तरेऽस्तप्रतिबंधग्रहणमिति यदुक्तं तदप्यसत्। यतः सूर्येण स्वतेजसा कालांशान्तरेऽपि ग्रहो निष्प्रभः क्रियते। अत्रस्तत्रैव तस्यास्त इति युक्तम्। अत्र राहुरन्धकाररूपः। अन्धकारो नाम तेजोहानिः। तेजोहान्या कालांशान्तरेण सूर्यचन्द्रावाच्छाद्येते इदं सर्वथाऽलग्नसंबन्धम्। एवं सति गणितयुक्तिबलेन प्रत्यक्षदर्शनतया च राहोर्ग्रहणे ग्राहकत्वं न सम्भवत्येवेति सिद्धान्तः। नन्वेवं चेत् तर्हि वेदाप्रामाण्यप्रसंगः स्यात्। अत्रोच्यते। सूर्यग्रहणे चन्द्रश्छादकश्चन्द्रग्रहणे भूछाया छादिनी। तत्रामायां चन्द्रबिम्बं श्यामं राहुबिम्बमपि श्यामं यद्यपि तत्र न कालांशान्तरे वृत्तसम्पातेऽस्ति तथापि ब्रह्मवरदानाद्ग्रहणकाले तत्र गच्छतीति कल्प्यते। एवं चन्द्रग्रहणेऽपि भूछाया श्यामली राहुबिम्बमपि तथा यद्यपि तत्र न कालांशान्तरे वृत्तसम्पाते ऽस्ति। तथापि वरवशाद्ग्रहणे भूछायान्तर्वर्ती राहुर्भवतीति कल्प्यते आगमभयात्। उक्तं च भास्कराचार्यैः।

सिद्धान्तशिरोमणौ।

दिग्देशकालावरणादिभेदैर्नच्छादको राहुरिति ब्रुवन्ति।
यन्मानिनः केवलगोलविद्यास्तत्संहितावेदपुराणबाह्यम्॥ १॥
राहुः कुभामण्डलगः शशांकं शशांकगश्छादयतीनबिम्बम्।
तमोमयः शम्भुवरप्रदानात् सर्वागमानामविरुद्धमेतत्॥

एवमत्र मुख्यतया सूर्यस्य चन्द्रश्छादकश्चन्द्रस्य भूछाया छादिनीति सिद्धम्। अहो भवद्भी राहोर्ग्रहणकर्तृत्वं कृतं चेत् तदा सूर्यग्रहणे सूर्यबिम्बस्य पश्चिमे स्पर्शः चन्द्रग्रहणे चन्द्रबिम्बस्य पूर्वस्पर्शः भूमेश्छायायां प्रविशति इति कथम्॥

अथ प्रकृतं ग्रहसाधनं तदर्थं पर्वान्तकालीनौ चन्द्रसूर्यौ कार्यावेत्र। राहुरपि कार्यः। यतो राहुं विना शरसिद्धिर्न। अतः पञ्चांगेयावधिस्थितग्रहाणां तद्दिनजकरणार्थं स्थूलमिव तदवधिस्थितां गतिं तद्दिनान्तरे समानामंगीकृत्य ग्रहाणां चालनं वदति तत्स्वल्पान्तरं स्यात्। अतो न दोषाय भवति इति। अथवा सूर्यचन्द्रयोः सूर्यौदयिकयोः पर्वान्तकालीनकरणार्थं चालनमाह। व्याख्या। यद्दिनजो ग्रहस्तद्दिनात् पूर्वकालीनग्रहसाधनार्थं गतदिनानि। अग्रिमकालीनग्रहसाधनार्थं यावन्ति दिनानि तावन्ति गम्यानि। तैर्गतैरथ वा गम्यादिवसैर्ग्रहस्य द्युभुक्तेर्दिनगतैर्गुणिताया ये खरसैः षष्ट्या आप्तांशा लब्धभागास्तैर्वियुग्युतो ग्रहश्चेत् पूर्वं क्रियते तदा हीनः। अग्रिमश्चेत् तदा युक्तः। स तद्दिनजो ग्रहः

स्यात् । तथा इष्टघटीघ्न्या गतेः खरसैर्या लब्धकलास्ताभिर्यथाक्रममूनसंयुतः सन् तत्कालभवो ग्रहो भवतीत्यर्थः ।

अत्रोपपत्तिः । अत्रानुपातो यदि सावनाभिः षष्टिघटीभिर्गतिकला ग्रहः पूर्वगत्या क्रामति तदा इष्टघटीभिः कति कलाः । एवं दिनगुणितायां गतौ कलाः स्युः । षष्ट्या भाज्या भागार्थम् । अत उक्तं गतगम्येत्यादि । धनर्णोपपत्तिः प्रत्यक्षतोऽतिसुगमा ॥ १ ॥

**विश्वनाथः**—तत्र ग्रहाणां तात्कालिककिरणमाह गतगम्येति। यस्मिन् दिवसे ग्रहसाधनं कृतं तस्माद्दिवसात् गतगम्या ये दिवसास्तैराहता गुणिता या द्युभुक्तिर्ग्रहभुक्तिस्तत्सकाशात् खरसैः ६० षष्ट्याप्ता लब्धा येंऽशास्तैर्वियुक् रहितो युक् युक्तो ग्रहः कार्यः । गताश्चेद्दिवसास्तदा रहितः कार्यः । गम्याश्चेद्दिवसास्तदा युक्तः कार्य इत्यर्थः । स ग्रहस्तत्कालभवस्तद्दिनजो ग्रहः स्यात् । तथा गतगम्यघटीघ्न्या गतेः सकाशात् खरसैर्लब्धकलाभिरूनो युक्तः कार्यः स तात्कालिकः स्यादित्यर्थः । अत्र एतावान् विशेषः । चन्द्रसूर्यग्रहणयोर्या पौर्णमासी तथाऽमावास्या पञ्चाङ्गे यावद्घटिकापरिमिताऽस्ति ताभिर्घटीभिर्मध्यमा रविचन्द्रोच्चराहवश्चाल्याः । तदनन्तरं स्पष्टीकरणं कार्यम् । ततो रविचन्द्राभ्यां तिथेर्घटिकाः साध्याः । ताः पञ्चाङ्गस्य घटीमध्ये युक्ता रहिताः कार्याः। तद्यथा। यदा चतुर्दश एकोनत्रिंशद्वा गततिथिरायाति तदा वर्त्तमानपौर्णमास्यां अमावास्यायां यावत्य एष्यघटयः साध्यास्ताः पञ्चांगस्य पर्वघटीमध्ये युक्ताः कार्याः । यदा पञ्चदशतुल्या वा त्रिंशत्तुल्या गततिथिरायाति तदा वर्तमानप्रतिपत्तिथेर्गतघटयः साध्याः । ताः पञ्चांगस्थघटीमध्ये रहिताः कार्याः । स पर्वान्तकालो भवति । एवं या गतगम्या घटय आगतास्ताभिर्ग्रहाणां चालनं देयम् । ते पर्वान्तकालीना भवन्ति ॥

उदाहरणम् । संवत् १६७७ शाक १५४२ मार्गशीर्षशुक्लपौर्णमासीबुधे घटी ३८।११ । रोहिणीनक्षत्रघटी ९।८ । साध्ययोगघटी १०।३६ । अथ चन्द्रपर्वसाधनार्थमहर्गणः ६३६ । चक्रम् ९ । तस्मात् साधितः प्रातर्मध्यमः सूर्यः ८।०।८।५९ । चन्द्रः १।२५।१९।५७ । चन्द्रोच्चम् । १०।३।३७।१ । राहुः ७।२८।२५।२७। तिथिघटीभि- ३८।११ श्चालितो रविः ८।०।४६।३६ । चन्द्रः २।३।४३।४ । उच्चम् १०।३।४१।२० । राहुः ७।२८।२५।२७ । अथ स्पष्टीकरणम् । रवेर्मन्दकेन्द्रम् ६।१७।१३।२४ । मन्दफलमृणम् ० ।३९।४ । मन्दफलसंस्कृतो रविः ८।०।७।३२ । अयनांशाः १८।१८। चरं धनम् ११४। चरसंस्कृतो जातः संस्कृतोऽर्कः ८।०।९।२६। गतिफलं धनम् २।३ । स्पष्टा गतिः

६१।११। फलत्रयसंस्कृतश्चन्द्रः २।३।५६।१८। विधोर्मन्दकेन्द्रम् ७।२९।४५।२ मन्दफलमृणम् ४।२०।१२ । संस्कृतः स्पष्टश्चन्द्रः १।२९।३६।६ गतिफलं धनम् । ३३ ।३० । स्पष्टा गतिः ८२४।५ । आभ्यां गतातिथिः १४ । एष्य-घट्यः २।३७ । आभिः पञ्चांगस्था घटिका ३८।११ युक्ता जातः पर्वान्तः ४०।५८ । आभिरेष्यघटीभि- २।३७ श्चालितः पर्वान्ते जातस्तात्कालिको रविः ८।०।१२।६ । चन्द्रः २।०।१२।१ । राहुः ७।२८।२५।१८ ॥ १ ॥

सुधाकरः—अत्रोपपत्तिरनुपातेनातिसुगमा ॥ १ ॥

**एवं पर्वान्ते विराह्वर्कबाहो-**
**रिन्द्राल्पांशाः सम्भवश्चेद्ग्रहस्य ।**
**तेऽशा निघ्नाः शंकरैः शैलभक्ता**
**व्यग्वर्कांशः स्यात् पृषत्कोऽगुलादिः ॥ २ ॥**

**मल्लारिः**—अथ ग्रहणसम्भवासम्भवज्ञानार्थं पर्वसम्भूतिं कथयति । एवंकृते सति सूर्यचन्द्रौ तु पर्वान्ते समकलौ भवतः ।

उक्तं च सिद्धान्तशिरोमणौ ।

'पूर्णान्तकाले तु समौ लवाद्यैर्दर्शान्तकालेऽवयवैर्ग्रहाद्यः' इति ।

ततः पर्वान्तकालीनराहूनितस्य सूर्यस्य यो बाहुर्भुजस्तस्य भुजभागाश्चेत् इन्द्राल्पांशाश्चतुर्दशाल्पास्तदैव ग्रहस्य ग्रहणस्य सम्भवः स्यादधिकेषु नैव । तत-स्तेऽशा भुजभागाः शङ्करैरेकादशभिर्निघ्ना गुणिताः शैलैः सप्तभिर्भक्ताः सन्त उद्दिष्टं फलं सोऽगुलादिरंगुलपूर्वकः पृषत्कः शरो व्यग्वर्कांशो भवति । राहूनित-सूर्यो यस्मिन् गोले तादृग्भवतीत्यर्थः ।

अत्रोपपत्तिः । अपवृत्ते यद्राशौ भागे कलायां चन्द्रपातो वर्त्तते तं तु विलोमं दत्त्वा तत्र विमण्डलापमण्डलयोः सम्पातो द्वितीयः षड्भान्तरेण द्वयोः सम्पातयोस्त्रिभेऽन्तरे परमविक्षेपतुल्यैर्भागैरपवृत्ताद्विमंडलाद्यर्थमुदग्विदध्यात् तथा द्वितीयं दक्षिणेन । एवंस्थिते चन्द्रपातावपि द्वौ मेषादितः पूर्वगतौ प्रवृत्तौ चन्द्रः शीघ्रत्वादग्रतो याति तत्र यदा पातसमश्चन्द्रो भवति तत्र विक्षेपाभावः । अतो विगतराहुश्चन्द्रः । चन्द्रशरार्थं केन्द्रम् । अत्र तु सूर्यग्रहणे चन्द्रसूर्ययोः समत्वात् राहुणा सूर्य एव हीनः कृतश्चन्द्रग्रहणेऽपि सूर्यचन्द्रयोः षड्भान्तरात् विराहुचन्द्रविराहुसूर्ययोर्भुज साम्यमेव । परमत्र गोलान्यत्वात् शरोऽन्यदिक् स एव परिलेखे प्रयोजकः । अत एवाचार्येण चन्द्रग्रहे व्यस्तदिक् शर इति प्रोक्तम् । तत्र त्रिभे परमः शरः । अतोऽनुपातः । यदि त्रिज्यातुल्यया १२०

विराह्वर्कभुजज्यया परमो नवत्यंगुलतुल्यः शरः ९० तदेष्टदोर्ज्यया किमिति । अत्र भुजभागाः सप्तमिताः प्रकल्पिताः । तेभ्यः साधितः शरः ११ । ततोऽनुपातः । यदि सप्तभिर्भुजभागैर्भवतुल्यः शरस्तदेष्टैः किमिति । अत उक्तं 'तेंऽशा निघ्नाः शङ्करैः शैलभक्ता' इति गोलवशाद्दिग्भवतीत्यर्थेत एव सिद्धम् ।

अथ पूर्वार्धोपपत्तिः । मानैक्यखण्डाधिके शरे ग्रहणाभावः । अतश्चन्द्रभूभाबिम्बे परमगतिप्रमाणेन कृत्वा तयोर्योगार्धं मानैक्यखण्डं कृतम् ।२०।३७। एतावान् शरस्तु चतुर्दशतुल्यभुजभागेभ्य एव भवति । अत इन्द्राल्पांशा यदा तदा ग्रहणमित्युपपन्नम् ॥ २ ॥

**विश्वनाथः**—अथ ग्रहणसम्भवज्ञानं शरसाधनं चाह । एवमिति । पूर्वोक्तप्रकारेण चालितौ चन्द्रार्कौ पर्वान्ते पौर्णमास्यन्ते षड्राश्यन्तरे समांशकलौ भवतः । अमान्ते राश्यंशकलाभिः समौ भवतः ।

उक्तं च सिद्धान्तशिरोमणौ ।

'पूर्णान्तकाले तु समौ लवाद्यैर्दर्शान्तकालेऽत्रयवैर्गृहाद्यैरिति' ।

अत्र पर्वशब्दः पूर्णिमामावास्यावाची ज्ञेयः । तत्र विराह्वर्कबाहोर्लवाः कार्याः । विगतो राहुर्यस्मादसौ विराहुः । स चासावर्कश्च विराह्वर्कः । राहुरर्काच्छोध्य इत्यर्थः । तस्य भुजः कार्यः । भुजस्यांशाः कार्याः । तेऽशाश्चेदिन्द्राल्पाश्चतुर्दशभ्योऽल्पास्तदा ग्रहणस्य सम्भवः स्यात् तदा ग्रहणं भवतीत्यर्थः । एवं चन्द्रग्रहणे । सूर्यग्रहणे तूत्तरगोले भुजांशा इन्द्राल्पा दक्षिणगोलेऽष्टभ्यो न्यूनास्तदाऽर्कग्रहणं भवतीति ज्ञातव्यम् । अग्रे वक्ष्यति । तेंऽशाः शङ्करैरेकादशभिर्निघ्ना गुणिताः । ततस्ते शैलभक्ताः सप्ततष्टाः फलमंगुलानि । शेषं षष्टिगुणं सप्तभक्तं फलं व्यंगुलानि । एवमंगुलादिर्व्यग्वर्काशो व्यग्वर्कस्याशा दिग् यस्य सः । विराह्वर्को यस्मिन् गोले वर्तते तद्दिक् पृथक्कः शरः स्यात् । रविः ८।०।१२।६ । राहुः ।७।२८।२३।१८। विराह्वर्कः०।१।४८।४८। अस्य भुजांशाः १।४८।४८। चतुर्दशभ्यो न्यूना अतः ग्रहणसम्भवः । विराह्वर्कस्य भुजांशाः १।४८।४८।शङ्करै-११ गुणिताः १९।४६। ४८ सप्तभक्ताः फलमंगुलादिशरः २।५० । विराह्वर्कस्योत्तरगोलस्थत्वादुत्तरः ॥ २ ॥

**सुधाकरः**—'सपातसूर्योऽस्य भुजांशका यदा मनूनकाःस्यादग्रहणस्य सम्भव' इति भास्करप्रकारेण इन्द्राल्पांशा इत्युपपद्यते। अत्र राहोश्चक्रशुद्धत्वाद्विराह्वर्कः सपातार्कसमः अथ शरसाधनोपपत्तिः । अत्र विराह्वर्कभुजांशाः सर्वदा मनूनका एवातो भुजांशाः षष्टिगुणाः कलास्तासां जीवा च ३४३८व्यासार्धे तत्कलासमैव स्वल्पान्तराच्चापस्याल्पत्वाच्च।तेन ज्याभु=६० भुअं । ततस्त्रिज्यया २७० परमशरकलास्तदा भुजज्यया किमिति लब्धः कलात्मकः शर

$= \frac{२७० \times ६० \text{ भुअं}}{३४३८} = \frac{३० \times ६० \text{ भुअं}}{३८२} = \frac{३० \times ३० \text{ भुअं}}{१९१}$। अयं त्रिभिर्विहृतो जातोऽङ्गुलात्मकः

शरः $= \frac{३०० \text{ भुअं}}{१९१}$ .............................. (१)

अत्र $\frac{३००}{१९१} = १ + \frac{१०९}{१९१} = १ + \cfrac{१}{१ + \cfrac{१}{१ + \cfrac{१}{३ + \frac{१}{२७}}}}$

अत आसन्नमानानि, $\frac{१}{१}, \frac{२}{१}, \frac{३}{२}, \frac{११}{७}$। एषु सूक्ष्मत्वादाचार्येण–$\frac{११}{७}$ दं मानं गृहीतम् ।( १) अस्मिन्नेतदुत्थापनेन जातोऽङ्गुलात्मकः शरः सपातार्कगोलदिक्कः $\frac{११}{७}$ भुअं । अत उपपन्नम् ॥ २ ॥

**व्यसुशरगतीष्वंशो दिग्युग्भवेद्रुपुरुष्णगो-**
**रथ सितरुचो विम्बं भुक्तिर्युगाचलभाजिता ।**
**तदपि हिमगोर्बिम्बं त्रिघ्नं निजेशलवान्वितं**
**विवसु भवति क्ष्माभाविम्बं किलांगुलपूर्वकम् ॥३॥**

**मल्लारिः**--अथ सूर्यचन्द्रभूछायाविम्बानां साधनं कथयति । विगता असुशराः पञ्चपञ्चाशत् ५५ यस्याः सा तथा एवंभूता या गतिस्तस्या इष्वंशः पञ्चमांशा स दिग्भिर्दशभिर्युग्युक्तः कार्यः । तत् उष्णगोः सूर्यस्य वपुर्बिम्बं स्यात् । अंगुलपूर्वकामिति सर्वबिम्बेषु संयुज्यते ॥

अथ सितरुचश्चन्द्रस्य भुक्तिर्गतिर्युगाचलैश्चतुःसप्तत्या ७४ भाजिता सती चन्द्रविम्बं स्यात् ॥

अथ भूछायां साधयति । तदपि हिमगोश्चन्द्रस्य विम्बं त्रिघ्नं त्रिगुणं ततः निजेन ईशभागेन एकादशांशेन युक्तं । विवसु अष्टोनं सत् क्ष्मायाः भुवो या भा छाया तस्या बिम्बं भूछायाबिम्बं भवतीत्यर्थः ॥

अत्रोपपत्तिः । उच्चस्थितग्रहस्य बिम्बं लघु गतिश्च लघ्वी । तथा नीचसमस्य ग्रहस्य बिम्बं पृथु गतिर्महती । यथायथा गतिर्वर्धते तथा तथा बिम्बमपि वर्धते । यथा हीयते तथाऽपचीयते । अतो गतेर्बिम्बानयनं कर्त्तुं युज्यते ।तद्यथा। यदि दिनगतियोजनैर्गतिकलास्तदा बिम्बयोजनैः किमिति कलादीनि बिम्बानि स्युः । तानि त्रिभक्तान्यंगुलानि । यतोऽत्रांगुलं त्रिकलमेव कल्पितमस्ति ।

अत्राचार्येण लाघवार्थं सूर्यगतिं पञ्चपञ्चाशन्मितां प्रकल्प्य सूर्यबिम्बमंगुलाद्यं साधितम् । तद्यथा। दिनगतियोजनानि पादोनगोक्षधृतिभूमितानि ११८५८।४५। एभिः पञ्चपञ्चाशन्मितायां गतौ भाजितायामेभिः सूर्यबिम्बयोजनै-६५२२ गुणितायां जातं कलाद्यमर्कबिम्बम् ३० । इदं त्रिभक्तं जातमंगुलाद्यम् १० । अथ पञ्चपञ्चाशदधिकस्य गतेः खण्डस्य बिम्बं साध्यं तदत्र योज्यं बिम्बं स्यात्। अत्र गतिखण्डस्य सार्धपञ्चभागो भवति । गतिखण्डस्याल्पत्वात् पञ्चमांश एवाङ्गीकृतः। अतो व्यसुशरगतीष्वंशो दिग्युगित्युपपन्नम् । एवमेव चन्द्रस्य मध्य-गतिप्रमाणेनांगुलाद्यं चन्द्रबिम्बं साधितम् १० । ४० । चन्द्रबिम्बयोजनानि ४८० । अतोऽनुपातः । यदि मध्यगत्या ७९० इदं चन्द्रबिम्बं तदा स्पष्टगत्या किमिति । स्पष्टगतेर्बिम्बं गुणो मध्यगतिर्हरः । गुणहरौ गुणेनापवर्त्तितौ हरस्थाने जाताः ७४ । अतः सितरुचो बिम्बं भुक्तिर्युगाचलभाजितेत्युपपन्नम् ।

अथ भूछायोपपत्तिः । अत्रार्कबिम्बभूव्यासान्तरयोजनानां रविकक्षायां कलाकरणार्थमनुपातः । यदि दिनगतियोजनै-११८५९गतिकला लभ्यन्ते५९।८ तदाऽर्कबिम्बयोजनभूव्यासान्तरयोजनैः ४९४१ किमिति । अतो लाघवार्थं मध्यगतेरेवानीताः कलाः २४ । एतास्त्रिभक्ताः जातानि रविगतिसम्बन्धीनि अंगुलानि ८ ।

अथ भूव्यासस्य चन्द्रकक्षायां कलाकरणायानुपातः । यदि गतियोजनै-११८५९श्चन्द्रगतिकला लभ्यन्ते तदा भूव्यासयोजनैः १५८१ किमिति । अंगुलार्थं त्रीणि हरः ३। चन्द्रगतेर्गुणः १५८१। हरघातो हरो जातः ३५५७७ । गुणहरौ सार्धत्रिवेदैरपवर्त्तितौ ४३ । ३० । जातं गुणस्थाने ३६ । हरस्थाने ८१७ । अत्र खण्डगुणनं विहितम् । प्रथमस्थाने एकादशभिर्गुणहरावपवर्त्तितौ ३ । ७४ । अत्र वेदाद्रिभक्ता चन्द्रगतिश्चन्द्रबिम्बं भवति । अतश्चन्द्रबिम्बं त्रिगुणं पृथक् स्थाप्यम् । द्वितीयस्थानीयो हरश्चतुःसप्तत्या भक्तश्चन्द्रबिम्बस्य गृहीतत्वात् । अतो जातो द्वितीयहरः ११ । गुणकस्त्रिगित एवोभयत्र । अत एव हिमगोर्बिम्बं त्रिनिघ्नं निजेशलवान्वितमिति । तत् सूर्यगतिसम्बन्धिभिरं-गुलैः स्वल्पान्तरै-८ हीनं कार्यम् । यतो भूव्यासाद्यावद्रविबिम्बमधिकं तावत्प्र-माणेनोपर्युपरि गच्छन्त्या भूभाया विस्तृतिरपचयिनी स्यात् । यथा पृथुदीपेऽल्प-वस्तुनश्छायाऽग्रेऽपचीयमाना सूच्यग्रा भवति। अल्पे दीपे पृथुवस्तुनोऽग्रे उपची-यमाना स्थूला भवति । अतो भूव्यासाद्यावदधिकं तेन भूव्यासो हीनः कृत इति ॥ ३ ॥

**विश्वनाथः**--अथ सूर्यचन्द्रबिम्बानयनं भूभानयनं चाह गतिरिति । खररुचः सूर्यस्य गति-६१ । ११ । द्विगुणिता १२२।२२। एकादशभक्ता फल-मंगुलाद्या तनुः सूर्यबिम्बं स्यात् ११ ।७। विधोर्भुक्ति-८२४।५ वेदाद्रिभि-७४ र्भक्ता फलमंगुलाद्यं चन्द्रबिम्बमुदितम् ११। ८ । चन्द्रस्येयं चान्द्री चन्द्रगतिः ८२४।५।नृपाश्वोना ७१६ कृता १०८।५५। लोचनकरै- २२ र्भक्ता फलं४ ।५४ द्वात्रिंशद्भि-३२र्युतम् ३६ । ५४। सूर्यगतिः ६१ । ११ । अस्या नगां-७ शेन ८।४४ अनेन रहिता रदाढ्या जाता भूभा २८ । १० । इदमेव राहु-बिम्बम् ॥ ३ ॥

**सुधाकरः**–' अत्र भानोर्गतिः स्वदशभागयुताऽर्धिता वे'त्यादिभास्करविधिना कलात्मकं रविबिम्बम् $= \frac{\text{११ रग}}{\text{२०}}$ त्रिहृतं जातमंगुलात्मकं बिम्बम् $= \frac{\text{११ रग}}{\text{६०}} = \frac{\text{११(रग−५५+५५)}}{\text{६०}}$

$= \frac{\text{११ (रग−५५)}}{\text{६०}} + \frac{\text{११} \times \text{५५}}{\text{६०}} = \frac{\text{(रग—५५)}}{\text{५}\frac{\text{५}}{\text{११}}} + \frac{\text{६०५}}{\text{६०}} = \frac{\text{( रग−−५५ )}}{\text{५}} + \text{१०}$ स्व-ल्पान्तरादित्युपपन्नम् । रवेः परमं गतिफलम् = २ । १४ 'तत्कोटिजीवा कृतबाणभक्ते,त्या-दि भास्करविधिना । अतः परमाल्पिका रविगतिः ५६ । ५४ ततोऽतोऽल्पा संख्या पंच-पंचाशत् शोधनरूपा समुचितैव सर्वदा धनात्मकशेषत्वात् ।

अथ चन्द्रबिम्बसाधनोपपत्तिः। तत्र भास्करविधिनैव कलात्मकं चन्द्रबिम्बम् $= \frac{\text{३ चग}}{\text{७४}}$ ।

इदं त्रिविहृतं जातमंगुलात्मकं चन्द्रबिम्बम् $= \frac{\text{चग}}{\text{७४}}$ अत उपपन्नम् ।

अथ भूभाबिम्बसाधनोपपत्ति 'भानोर्गतिः शरहता रविभिर्विभक्ता'–इत्यादिना कलात्मकं भूभाबिम्बं त्रिविहृतं जातमंगुलात्मकं भूवि $= \frac{\text{२ चग}}{\text{१५}\times\text{३}} - \frac{\text{५ रग}}{\text{१२}\times\text{३}}$...(१)परन्तु चन्द्रबिम्बसा-धनवैपरीत्येन चग=७४चविं अतो भूवि$= \frac{\text{२} \times \text{७४}}{\text{४५}}$ चविं $- \frac{\text{५ रग}}{\text{३६}} = \frac{\text{१४८}}{\text{४५}}$ चविं $- \frac{\text{५ रग}}{\text{३६}}$

$= (\text{३}\frac{\text{१३}}{\text{४५}})$चविं $- \frac{\text{५ रग}}{\text{३६}} = (\text{३} + \frac{\text{१३} \times \text{३}}{\text{४५} \times \text{३}})$चविं $- \frac{\text{५ रग}}{\text{३६}} = (\text{३} + \frac{\text{१३} \times \text{३}}{\text{१३५}})$ चविं

$- \frac{\text{५ रग}}{\text{३६}} = (\text{३} + \frac{\text{३}}{\text{१०}\frac{\text{५}}{\text{१३}}})$ चविं $- \frac{\text{५ रग}}{\text{३६}} = (\text{३}+\frac{\text{३}}{\text{११}})$ चविं $- \frac{\text{५ रग}}{\text{६६}}$ स्वल्पान्त-रात्। अत्राप्याचार्येण रविगतिर्मध्यमा गृहीता तदांऽगुलात्मकं भूभाबिम्बम्$= (\text{३}\frac{\text{३}}{\text{११}})$चविं

$- \frac{\text{५ (५९।८)}}{\text{३६}} = (\text{३ }\frac{\text{३}}{\text{११}})$ चविं $- \frac{\text{२९५।४०}}{\text{३६}} = (\text{३ }\frac{\text{३}}{\text{११}})$ चविं $-$ ८ स्वल्पान्तरात् ।

अत उपपन्नम् ॥ आचार्योक्तं रविविम्बं भूभाविम्बं चातिस्थूलमुपपत्त्या सिद्धम् । अतः सूक्ष्मार्थं विश्वनाथेन निजोदाहरणेऽन्यत् सूत्रोदाहरणमुपन्यस्तम् ।

तद्यथा ।

'गतिर्द्विघ्नीशाप्तांऽगुलमुखतनुः स्यात् खररुचो .विधोर्भुक्तिवदाद्रिभिरपहृता विम्बमुदितम् । नृपाश्वोना चान्द्री गतिरपहृता लोचनकरै रदाढ्या भूभा स्यार्द्दिनगतिनगांशेन रहिता' ॥

अत्रोपपत्तिः।तत्रभास्करविधिनैवांगुलात्मकंरविबिम्बम् $= \frac{११ \text{ रग}}{६०} = \frac{११\times२ \text{ रग}}{१२०} = \frac{२ \text{ रग}}{११}$ स्वल्पान्तरात् । अत उपपन्नम् । चन्द्रविम्बसाधनं तु पूर्ववदेव । अथ भास्करविधिनैवांगुलात्मकं भूभाविम्बं पूर्वं प्रदर्शितम् च $= \frac{२ \text{ चग}}{४५} - \frac{५ \text{ रग}}{३६} = \frac{२}{४५}(\text{चग}-७१६+७१६) - \frac{५ \text{ रग}}{३६}$

$$= \frac{२}{४५}(\text{चग}-७१६) + \frac{२\times७१६}{४५} - \frac{५ \text{ रग}}{३६} = \frac{२}{४५}(\text{चग}-७१६) + \frac{१४३२}{४५} - \frac{५\text{रग}}{३६}$$

$= \frac{(\text{चग}-७१६)}{२२} + ३२ - \frac{\text{रग}}{७}$ स्वल्पान्तरात् । अत उपपन्नम् ।

चन्द्रस्यं परमं गतिफलम् = ६८।४८ 'तत्कोटिजीवा कृतबाणभक्ते'त्यादिभास्करविधिनैव तेन परमाल्पा चन्द्रगतिः=७९०।३५ – ( ६८।४८ )=७२१।४७ । ततोऽतोऽल्पा संख्या नृपाश्वसमा शोधनार्थं समुचितैव धनात्मकशेषत्वात् । इत्युपपन्नं सर्वम् ॥ ३ ॥

**छादयत्यर्कमिन्दुर्विधुं भूमिभा**
**छादकच्छाद्यमानैक्यखण्डं कुरु ।**
**तच्छरोनं भवेच्छन्नमेतद्यदा**
**ग्राह्यहीनावशिष्टं तु खच्छन्नकम् ॥ ४ ॥**

**मल्लारिः**—अथ मानैक्यखण्डग्रासप्रमाणे साधयति । इन्दुश्चन्द्रोऽर्कं छादयति । अस्मदादिदृष्टेरावरणीभूतो भवति । भूमिभा विधुं चन्द्रमसं छादयति । छादकच्छाद्ययोः सूर्यग्रहणे सूर्यचन्द्रयोश्चन्द्रग्रहणे चन्द्रभूछाययोर्ये माने विम्बे तयोर्यदैक्यं तस्य यत् खण्डमर्धं तत् कुरु तन्मानैक्यखण्डामिति शरेण पूर्वसाधितेन ऊनं रहितं सदूयदवशिष्टं तच्छन्नमंगुलाद्यो ग्रासः स्यात् । चेन्मानैक्यखण्डाच्छरो न निर्गच्छति तदा ग्रहणमपि नास्तीति ज्ञेयम्। ततश्छन्नं यदा ग्राह्येन छाद्यविम्बेन हीनं सदवशिष्टं तदा तु शेषतुल्यः खग्रासो भवति । खच्छन्नमिति यथार्थं नाम यतः सर्वविम्बं ग्रासयित्वाकाशमपि तावद्ग्रासितम् । इदं तु सर्वग्रहण एव भवति ।

अस्योपपत्तिः । रवेर्भार्धान्तरे क्रान्तिवृत्ते भूभा भ्रमति । रवेर्भार्धान्तरे चन्द्रश्च। अतः पौर्णमास्यन्ते भूभाचन्द्रौ समौ भवतः।अतश्चन्द्रस्य भूछाया छा-

दिनी स्यात् । दर्शान्ते चन्द्रादूर्ध्वे रविश्चन्द्रसमोऽतो रवेश्चन्द्रमाश्छादको भवति ।

अथ ग्रासोपपत्तिः । चन्द्रविमण्डलापवृत्तयोः सम्पातश्चन्द्रपातः । तथा तस्मात् षड्भान्तरेऽपि । एवं स्थानद्वये शराभावः। ततस्त्रिभेऽन्तरे परमः शरः। एवंकृते चन्द्रबिम्बमध्यकेन्द्रं विमण्डले सदैव वर्त्तते। सूर्यस्य मण्डलकेन्द्रं क्रान्तिमण्डले । तस्मात् षड्भान्तरे भूछायायाः केन्द्रमपि क्रान्तिमण्डल एव । यदा चन्द्रस्य शराभावस्तदा चन्द्रः क्रान्तिवृत्तमाश्रयति । एवमुभयोरेकमार्गाश्रितत्वान्मण्डलभेदः स्यात्। तदा चन्द्रमण्डलं भूछायां प्रविश्य पूर्वतो निःसृत्य गच्छति तदा सर्वग्रहणं भवति । स्वल्पे शरे ग्रासादिकस्य सम्भवः । उभयोर्मण्डलयोर्योगार्धाधिके शरे ग्रहणाभाव एवमत्र राहोरकारणं परिदृश्यते । उक्तं च । 'दिग्देशकालावरणादिभेदैर्नच्छादक' इति । किन्तु संहितादिषु राहुकृतं ग्रहणमिति प्रसिद्धिः । तत्कारणं लल्लेनोक्तं *'ग्रहणे कमलासनानुभावा'दित्यादि । छाद्यच्छादकयोर्मण्डलमध्यकेन्द्रयोर्विमण्डलापमण्डलस्थयोर्नेमिस्पर्शे उभयोर्मण्डलार्धमेव केन्द्रान्तरं भवति । तावति शरे मण्डलस्पर्श एव । तदूने यावानुभयोः संयोगस्तावान् ग्रास इति ।अधिके मण्डलयोः सम्पर्को न भवत्येव तस्माद्ग्रहणाभावः। छाद्यतुल्ये छन्ने पूर्णग्रहणं तस्माच्छाद्योने छन्नं चाकाशग्रासः खच्छन्नसंज्ञा इति४

**विश्वनाथः**—अथ मानैक्यखण्डं ग्रासानयनं चाह छादयतीति । सूर्यग्रहणे इन्दुश्चन्द्रश्छादयति । चन्द्रग्रहणे भूमिभा विधुं चन्द्रमसं छादयति । लोके तु राहुकृद्ग्रहणमित्यत्र ब्रह्मणो वरप्रदानात् ।

उक्तं च सिद्धान्तशिरोमणौ ।

'राहुः कुभामण्डलगः शशाङ्कं शशाङ्कगश्छादयतीनबिम्बम् ।
तमोमयः शम्भुवरप्रदानात् सर्वागमानामविरुद्धमेतत्-इति, ।

भो गणक ! छादकच्छाद्यमानैक्यखण्डं कुरु । छादयति यः स छादकः। छादयितुं योग्यः स छाद्यः । छादकश्च छाद्यश्च छादकच्छाद्यौ तयोर्बिम्बयोर्मानयोरैक्यं तस्य खण्डमर्धं कार्यमित्यर्थः । चन्द्रग्रहणे छादको भूभा । छाद्यश्चन्द्रः । तयोर्विम्बयोगार्धं चन्द्रग्रहणे मानैक्यखण्डं स्यात् । रविग्रहणे छादकश्चन्द्रः । छाद्यो रविः । तयोर्विम्बयोर्योगार्धं तत् सूर्यग्रहणे मानैक्यखण्डं स्यात् । तन्मानैक्यखण्डं पूर्वोक्तेनांगुलाद्येन शरेण ऊनं रहितं कार्यम् । यदवशिष्टं तच्छन्नमंगुलादिर्ग्रासः स्यात् । यदा मानैक्यखण्डाच्छरो न शुध्यति तदा ग्रहणं नास्तीत्यर्थः

---

* द्रष्टव्यो मन्मुद्रापितशिष्य धीवृद्धिदस्य मिथ्याज्ञानाध्याये ७ श्लोकः ।

सिद्धम् । एतच्छन्नं ग्राह्यबिम्बेन हीनं कृत्वाऽवशिष्टं यत् खण्डं तत् खच्छन्नकं स्यात् । तन्मितः खग्रासो भवतीत्यर्थः । चन्द्रग्रहे ग्राह्यं चन्द्रबिम्बमिति । सूर्यग्रहे सूर्यबिम्बमिति ।

उदाहरणम् । छादको भूभा २८।१०। छाद्यश्चन्द्रबिम्बम् ११।७। अनयोरैक्यम् ३९।१७। अस्यार्धं जातं मानैक्यखण्डम् १९।३८। शरेण २।५० रहितं जातो ग्रासः १६।४८ ग्राह्यबिम्बेन ११।७ छन्नं १६।४८ रहितं जातः खग्रासः ५।४१ ॥ ४ ॥

सुधाकरः—अत्रोपपत्तिः 'यच्छाद्यसंछादकमण्डलैक्यखण्डं शरोनं स्थगितप्रमाणम्' इत्यादिनाऽतिसुगमा ॥ ४ ॥

**मानैक्यखण्डमिषुणा सहितं दशघ्नं**
**छन्नाहतं पदमतः स्वरसांशहीनम् ।**
**ग्लौबिम्बहृत् स्थितिरियं घटिकादिका स्या-**
**न्मर्दं तथा तनुदलान्तरखग्रहाभ्याम् ॥५॥**

**मल्लारिः**----अथ ग्रहणस्य स्थितिसाधनमाह । मानैक्यखण्डमिषुणा शरेण सहितं ततो दशभिर्हन्यते तत् तथा । ततश्छन्नेन ग्रासेन आहतं गुणितम् । अतः पदं मूलं तत् स्वषडंशहीनं चन्द्रबिम्बभक्तं घटिकादिका स्थितिः स्यात् । तथा तनुदलान्तरखग्रहाभ्यां मर्दं स्यात् । तद्यथा । बिम्बार्धान्तरं शरयुक्तं खग्रासगुणम् । अतो मूलं स्वषडंशहीनं चन्द्रबिम्बभक्तं घटिकादिकं मर्दं स्यादित्यर्थः ।

अत्रोपपत्तिः । समायां भुवि अभीष्टव्यासार्धेन वृत्तमालिख्य दिगङ्कं कृत्वा या पूर्वापरा वृत्तरेखा ततः स्वदिशि माध्यग्रहणिकं शरं प्रसार्य तदग्रे बिन्दुः कार्यः । ततस्तदग्रसूत्रस्पृक् पूर्वापरायता रेखा कार्या सा विमण्डलरेखा । ततोऽथ वृत्तरेखामध्ये मध्यं कृत्वा भूभाव्यासार्धेन यद्वृत्तमुत्पद्यते तद्भूभावृत्तम्। ततो विक्षेपाग्रे बिन्दुं मध्यं कृत्वा ग्राह्यबिम्बार्धेन यद्वृत्तमुत्पद्यते तच्चन्द्रवृत्तम् । तच्चन्द्रभूभावृत्तान्तयोः परस्परमनुप्रवेशो ग्रासः । अत्र स्पर्शान्मध्यग्रहणं यावद्येन मार्गेण छादको गच्छति तस्य छादकमार्गस्य प्रमाणं ज्ञातुं त्रिभुजकल्पना कृता। सा यथा। ग्राह्यग्राहकयोरवश्यं मानैक्यार्धतुल्यमन्तरं स एव कर्णः। मध्यग्रहणकालिकः शरः कोटिः । कोटिकृतिं कर्णकृतेर्विशोध्य मूलं पूर्वापरो भुजो भवति। अत्र वर्गान्तरं योगान्तरघातसममतो मानैक्यखण्डशरयोर्योगो मानैक्यखण्डशरान्तरेण गुण्यो वर्गान्तरं भवति । मानैक्यखण्डमिषुणा सहितं छन्नाहतमिति सिद्धम् । ततस्तद्गुणात्मकं जातं कलीकरणार्थं गुणः ३ । ततो घटी

करणार्थमनुपातः। यदि गत्यन्तरकलाभिः षष्टिघटिकास्तदाऽऽभिर्भुजकलाभिः किमिति। फलं स्थित्यर्धघटिकाः। एवं मानैक्यखण्डशरयोगस्य ग्रासगुणस्य पूर्वं गुणः ३। इदानीं षष्टिर्गुणः। एवं जातो गुणघातो गुणः १८०। गत्यन्तरं हरः। गुणहरावष्टषष्ट्या-६८ ऽपवर्त्तितौ जातं गुणस्थाने सावयवं २।३८।२०। हरो गत्यन्तरं यावदष्टषष्ट्या भाज्यते तावच्चन्द्रविम्बमेव हरः। अत्र खण्डगुणनार्थं सषडंशत्रयमितो गुणो धृतः। अत्र मूलं गृहीत्वाऽनेन गुण्यम्। अत्राचार्येणा-३।१० स्य गुणस्य वर्गं कृत्वा-१०ऽनेन वर्ग एव प्रथमं गुणितस्ततो मूलं गृहीतं तुल्यमेव भविष्यति यतो 'वर्गेण वर्गं गुणये' दित्याद्युक्तमिति। अतो दशघ्नं ततो मूलमित्युक्तं पूर्वं गुणखण्डस्थाने एतावदधिकं गृहीतम् ०।३१।४० इदं षड्भिः सवर्णितं जातम् ३।१०। इदं पूर्वगुणतुल्यं जातमतः स्वरसांशहीनमिति। चन्द्रविम्बं हरोऽस्ति। अतो ग्लौविम्बहृदिति। एवं स्थितिघटिकाः स्युरित्युपपन्नम्। अथ मर्दानयने युक्तिः। तत्र संमीलनकाल विम्बान्तरार्धतुल्यं ग्रहकेंद्रयोरन्तरं भवति स च कर्णः। मध्यशरः कोटिः। अनयोर्वर्गान्तरात् स्थितिवन्मर्दसिद्धिर्भवतीति। अनुपातसादृश्यात्। अत उक्तं तनुदलान्तरखग्रहाभ्यां मर्दमिति। एवं कृते स्थितिमर्दयोः खण्डे न सकले। यतः स्पर्शान्मध्यपर्यन्तमेकं स्थितिखण्डं मध्यान्मोक्षपर्यन्तमेकं स्थितिखण्डम्। तथैव मर्दखण्डमपि। मर्दखण्डं तु खग्रासासम्भवे नान्यथेत्यर्थत एव सिद्धम्॥ ५॥

**विश्वनाथः**--अथ स्थितिघटिकामर्दानयनमाह मानैक्येति। [मा]नैक्य खण्डम् १९।३८। इषुणा शरेण २।५० सहितम्। २२। २८। दशघ्नं २२४। ४०। छन्नेन १६।४८ गुणितम् ३७७४।२४। इदं वारद्वयं षष्ट्या सवर्णितम् १३५८७८४०। अस्य मूलम् ६१। २६। इदं स्वषडंशेन १०।१४ हीनं ५१।१२ ग्लौविम्बेन ११।७ भक्तं फलं जाता घटिकादिस्थितिः ४।३६। तनुदलान्तरखग्रहाभ्यां तथा स्थितिवन्मर्दं साध्यम्। एतदुक्तं भवति। तयोर्विम्बयोर्दले खण्डे तयोरन्तरं कार्यम्। चन्द्रग्रहे चन्द्रभूभाविम्बदलान्तरं कार्यं सूर्यग्रहे सूर्यचन्द्रविम्बदलान्तरमित्यर्थः। खग्रहः खग्रासः। ताभ्यामित्यर्थः।

उदाहरणम्। चन्द्रविम्बम् ११।७। भूभाविम्बम् २८।१०। चन्द्रविम्बदलम् ५।३३। भूभाविम्बदलम् १४।५। अनयोरन्तरम् ८।३२। इषुणा २।५० सहितम् ११।२२। दशघ्नम् ११३।४०। खग्रासेन ५।४१ गुणितम् ६३६।०। इदं वारद्वयं षष्ट्या सवर्णितम्। २३२५६००। अस्य मूलम् २५।२४। इदं स्वषडंशेन ४। १४ हीनम् २१।१०। चन्द्रविम्बेन ११।७ भक्तं फलं घटिकादिक मर्दम् १।५४॥ ५॥

**सुधाकरः**—आचार्येण मानैक्यखण्डादिकमंगुलात्मकं पठितं तत् त्रिभिः संगुण्य कलात्मकं कृत्वा 'मानार्धयोगान्तरयोः कृतिभ्या' मित्यादिभास्करविधिना कलात्मकस्थितिवर्गः

$$=(३ \text{ माद})^२-(३ \text{ श})^२ = ९ (\text{माद} + \text{श}) (\text{माद} - \text{श}) = ९ (\text{माद} + \text{श}) \text{ छ} ।$$

अथ चन्द्रबिम्बसाधनवैपरीत्येन चन्द्रगतिः =७४चविं । ततो गत्यन्तरानुपातेन 'वर्गेण वर्गं गुणयेद्भजेच्चे'त्यादिना जातः स्थितिवर्गो घट्यादिकः $= \dfrac{६०^२ \times ९ (\text{माद} + \text{श}) \text{ छ}}{(७४ \text{ चविं} - \text{रग})^२}$

$$= \frac{९ \times ३६०० (\text{माद} + \text{श}) \text{ छ}}{(७४ \text{ चविं} - \text{रग})^२} = \frac{९ \times ३६० \times १० (\text{माद} + \text{श}) \text{ छ}}{(७४ \text{ चविं} - \text{रग})^२}$$ मूलग्रहणेन

घटिकात्मिका स्थितिः $= \dfrac{\sqrt{९ \times ३६०} \sqrt{१० (\text{माद} + \text{श}) \text{ छ}}}{७४ \text{ चविं} - \text{रग}} =$

$\dfrac{५७ \sqrt{१० (\text{माद} + \text{श}) \text{ छ}}}{७४ \text{ चविं} - \text{रग}}$ स्वल्पा. $= \dfrac{\frac{५७}{७४} \sqrt{१० (\text{माद} + \text{श}) \text{ छ}}}{\text{चविं} - \frac{\text{रग}}{७४}}$ ।अत्रहरेऋणात्मकखं-

डस्य रूपाल्पत्वादपगमे कृतेघटिकात्मिकास्थितिः$= \dfrac{\frac{५७}{७४} \sqrt{१० (\text{माद} + \text{श}) \text{छ}}}{\text{चविं}}$ . . .(१) अत्रकल्प्यते

$$\text{वाभि} = \frac{५७}{७४} = \frac{१}{१ + \frac{१७}{५७}} = \frac{१}{१ + \frac{१}{३ + \frac{६}{१७}}} = \frac{१}{१ + \frac{१}{३ + \frac{१}{२ + \frac{५}{६}}}} = \frac{१}{१ + \frac{१}{३ + \frac{१}{२ + \frac{१}{१ + \frac{१}{५}}}}}$$

तत आसन्नमानानि $\frac{१}{१}, \frac{३}{४}, \frac{७}{९}, \frac{१०}{१३}$, एतानि वास्तवभिन्नसमानि स्वल्पान्तरात् तेन

वाभि $= \frac{१}{२}$ ∴ २ वाभि = २ । तथा वाभि $= \frac{३}{४}$ ∴ ४ वाभि = ३

समीकरणयोर्योगेन ६ वाभि=५ ∴ वाभि= $\frac{५}{६}$ अस्य (१) अस्मिन्नुत्थापनेन जाता घट्यादिका

स्थितिः $= \dfrac{\frac{५}{६} \sqrt{१० (\text{माद} + \text{श}) \text{ छ}}}{\text{चविं}}$ अत उपपन्नम् । एवं मानार्धान्तरखग्रासाभ्यां

मर्दानयनोपपत्तिरति सुगमेति । एतत् सर्वं स्पर्शमोक्षकालिकशराज्ञानान्मध्यकालिकशरेण कर्म कृतं तेन स्थूलं सूक्ष्मार्थमग्रे विशेषोऽभिधीयते ॥ ५ ॥

**युग्माहतैर्व्यगुभुजांशसमैः पलैः सा**
**द्विष्ठा स्थितिर्विरहिता सहिताऽर्कषड्भात् ।**
**ऊने व्यगावितरथाऽभ्यधिके स्थिती स्तः**
**स्पर्शान्तिमे क्रमगते च तथैव मर्दे ॥६॥**

**मल्लारिः**—अथ स्पर्शमोक्षस्थितिसाधनमाह । युग्माहता द्विगुणिता ये व्यगोर्भुजांशास्तन्मितैः पलैः सा द्विष्ठा स्थितिर्विरहिता सहिता सती स्पर्शमोक्षयोः स्थितिः स्यात् । इदं कदा तदाह । अर्कषड्भाद्द्वादशराशिभ्यः षड्राशिभ्यश्च व्यगौ ऊने सति। अधिके सति इतरथा विपरीतम् । यत्र विरहिता सा मोक्षस्थितिः । मर्देऽपि तथैव कार्ये ।

अत्रोपपत्तिः । अत्र त्वसकृत्प्रकारेण स्थितिखण्डे साध्ये । ते यथा। स्थितिखण्डेन गतिगुण्या षष्ट्या भाज्या फलं स्पर्शार्थे ग्रहेषु हीनं मोक्षार्थे युक्तं तेभ्यः पुनः शरादिकं विधाय पृथक् स्थितिखण्डे साध्ये । ततः पुनस्ताभ्यां स्थितिखण्डाभ्यां रविराहू चालयित्वा स्थिती कार्ये । एवं असकृत्समे भवतः । इदं जडकर्म दृष्ट्वा आचार्येणेत्थमनुकल्पोऽङ्गीकृतः । द्विगुणितव्यगुभुजभागतुल्यानि पलानि मध्यस्पर्शस्थित्यन्तराले मध्यमोक्षस्थित्यन्तराले च स्वल्पान्तरत्वात् तुल्यान्येव दृष्टानि अतो द्विगुणितव्यगुभुजभागतुल्यैः पलैः सा स्थितिर्द्विष्ठा युतोना मोक्षस्पर्शस्थितिखण्डे भवत इत्युपपन्नम् । युतोनितस्योपपत्तिर्यथा। षड्भार्कभोने व्यगौ सति स्पर्शकालार्थमृणचालनं दत्वा मध्यकालीनान्न्यूने सति भुजवृद्धिरतः शरवृद्धिः। शरवृद्धौ स्थितेरल्पत्वम् । अतो विरहिते सति मोक्षार्थं धनचालने दत्ते व्यगोराधिक्यं तत्र भुजशराल्पत्वात् स्थितेराधिक्यम् । अतः सहितेति । अर्कषड्भादधिके व्यगौ अग्रे भुजवृद्धिः पूर्वं भुजह्रासः । अतो विपरीतमिति । एकक्षेत्रमूलत्वात् स्थित्यर्धवन्मर्दार्धे अपि कार्ये इत्युपपन्नम् ॥ ६ ॥

**विश्वनाथः**—अथ स्पर्शमोक्षस्थितिमर्दानयनमाह । युग्मेति । व्यगोर्ये भुजांशास्ते द्विगुणिताः कार्याः । तत्तुल्यैः पलैः सा पूर्वोक्ता द्विष्ठा स्थितिर्विरहिता सहिता कार्या। कस्मिन् सति । अर्कषड्भादूने व्यगौ सति द्वादशराशिभ्यः षड्राशिभ्य ऊने व्यगौ सतीत्यर्थः । अधिके इतरथाऽन्यथा कार्यम् । सहिता रहिता चेति क्रमगतेन स्पर्शान्तिमे स्पर्शमोक्षजे स्थिती स्तः । तथैव स्थितिवन्मर्दे साध्ये । अर्कषड्भादूने व्यगावित्यत्र राश्यंशैरूनाधिकता ज्ञेया । तद्यथा। विराह्वर्कस्यैकादशराशिषोडशांशानारभ्य शून्यराश्याद्यवयवपर्यन्तं स द्वादशराशिभ्य ऊनो ज्ञेयः । शून्यराश्येकविकलामारभ्य चतुर्दशांशपर्यन्तं स द्वादशाधिको ज्ञेयः । एवं विराह्वर्कस्य पञ्चराशिषोडशांशमारभ्य षड्राशिपर्यन्तं स षड्भादूनो ज्ञेयः । षड्राशिमारभ्य चतुर्दशांशपर्यन्तं स षड्भादधिको ज्ञेयः ।

उदाहरणम् । घटिकादिस्थितिः ४।३६। अर्कमध्ये ऊनितो राहुः स व्यग्वर्कः। व्यगुभुजांशाः १ । ४८ । ४८ युग्माहताः ३ । विराह्वर्कस्य द्वादशराशिभ्यो

ऽधिकत्वात् सहिता जाता स्पर्शस्थितिः ४ । ३९ । विरहिता जाता मोक्षस्थितिः ४ । ३३ । मर्दम् १ । ५४ । युग्माहतैर्व्यंगुभुजांशसमैः पलैः सहितं जातं संमीलनमर्दम् १ । ५७ । रहितं जातं मोक्षमर्दम् १।५१ ॥ ६ ॥

**सुधाकरः**—अत्र भास्करीयकरणकुतूहलस्थेन

'विक्षेपतो नागयुगैर्विभक्तान्नाड्यादिकं यत् फलमत्र लब्धम् ।
द्विष्ठा स्थितिस्तेन युता विहीना स्यातां क्रमात् स्पार्शिकमौक्षिके ते ॥
ओजे पदे पातयुतो विधुश्चेद्युग्मेऽन्यथैव स्थितिवद्विमर्दे' ।

अनेन श्लोकेन

संस्कारघटी $= \frac{\text{मश}}{४८}$ । मध्यशरस्थाने तेऽशा निघ्नाः शक्रैः शैलभक्ता इत्यादिना $\frac{११ \text{ व्यभु}}{७}$ एतदुत्थापनेन संस्कारघटी $= \frac{\text{मश}}{४८} = \frac{११ \text{ व्यभु}}{४८ \times ७}$ । इदं षष्टिगुणं जातं पलात्मकं

संस्कारमानम् $= \frac{६० \times ११ \text{ व्यभु}}{४८ \times ७} = \frac{५ \times ११ \text{ व्यभु}}{४ \times ७} = \frac{५५ \text{ व्यभु}}{२१} = २$ व्यभु । स्वल्पान्तरा-दित्युपपन्नम् ।

अत्र राहोश्चक्रशुद्धत्वाद्विराह्वर्कः सपातार्कसमस्तथा षड्राशियुतसपातचन्द्र एव चन्द्रग्रहणे सपातार्कस्तेन यदि प्रथमे ओजपदे सपातचन्द्रस्तदा द्वितीयओजपदे विराह्वर्कः । एवं द्वितीय-ओजपदे सपातचन्द्रे विराह्वर्कः प्रथमे पदे भवति। तेन सपातचन्द्रविराह्वर्कौ द्वावप्योजपदत्वं समपदत्वं च न जहीतस्तेन संस्कारधनर्णे अपि स्पष्टे । करणकुतूहलस्थसंस्कारोपपत्त्यर्थं द्रष्टव्यं मदीयं वासनाविभूषणम् ॥ ६ ॥

**तिथिविरतिरयं ग्रहस्य मध्यः**
**स च रहितः सहितो निजस्थितिभ्याम् ।**
**ग्रहणमुखविरामयोस्तु काला-**
**विति पिहितापिहिते स्वमर्दकाभ्याम् ॥ ७ ॥**

**मल्लारिः**—अथ स्पर्शकालादिसाधनं कथयति । तिथेर्गणितागता या विरतिरन्तोऽयं ग्रहस्य ग्रहणस्य मध्यः । स मध्यकालः । निजे ये स्थिती ताभ्यां विरहितः सहितः सन् ग्रहणमुखं स्पर्शो विरामो मोक्षः । तयोः कालौ भवत इत्यनेनैव प्रकारेण स्वमर्दकाभ्यां पिहितापिहिते संमीलनोन्मीलने भवतः । एत-दुक्तं भवति । तिथ्यन्तकालो ग्रहस्य मध्यः । स चतुर्षु स्थानेषु स्थाप्यः । स्पर्श-स्थित्या न्यूनः स्पर्शकालः स्यात् । अन्यत्र मोक्षस्थित्या युक्तो मोक्षकालः स्यात् । तथा प्रथममर्देनोनो मध्यः संमीलनकालो भवति द्वितीयमर्देनान्यत्र युक्तो मध्य उन्मीलनकालः ।

अत्रोपपत्तिः । मध्यकालात् पूर्वं स्थित्यर्धकालेन स्पर्शो भवत्येवातो मध्यकाले स्पर्शस्थितिर्न्यूना कृता । मोक्षकालस्तु मध्यादग्रतो मोक्षस्थित्यर्धेन भवत्यतो मोक्षस्थितियुक्तो मध्यो मोक्षो भवतीत्युपपन्नम् । तथैव मध्यान्मदार्धतुल्यकालाभ्यां संमीलनोन्मीलने भवत एव ॥ ७ ॥

**विश्वनाथः**—अथ मध्यग्रहणस्पर्शकालमोक्षसंमीलनोन्मीलनकालसाधनमाह । तिथिविरतिरिति । तिथेर्गणितागताया विरतिरन्तोऽयं ग्रहस्य ग्रहणस्य मध्यो मध्यग्रहणकालो भवति । य आगतो ग्रासस्तस्य ग्रसनं यत् तन्मध्यग्रहणम् । स मध्यग्रहणकालो निजस्थितिभ्यां स्पर्शमोक्षजस्थितिभ्यां रहितः सहितः स्पर्शस्थित्या रहितो मोक्षस्थित्या सहितो ग्रहणमुखविरामयोः । ग्रहणमुखं स्पर्शः । विरामो मोक्षः । तयोः कालौ समयौ स्तः । स्पर्शो ग्रासस्य प्रारम्भः मोक्षो ग्रासाभाव इति । अनेन प्रकारेण मर्दकाभ्यां पिहितापिहिते ग्रासे स्तः । मध्यग्रहणकालः स्पर्शमोक्षमर्दाभ्यां रहितः सहितः क्रमेण पिहितापिहिते स्तः संमीलनोन्मीलने स्त इत्यर्थः । संमीलनं सर्वबिम्बग्रासः खग्रासे । उन्मीलनं बिम्बोन्मुक्तिप्रारम्भकाल इत्यर्थः ।

उदाहरणम् । तिथिविरतिरयं ग्रहणमध्यः ४०।४८ । स्पर्शस्थित्या ४।३९ रहितो जातः स्पर्शकालः ३६।९। मोक्षस्थित्या ४।३३। युक्तो जातो मोक्षकालः ४५।२१ । तिथिविरतिः ४०।४८। स्पर्शमर्देन १।५७। रहितो जातः संमीलनकालः३८।५१।मोक्षमर्देन १।५१ । सहितो जात उन्मीलनकालः४२।३९॥७॥

**सुधाकरः**— 'मध्यग्रहः पर्वविरामकाले' इत्यादिभास्करप्रकारेणास्य वासना प्रकटैव ॥ ७ ॥

**पिहितहतेष्टं स्थितिविहृतं तत् ।**
**सचरणभूयुग्ग्रसनमभीष्टम् ॥ ८ ॥**

**मल्लारिः**--अथेष्टकाले ग्रासमानयति । पिहितेन ग्रासेन हत गुणितं यदिष्टं घटिकाद्यं स्थित्या विहृतं कार्यम् । चेत् स्पर्शकालिकमिष्टं तदा स्पर्शस्थित्या भाज्यम् । मोक्षेष्टं चेत् तदा मोक्षस्थित्या भाज्यमिति । तत् फलं द्विष्ठं सचरणभुसपादैकेन युगभीष्टं ग्रसनमंगुलाद्यं स्यादिति व्याख्या ॥

अत्रोपपत्तिः । अत्रेष्टकर्णं प्रसाध्य तदूनमानैक्यखण्डं कृत्वा यच्छेषं तदिष्टकाले छन्नं स्यात् । इष्टकर्णानयने प्रयासोऽस्ति । अतो लाघवार्थमनुपातः कल्प्यः । यदि स्थितिघटीभिर्यथागतो ग्रासस्तदेष्टघटीभिः किमिति । अतः पिहितहतेष्टं स्थितिविहृतमिति । अत्रानुपातस्यासम्भवः । वृत्तक्षेत्रपरिध्याश्रितत्वादप्राप्तावपि प्राप्तिः कृता । अतो महदन्तरं स्यात् । तत्रानुकल्पेनेत्थमङ्गीकृतम् । सचरणभूयुक् सूक्ष्मासन्नं भवति ॥ ८ ॥

**विश्वनाथः**—अथेष्टग्रासानयनमाह । पिहितेति । पिहितेन ग्रासेन हतं गुणितं यदिष्टं घटिकात्मकं स्वस्थितेर्यथा न्यूनं तथेष्टं कल्प्यम् । तत् स्वस्थित्या विहृतं कार्यम् । चेत् स्पर्शकालिकमिष्टं तदा स्पर्शस्थित्या भाज्यम् । मोक्षकालिकमिष्टं चेन्मोक्षस्थित्या भाज्यमिति । तत्फलं सचरणभुवा सपादरूपेण १।१५ युतमभीष्टग्रसनमिष्टग्रासो भवति । स्पर्शादग्रे यदिष्टं तत् स्पर्शेष्टं मोक्षात् प्रागिष्टं मोक्षेष्टमिति ध्येयम् ।

उदाहरणम् । स्पर्शानन्तरं कल्पितमिष्टं घटीद्वयम् २ । ग्रासेन १६।४८ गुणितम् ३३।३६ । स्पर्शस्थित्या ४ ।३९। विहृतम् ७।१३। सचरणभू १।१५ युक्तम् । जातमभीष्टग्रसनम् ८ । २८ ॥ ८ ॥

**सुधाकरः**—अत्रोपपत्तिः । ' ये स्पर्शमुक्त्योर्विशिखाग्रजाते रेखे किल प्रग्रहमोक्षमार्गौ' इत्यादिना भास्करविधिना स्वल्पान्तराद् ग्राहकमार्ग एकसरलरेखारूपः कल्प्यते । ग्राह्यबिम्बकेन्द्रात् तदुपरि यो लम्बः स एव मध्यशरस्तन्मूले च ग्राहककेन्द्रे मध्यग्रहणकाल इति प्रकल्प्य क्षेत्रसंस्था विलिख्यते ।

फखव = मानैक्यखण्डवृत्तम् । वइरफ = ग्राहकमार्गः । र मध्यग्रहणे ग्राहककेन्द्रम् । केर = मध्यशरः । रख = ग्रासमानम् । इ = इष्टकाले ग्राहककेन्द्रम् । के इ = इष्टकाले केन्द्रान्तरम् । इल = इष्टग्रासमानम् । " मानैक्यखण्डश्रुतिवर्जितं सद्ग्रासप्रमाणं भवतीष्टकाले " इत्यादिभास्करविधिना इ च, वर रेखायाः इ विन्दौ लम्बः । वर = स्पार्शिकस्थित्यर्धं कलात्मकम् । व इ = इष्टघटीसम्बन्धिन्यो ग्राहकमार्गखण्डकलाः । अतः $\frac{वइ}{वर} = \frac{इघ}{स्थिघ}$ रेखागणितसजातीयक्षेत्रानुपातेन च इच $= \frac{खर \times वइ}{वर} = \frac{खर \times इघ}{स्थिघ}$ । अतः पिहितहतेष्टं स्थितिविहृतमित्यनेन इच मानमागतम् । तदेव गणेशेन इल–इष्टग्रासमानसमं कल्पितम् । निरन्तरीकरणार्थं सचरणभूर्युक्ता यतः इलमानं सर्वदा इचमानादधिकम् । तद्यथा ।

खलव त्रिभुजे $\angle$ खलव + $\angle$ लखव = लवब ( रे. १ । ३२ )

$\angle$ वखर = $\angle$ वबइ इच रखयोः समानान्तरत्वात् ।

द्वयोर्योगेन, $\angle$ खलव + $\angle$ लखव + $\angle$ वखर

= $\angle$ खलव + $\angle$ लखर = $\angle$ लवब + $\angle$ वबइ = $\angle$ लवइ । परन्तु $\angle$ लखर = $\angle$ खलके (केखलत्रिभुजस्य समाद्विबाहुत्वात्) तेन $\angle$ खलव + $\angle$ खलके = $\angle$ लचइ । अर्थात् $\angle$ खलव + खलव + $\angle$ वलइ = $\angle$ लचइ । अर्थात् २ $\angle$ खलव + $\angle$ चलइ = $\angle$ लचइ । तेन $\angle$ लचइ अयं $\angle$ चलइ अस्मान्महान् जातः । तेन इल > इच ( रे. १ । १९ )

अतोऽनुपातागते इचमाने किंचित् योजनेनैव इलमानं भवतीति संयोजनमुचितमेव । अथेदं क्षेपमानं सर्वदा सचरणभूसममेव वा ततोऽधिकन्यूनमित्यस्य विचारः।यदि $\angle$ रकेइ =

पूर्वा



पाश्चमा

य । केख = मा तदा त्रिकोणमित्या ( यदि केर = श )केइ $= \dfrac{\text{त्रि. श}}{\text{कोज्याय}}$ । ततः इल = वास्तवेष्ट-ग्रासमानम् = इग्रा = केल − केइ = मा $- \dfrac{\text{त्रि. श}}{\text{कोज्याय}}$ । इर = बोष्टस्थितिकलांगुलानि $= \dfrac{\text{श. ज्याय}}{\text{कोज्याय}}$ । तथा वर समानान्तरा यदि चन रेखा कार्या तदा सजातीयत्रिभुजाभ्यां (चन=इर)

$$\text{खन} = \frac{\text{खर} \times \text{इर}}{\text{वर}} = \frac{\text{छ} \times \text{श. ज्याय}}{\text{वर. कोज्याय}}$$

। नर = इच = गणेशप्रकारादागतमिष्टग्रासमानम् = खर − खन = छ $- \dfrac{\text{छ. श. ज्याय}}{\text{वर. कोज्याय}}$ ततो वास्तवावास्तवग्रासयोरन्तरम् = इल − इच

$$= मा - \frac{त्रि. श.}{कोज्याय} - \left( छ - \frac{छ. श. ज्याय}{वर. कोज्याय} \right) = मा - \frac{त्रि. श.}{कोज्याय} - छ + \frac{छ. श. ज्याय}{वर. कोज्याय}$$

$$= श + \frac{छ. श. ज्याय}{वर. कोज्याय} - \frac{त्रि. श}{कोज्याय} = श - \left( \frac{त्रि. श}{कोज्याय} - \frac{छ. श. ज्याय}{वर. कोज्याय} \right) \ldots (१)$$

कल्प्यते कोष्ठकान्तर्मानं परमाल्पम् = प तदा (१) अस्य परमाधिकमानम् = श − प भवति। ततः $प = \frac{त्रि. श}{कोज्याय} - \frac{छ. श. ज्याय}{वर. कोज्याय}$ । इदं स्थिरांकेन शरमानेन भक्तं तदा ततोऽपि परमाल्पमेव तथा कृते जातम् $\frac{प}{श} = प_१ = \frac{त्रि}{कोज्याय} - \frac{छ. ज्याय}{वर. कोज्याय}$ । छेदगमेन $प_१$. वर. कोज्याय = त्रि. वर − छ. ज्याय। वर्गीकृतेन यदि वर = स्थि।

$प_१^२ स्थि^२ कोज्या^२ य = प_१^२ स्थि^२ (त्रि^२ - ज्या^२ य) = प_१^२ स्थि^२ त्रि^२ - प_१^२ स्थि^२ ज्या^२ य = त्रि^२ स्थि^२ - २ त्रिस्थिछ ज्याय + छ^२ ज्या^२ य$ । पक्षान्तरानयनेन

$$ज्या^२ य (प_१^२ स्थि^२ + छ^२) - २ त्रिस्थिछज्याय = प_१^२ स्थि^२ त्रि^२ - स्थि^२ त्रि^२$$

वा $ज्या^२ य - २ \frac{त्रि स्थि छ}{प_१^२ स्थि^२ + छ^२} ज्याय = \frac{स्थि^२ त्रि^२ (प_१^२ - १)}{प_१^२ स्थि^२ + छ^२}$ । वर्गपूरणेन

$$ज्या^२ य - २ \frac{त्रि स्थि छ}{प_१^२ स्थि^२ + छ^२} ज्याय + \left( \frac{त्रि स्थि छ}{प_१^२ स्थि^२ + छ^२} \right)^२ = \left( \frac{त्रि स्थि छ}{प_१^२ स्थि^२ + छ^२} \right)^२ + \frac{स्थि^२ त्रि^२ (प_१^२ - १)}{प_१^२ स्थि^२ + छ^२}$$

$$= \frac{स्थि^४ प_१^४ त्रि^२ - स्थि^४ प_१^२ त्रि^२ + स्थि^२ त्रि^२ प_१^२ छ^२ - स्थि^२ त्रि^२ छ^२ + स्थि^२ त्रि^२ छ^२}{(प_१^२ स्थि^२ + छ^२)^२}$$

$$= \frac{स्थि^२ प_१^२ त्रि^२ (स्थि^२ प_१^२ - स्थि^२ + छ^२)}{(प_१^२ स्थि^२ + छ^२)^२}$$

मूलग्रहणेन

$$ज्याय - \frac{त्रि स्थि छ}{प_१^२ स्थि^२ + छ^२} = \pm \frac{स्थि प_१ त्रि}{प_१^२ स्थि^२ + छ^२} \sqrt{स्थि^२ प_१^२ + छ^२ - स्थि^२}$$

अत्र यथा यथा $प_१$ मानमल्पं भवति तथा तथा $स्थि^२ प_१^२ + छ^२$ इदमप्यल्पं भवति तच्च सर्वदा $स्थि^२$ अस्मादधिकमेव। अन्यथा क्षयस्य मूलाभावात् समीकरणमेवासम्भवम्।

अतः परमाल्पे $स्थि^२ प_१^२ + छ^२ = स्थि^२$ । तदा $ज्याय = \frac{त्रि स्थि छ}{प_१^२ स्थि^२ + छ^२} = \frac{त्रि. स्थि. छ.}{स्थि^२}$

$$= \frac{त्रि. छ}{स्थि} = \frac{त्रि (मा - श)}{स्थि} = \frac{त्रि (मा - श)}{\sqrt{मा + श} \sqrt{मा - श}} = त्रि \sqrt{\frac{मा - श}{मा + श}}$$

$$अतः कोज्याय = त्रि \sqrt{\frac{२ श}{मा + श}}$$

(१) अस्मिन्नुत्थापनेन जातं ग्रासयोरन्तरं परमाधिकम्

$$= श - \left( \frac{त्रि\ श \sqrt{मा + श}}{त्रि \sqrt{२\ श}} - \frac{छ,\ श\ त्रि \sqrt{मा - श} \div \sqrt{मा + श}}{स्थि \times त्रि \sqrt{२\ श} \div \sqrt{मा+श}} \right)$$

$$= श - \left( \frac{स्थि त्रि श \sqrt{मा+श} - छ.श.त्रि \sqrt{मा-श}}{स्थि\ त्रि \sqrt{२\ श}} \right)$$

$$= श - \left( \frac{स्थि\ श \sqrt{मा+श} - छ.\ श \sqrt{मा-श}}{स्थि \sqrt{२\ श}} \right)$$

$$= श + \frac{छ\ श \sqrt{मा-श}}{स्थि \sqrt{२\ श}} - \frac{श \sqrt{मा+श}}{\sqrt{२\ श}}$$

$$= श + \frac{छ \sqrt{श} \sqrt{मा-श}}{स्थि \sqrt{२}} - \frac{\sqrt{श} \sqrt{मा+श}}{\sqrt{२}}$$

$$= श + \frac{(मा-श) \sqrt{श} \sqrt{मा-श}}{\sqrt{(मा-श)(मा+श)} \sqrt{२}} - \frac{\sqrt{श} \sqrt{मा+श}}{\sqrt{श}}$$

$$= श + \frac{\sqrt{श}(मा-श)}{\sqrt{मा+श} \sqrt{२}} - \frac{\sqrt{श} \sqrt{मा+श}}{\sqrt{२}}$$

$$= श + \frac{\sqrt{श}(मा-श) - \sqrt{श}(मा+श)}{\sqrt{मा+श} \sqrt{२}}$$

$$= श - \frac{२\ श \sqrt{श}}{\sqrt{मा+श} \sqrt{२}} = श - \frac{श \sqrt{श} \sqrt{२}}{\sqrt{मा+श}} = श - श \sqrt{\frac{२\ श}{मा+श}}$$

$$= श \left( १ - \sqrt{\frac{२\ श}{मा+श}} \right) = श \left( १ - \sqrt{१ - \frac{मा-श}{मा+श}} \right)$$

स्वल्पान्तरान्मूलग्रहणेन परमं ग्रासयोरन्तरमानम् $= श \left\{ १ - \left( १ - \frac{मा-श}{२[मा+श]} \right) \right\}$

$= \frac{श\ (मा-श)}{२\ (मा+श)}$ इदं चेत् 'ब' इत्यनेन प्रकाश्यते तदा $\frac{श\ (मा-श)}{२\ (मा+श)} = ब$

$शमा - श^{२} = २\ माब + २\ शब$ । वर्गसमीकरणविधिना

$$श^{२} - २\ श \left( \frac{मा}{२} - ब \right) = - २\ माब$$

$$श^{२} - २\ श \left( \frac{मा}{२} - ब \right) + \left( \frac{मा}{२} - ब \right)^{२} = \left( \frac{मा}{२} - ब \right)^{२} - २ माब$$

$$= \frac{\text{मा}^{२}}{४} - \text{माब} - २\ \text{माब} + \text{ब}^{२} = \frac{\text{मा}^{२}}{४} - ३\ \text{माब} + \text{ब}^{२}$$

मूलग्रहणेन

$$\text{श} - \left( \frac{\text{मा}}{२} - \text{ब} \right) = \pm \sqrt{\frac{\text{मा}^{२}}{४} - ३\ \text{माब} + \text{ब}^{२}}$$

अत्र ब मानं यथेच्छमधिकं भवेत् परन्तु मूलान्तर्गतसंख्या धनात्मिकैव भवति क्षयमूलासम्भवात् समीकरणासम्भवाच्च । तेन परमाधिके बमाने

$$\text{ब}^{२} + \frac{\text{मा}२}{४} = ३\ \text{माब} \therefore$$

$$\text{ब}^{२} - ३\text{माब} = - \frac{\text{मा}}{४} \therefore \text{ब}^{२} - ३\ \text{माब} + \frac{९\ \text{मा}^{२}}{४} = \frac{९\ \text{मा}^{२}}{४} - \frac{\text{मा}^{२}}{४}$$

$$= २\ \text{मा}^{२}$$

$$\text{मूलग्रहणेन ब} - \frac{३\ \text{मा}}{२} = \pm \text{मा} \sqrt{२}$$

$$\therefore \text{ब} = \frac{३\ \text{मा}}{२} \pm \text{मा} \sqrt{२} = \text{मा} \left( \frac{३}{२} \pm \sqrt{२} \right)$$

अनेन उत्थापने जातं शरमानम्

$$\text{श} = \frac{\text{मा}}{२} - \text{ब} = \frac{\text{मा}}{२} - \frac{३\ \text{मा}}{२} \pm \text{मा} \sqrt{२} = - \text{मा} + \text{मा} \sqrt{२}$$

अत्र ऋणमानासम्भवात् शरः $= \text{मा} ( \sqrt{२} - १ )$ ततो बमानम्

$$= \text{मा} \left( \frac{३ - २ \sqrt{२}}{२} \right) ।$$

$\sqrt{२}$ अस्यासन्नमूलग्रहणेन परमे ग्रासान्तरे शरः $= \text{मा} ( \sqrt{२} - १ )$

$$= \text{मा} \left( १\frac{४१४२}{१००००} - १ \right) = \frac{४१४२\ \text{मा}}{१००००}$$ परमग्रासान्तरमानं च $= \text{ब} = \text{मा} \left( \frac{३ - २\sqrt{२}}{२} \right)$

$$( ३ - २\sqrt{२} ) = \frac{\text{मा}}{२} \left( ३ - २ - \frac{८२८४}{१००००} \right) = \frac{१७१६\ \text{मा}}{२ \times १००००} = \frac{८५८\ \text{मा}}{१००००} ।$$

…धिकं मानैक्यखण्डं २२ गृह्येत तदा ब = १ । ५३ शरमानं च ९ । ७ यदि …येत तदा बमानम् = १ । ३८ शरमानं च = ७ । ५२ । यदि परमाल्पं मानैक्य… …ा बमानं = १ । २८ शरमानं च = ७ । २ ।

यदि पूर्वसाधिते बमाने $\frac{\text{श} ( \text{मा} - \text{श} )}{२ ( \text{मा} + \text{श} )}$ अस्मिन् मानैक्यखण्डम् = २० परिकल्प्य शरस्थाने च शून्यकद्वित्र्याद्यङ्गुलानि परिकल्प्य बमानानि साध्यन्तेतदाऽधोलिखितानि माना…

| श | ब | |
|---|---|---|
| ० | ० | |
| १ | ० | २७ |
| २ | ० | ४९ |
| ३ | १ | ७ |
| ४ | १ | २० |
| ५ | १ | ३० |
| ६ | १ | ३७ |
| ७ | १ | ४१ |
| ८ | १ | ४३ |

जायन्ते तेषां योगोऽष्टभक्तो मध्यममानेन बमानं १ । १६ समायाति । गणेशेनेदमेव स्वल्पान्तरात् १ । १५ इति-स्वीकृत्य सचरणभूयुगित्युक्तम् । वास्तवार्थं मदीयं प्रपञ्चितमुपरि सर्वं कल्पनावचित्र्यं बुद्धिमद्भिर्भृशं विचारणीयमित्यलं प्रसङ्गागतविचारेण ॥ ८ ॥

**त्रिभयुतोनरविः स्वविधुग्रहे-**
**ऽयनलवाढ्य इतश्चरवद्दलैः ।**
**नगशरेन्दुमितैर्वलनं भवेत**
**स्वरविदिक् त्वथ मध्यनताच्च यत ॥९॥**

**मल्लारिः**—अथ मध्यस्पर्शमोक्षादिदिग्ज्ञानार्थं तदुपयोगि वलनद्वयं साधयिषुस्तावदायनं साधयति । स्वविधुग्रहे त्रिभयुतोनरविः कार्यः । सूर्यग्रहणे रविस्त्रिभयुतः कार्यः । चन्द्रग्रहणे रविरेव त्रिभोनः कार्यः । ततः सोऽयनलवैरयनांशैराढ्यो युक्तः कार्यः । इतः सायनसूर्यात् । नगशरेन्दुमितैर्दलैः खण्डैः ।चरवत् यथा चरं क्रियते तथा कार्यं तदायनवलनं भवति। तस्य दिशमाह । स्वरविस्त्रिभयुतोनो यस्मिन् गोलेऽस्ति तद्दिगित्यर्थः ।

अत्रोपपत्तिः । वलनं साध्यम् । अहो किं नाम वलनम् । कस्मात् किं वलतीत्युच्यते । सममण्डलप्राच्याः सकाशान्नाडिकामण्डलप्राची यावताऽन्तरेण वलति तदाक्षवलनमन्वर्थं नाम । यतो नाडिकासममण्डलयोरन्तरमक्षांशा एव । तथैव नाडीमण्डलप्राच्याः क्रान्तिमण्डलप्राची यावताऽन्तरेण वलति तदायनं वलनम् । अयनसम्बन्धित्वादायनम् । तदादा साध्यते । गोलसन्धौ तु यद्यपि नाडिकामण्डलक्रान्तिमण्डलयोगोऽस्ति तथाऽपि प्राच्योर्ऋजुमार्गेण परममन्तरम् । अयनसन्धौ तु क्रान्तिवृत्तनाडीवृत्तयोर्यद्यपि परममन्तरं तथाऽपि ऋजुमार्गात् प्राच्यन्तराभावोऽतोऽयनसन्धौ वलनाभावः । गोलसन्धौ परमम् । गोलसन्धौ ग्रहस्य दोर्ज्याभावात् कोटिज्या परमा । अयनसन्धौ दोर्ज्यापरमत्वात् कोटिज्याऽभावः । यत्र कोटिज्यापरमत्वं तत्रायनवलनस्य परमत्व यत्र कोटिज्याऽभावस्तत्रायनवलनाभावोऽतः कोटिज्यातो वलनं साध्यम् । तत्र ग्रहः सत्रिभः । तस्य भुजज्या कोटिज्यैव प्रत्यक्षं भवति । एवं सूर्यग्रहणे सूर्यस्त्रिभ-

युक्त इति । एवं चन्द्रग्रहणे चन्द्रस्यापि त्रिभं योज्यम् । तत्र सूर्यचन्द्रयोः षड्भान्तरत्वाद्भुजतुल्यत्वम् । अतो रवावेव त्रिभं देयम् । परमत्र त्रिभं हीनं कार्यं गोलान्यत्वसद्भावात् । ततः सायनः कार्य एवायनसम्बन्धित्वादतस्त्रिभयुतोनसायनरविदोर्ज्यातो वलनसाधनेऽनुपातो यथा । यदि त्रिज्या-१२० तुल्यया दोर्ज्यया परमक्रान्तिज्यातुल्यमायनं वलनं ४८ । ४५ तदेष्टया किमिति । अन्योऽनुपातः । यदि द्युज्यावृत्ते इदं तदा त्रिज्यावृत्ते किमेवं जाताऽऽयनवलनज्या । अस्या धनुरायनं वलनं स्यात् । तत्रेदं गुरु कर्म दृष्ट्वा आचार्येण राशित्रयमध्ये प्रतिराशिवलनानि प्रसाध्य तान्यधोऽधो विशोध्य खण्डानि कृतानि ७ । ५ । १ । एवं तानि वलनानि । अन्यत्र सम्पूर्णज्यावद्वलनप्रदानार्थं द्विगुणानि कृतानि सन्ति । एवमेभिः खण्डैश्चरवद्वलनं साध्यम् । यतश्चरखण्डान्यपि राशित्रयमध्ये त्रीण्येव सन्ति । अतो भुजर्क्षसंखयाचरार्धयोग इत्यादि सममेव ॥ ९ ॥

**विश्वनाथः**--अथ वलनसाधनमाह । त्रिभेति । स्वविधुग्रहे त्रिभयुतोनरविः कार्यः । सूर्यग्रहे रविस्त्रिभयुतः कार्यः । चन्द्रग्रहे रविस्त्रिभोनः कार्यः । अयनलवाढ्योऽयनांशयुक्तः कार्यः । इतोऽस्मान्नगशरेन्दुभिस्तैर्दलैः खण्डकैश्चरसाधनोक्तवत् साध्यम् । तदायनवलनं भवेत् । तत् स्वरविदिक् त्रिभयुतोनः सायनो यस्मिन् गोलेऽस्ति तद्दिगित्यर्थः ।

उदाहरणम् । रविः ८।०।१२।६ । चन्द्रग्रहणस्य विद्यमानत्वात् त्रिभोनः ५ । ० । १२ । ६ । अयनांश--१८ । १८युक्तः ५ । १८ । ३० । ६ । अस्य भुजः ।० । ११ । २९ । ५४ । भुजे राशिस्थाने शून्यमस्ति । अतो नगशरेन्दुमित–७ । ५ । १ खण्डकं न प्राप्तं शेषं ११ । २९ । ५४ । भोग्यखण्डकेन ७ गुणितं ८० । २९ । १८ । त्रिंशद्भक्तं फलम् । २ । ४० । अनेन युक्तो गतखण्डः ० । योगे जातं वलनम् २। ४० । त्रिभोनसायनरवेरुत्तरगोलत्वादुत्तरम् ॥ ९ ॥

**सुधाकरः**---सत्रिभग्रहक्रान्तिज्या द्युज्यावृत्तेऽयनवलनज्या-इति सिद्धान्तविदां स्फुटैवातः सूर्यग्रहणे रविस्त्रिराशियुतः कृतः । चन्द्रग्रहणे च रविः=चं + ६ रा ∴ रविः – ३ = चं+३ तेन त्रिराशिरहितो रविः सत्रिभचन्द्रो जातः । 'तत्संजातं पातं क्षिप्त्वा खेटेऽपमः साध्यः ' इति सिद्धान्तवचनात् क्रान्त्यानयनार्थमयनलवाढ्यः कृतः । अथ सायनसत्रिभग्रहमानमेकद्वित्रिराशीन् प्रकल्प्यायनवलनभागाः साधितास्ततश्चक्रांशांकिते चन्द्रबिम्बे एते वलनांशास्तदा द्वात्रिंशद्विभागात्मके चन्द्रबिम्बे कियन्तोऽधोऽधो भागाः । फलानि षड्गुणानि कृत्वा अधोऽधो विशोध्य वलनखण्डानि पठितानि । तद्यथा ।साग्र + ३ = १ तदा साग्र=१ -- ३ = १३ – ३ = १० सत्रिभग्रहक्रान्तिज्या खार्कमिते व्यासार्धे = $\frac{६० \times ज्याजि}{१२०}$ सायनग्रह-

स्य द्युज्या च = ११३ । द्युज्यानुपातेन आयनं वलनम् = $\frac{६० \times ज्याजि}{११३}$ इदं द्विभक्तं

स्वल्पान्तरतो वलनांशाः = $\frac{६० \times ४८\frac{३}{४}}{२ \times ११३}$ ततो द्वात्रिंशद्विभागात्मके चन्द्रविम्बे आचार्यस्य

स्वलनांशाः षड्गुणिताः = $\frac{६० \times ४८\frac{३}{४} \times ३२ \times ६}{२ \times ३६० \times ११३} = \frac{४८\frac{३}{४} \times ३२}{२ \times ११३} = \frac{७८०}{११३}$ = ७स्वल्पान्तरतः । एतेन प्रथमखण्डमुपपन्नम् ।

यदि साग्र + ३ = २ तदा साग्र = २ − ३ = १४ − ३ = ११ ततः पूर्ववत् षड्गुणितं

फलम् = $\frac{१०४ \times ज्याजि \times ६ \times ३२}{११७ \times २ \times ३६०} = \frac{१०४ \times ४८\frac{३}{४} \times ६ \times ३२}{२ \times ११७ \times ३६०} = \frac{१०४ \times ४८\frac{३}{४} \times ३२}{२ \times ११७ \times ६०}$

$= \frac{१०४ \times ३२ \times २\frac{१}{३}\frac{}{२}}{११७ \times ५} = \frac{२११\frac{१}{४} \times ३२}{५८५} = \frac{६७६०}{५८५}$ = १२ स्वल्पान्तरतः । एवं

साग्र + ३ = ३ तदा वलनांशाः २४ । ततोऽनुपातेन द्वात्रिंशद्विभागात्मके चन्द्रविम्ब फलं

षड्गुणितम् = $\frac{२४ \times ६ \times ३२}{३६०} = \frac{२४ \times ३२}{६०} = \frac{२ \times ३२}{५} = \frac{६४}{५}$ = १३ स्वल्पान्तरतः ।

फलान्यधोऽधो विशोध्य जातानि खण्डानि ७ । ५ । १ अत उपपन्नं सर्वम् ॥ ९ ॥

**विषयलब्धगृहादित उक्तवद्वलनमक्षहतं पलभाहृतम् ।**
**उदगपागिह पूर्वपरे क्रमाद्रसहृतोभयसंस्कृतिरंघ्रयः ॥ १० ॥**

**मल्लारिः**—एवमायनं वलनं प्रसाध्येदानीमाक्षजं वलनं साधयति मध्यनताच्च यत् । मध्यनतात् मध्यकालद्युदलान्तरं नतं ततः विषयैः पञ्चभिर्लब्धं यद्गृहादि राश्यादि तत् उक्तवत् नगशैरेन्दुमितैरेव खण्डैर्वलनं साध्यम् । तत् पलभया हृतं गुणितमक्षैः पञ्चभिर्हृतं भक्तं कार्यं तदाक्षं वलनं भवति । तत् पूर्वपरे नते क्रमादुदगपाक् स्यात् । पूर्वनते उत्तरं पश्चिमनते दाक्षिणम् । एवमुभयोर्वलनयोर्या संस्कृतिः सा रसैः षड्भिर्हृता भक्ता सती अंघ्रयो वलनदिक्चरणाः स्युरित्यर्थः ।

अत्रोपपत्तिः । क्षितिजे यद्यपि नाडीमण्डलसममण्डलयोः सम्पातस्तथाऽपि प्राच्योर्ऋजुमार्गेण तत्र परममन्तरमक्षज्यातुल्यम् । खमध्ये नाडिकामण्डलसममण्डलयोर्यद्यपि परममन्तरमस्ति तथाऽपि ऋजुमार्गारम्भात् प्राच्योरन्तराभावः उदये परमक्षज्यातुल्यमाक्षं वलनं तत्र नतमपि परमम् । खमध्ये आक्षवलनाभावः । तत्र नतस्याभावः । अतो नताद्वलनं साध्यम् । अत्रानुपातो यथा । नतघटीनां पञ्चमांशो राशयः स्युः । यतः पञ्चदशघटीनां मध्ये राशित्रय एव । अतो नतस्य पञ्चमांशस्य दोर्ज्यातो वलनं साध्यम् । तद्यथा । यदि त्रिज्या−१२०

तुल्यया नतज्यया अक्षज्यातुल्यं परमं वलनं तदेष्टनतदोर्ज्यया किमिति । ततो द्युज्यावृत्ते इदं तदा त्रिज्यावृत्ते किमिति । अत्र लाघवार्थं पञ्चमितां पलभां प्रकल्प्य सार्धद्वाविंशति- २२।३० मितान् अक्षांशान् कृत्वा पञ्चसु पञ्चसु घटीषु त्रीणि वलनानि पृथक् प्रसाध्य तान्यधोऽधो विशोध्य ततोऽर्धानि कृत्वा वलनखण्डानि क्रियन्ते । तानि तु पूर्वायनतुल्यान्येव भवन्ति । अतस्तैरेव वलनमिति । परमेतद्वलनं पञ्चपलभाप्रमाणेन जातम् । स्वदेशीयकरणार्थमनुपातः। यदि पञ्चपलभाप्रमाणेनेदं तदेष्टाक्षभया किमिति । अतोऽक्षहृतं पलभाहतामिति । पूर्वापरे नते दक्षिणोत्तरमिति । अस्योपपत्तिर्गोलोपरि प्रत्यक्षतो दृश्यते । अथ रसहृतेत्यस्योपपत्तिः । अत्रेदं वलनं भागाद्यं वृत्तपरिधौ देयम् । अत्र एकमहादिङ्मध्येऽष्टौ चरणाः कृताः । ततोऽनुपातः । यदि चक्रांशैर्द्वात्रिंशत् सव चरणा ३२ लभ्यन्ते तदेष्टवलनांशैः किमिति । गुणहरयोर्गुणेनापवर्त्तितयोर्लब्धा हरस्थाने ११ । १५ । अत्र वलनार्धं कृतमस्त्यतो हरार्धं कृतम् । ५।३७॥१०॥

**विश्वनाथः**—अथानन्तर्ये । अथ द्वितीयवलनं तत्संस्कारं तदग्रीश्चाह विषयेति । तत्र मध्यकालीननतसाधनं यथा । पर्वान्तकालीनचन्द्रमध्ये पर्वान्तकालीनराहुः शोध्यः । एवं व्यगुविधुः कार्यः । तस्य भुजांशाः कार्याः । अस्मात् तेंऽशा निघ्नाः शङ्करैरित्यादिना शरः साध्यः । वक्ष्यमाण'प्राक् त्रिभेन वर्जितात्' —इत्यादिना दृक्कर्मकलाः साध्याः । एवं दृक्कर्मसंस्कृतश्चन्द्रः कार्यः । पर्वान्तकालीनसूर्यात् लग्नं साध्यम् । वक्ष्यमाणग्रहच्छायाधिकारोक्त 'प्राग्दृष्टिकर्म खचर'—इत्यादिना चन्द्रस्य दिनगतकालः साध्यः । दृक्कर्मसंस्कृतान् चन्द्रात् चरं साध्यम् । वक्ष्यमाणाविधिना 'जिनाप्तोक्षाभाघ्नं'इत्यादिना स्पष्टं चरं कार्यम् । स्पष्टचरात् दिनार्धं साध्यम् । तत् चन्द्रदिनार्धं भवति । द्युगतदिनार्धयोरन्तरात् नतं कार्यम् ।

अस्योदाहरणम् । चन्द्रः २ । ० । १२ । १ । राहुः ७ । २८ । २३ । १८ । व्यगुर्विधुः ६।१।४८ । ४४ । अस्य भुजांशाः १ । ४८ । ४४ । शरो दक्षिणः २।५०। राशित्रयरहितश्चन्द्रः ११।०।१२।१। अस्मात् क्रान्तिर्दक्षिणा४।३५।५९। अक्षांशा दक्षिणाः २५।२६।४२ । अनयोः संस्कारे जाता नतांशा दक्षिणाः३०। २।४१। अस्माद्दृक्कर्मकला धनम् ४। ५८ । संस्कृतश्चन्द्रः २।०।१६।५९ । दिनमानम् २६।१२। पर्वान्तकालः ४०।४८। सूर्यास्ताद्गतघटिकाः १४।३६। पर्वान्तकालीनः सूर्यः ८।०।१२।६ । भोग्यकालः ११६ । लग्नम् ४।१८।१४।१४ । दृक्कर्मसंस्कृतचन्द्रस्य भोग्यकालः ११५ । लग्नस्य भुक्तकालः ७३। अनयोर्योगः १८८। कर्क—३४२ सिंहो—३४५ दयाभ्यां युक्तः ८७५। षष्टिभक्तः १४

नवभिः पलै रहितो जातश्चन्द्रोदयाच्चन्द्रस्य दिनगतकालः १४।२६। दृक्कर्मसंस्कृत-चन्द्राच्चरमुत्तरं घटिकाद्यम् १। ५४ । अंगुलमयः शरः २ । ५०। अक्षभा—५। ४५ न्नः १६। १७। जिना--२४घ्नः । फलं पलात्मकं दक्षिणम् ०। ४०। शरस्य दक्षिणत्वादनेन संस्कृताश्चरघटिका जाताः स्पष्टाश्चरघटिका उत्तराः १ । ५३ । २० । आभिः पञ्चदशघटिका युक्ताः । जातं चन्द्रस्य दिनार्धम् १६।५३। अस्य कर्मणो जाड्यत्वात् स्वल्पान्तरत्वाच्च यत् सूर्यस्य रात्र्यर्धं तदेव चन्द्रस्य दिनार्धमिति ज्ञेयम् । इदं चन्द्रस्य दिनगतकालेन १४।२६ रहितं जातं २।२७पूर्वनतम्। द्युगतं दिनार्धाच्छुद्धं तदा पूर्वोन्नतम् । विपरीतशोधने पश्चिमनतं भवति । अयं चन्द्रग्रहणे पर्वान्तकालीननतसाधने मुख्यप्रकारः । अथवा सूर्यास्तात् पर्वान्तकालीनेष्टसूर्यरात्रिदलयोरन्तरं कार्यं तन्नतं भवति । यत् सूर्यस्य रात्रिदलं तदेव चन्द्रस्य दिनार्धं तन्नतं दिनार्धादुपरि रात्र्यर्धपर्यन्तं पूर्वरात्र्यर्धादुपरि दिनार्धपर्यन्तं पश्चिमम् । पूर्वपश्चिमलक्षणं सूर्यग्रहणे विपरीतं ज्ञेयम् ।

उक्तं च

अहर्दलाद्रात्रिदलावसानं यावत् कपालं कथयन्ति पूर्वम् ।
ततो दिनार्धान्तमपूर्वमन्दोर्भानोर्भवेतां ग्रहणेऽन्यथा ते ॥

एवं जातं मध्यनतं पूर्वम् २। २७ । इदं विषयै-५ र्भक्तं फलं राशिः ० । शेषं २ । २७ त्रिंशद्गुणम् ६०। ८१० । अधः षष्टिभक्तं फलेनोर्ध्वं युक्तं जातम् ७३। ३० । पुनर्विषयैर्भक्तं फलं भागाः १४ । शेषम् ३ । ३० । षष्टिगुणं पञ्चभिर्भक्तं फलं कलाः ४२ । शेषं षष्टिगुणं विषयैर्भक्तं फलं विकला ० । एवं जातं गृहादि ०।१४ । ४२ । ० अत उक्तवद् ' भुजर्क्षसङ्ख्यचरार्धयोग' इत्यादिना नगशरेन्दुमितैश्चरदलैर्वलनं कार्यम् । अत्रायनांशसंस्कारो नास्ति। तत् पलभाहतमक्षैः पञ्चाभिर्हृतं तद्वलनमुदक् अपाक् भवति । कस्मिन् सति । क्रमात् पूर्वपरे नते सति । पूर्वनते उत्तरवलनं पश्चिमनते दक्षिणं स्यादित्यर्थः । उभयोर्वलनयोः संस्कृतिः । समदिशि योगो भिन्नदिशि अन्तरं सा संस्कृतिः रसहृता षड्भक्ता। अंग्रयो वलनांग्रयः स्युः। मध्यनताद्विषयलब्धगृहादि ०।१४।४२।०अस्माद्वलनम् ३। २५।४८। पलभया ५ । ४५ गुणितम् १९।४३ । पञ्चभक्तं जातं वलनमुत्तरम् ३ । ५६ । पूर्वनतस्य विद्यमानत्वात् । पूर्वानीतं वलनमुत्तरम् २। ४७ । उभयोः संस्कृतिः ६। ३६ । षड्भक्ता जाता वलनांग्रय उत्तराः १ । ६ ।

अथ ग्रस्तोदिते ग्रस्तास्ते वलनसाधनार्थं नतज्ञानमाह—

स्पर्शादिकं यदि विधोर्दिवसस्य शेषे
यातेऽथवा द्युदलतद्विवरं रवेस्तु ।

रात्रेस्तदूनितनिशाशकलं क्रमात् स्यात्
प्राक्पश्चिमं नतमिदं वलनस्य सिद्धयै ॥

दिवसस्य शेषे विधोर्यदि स्पर्शादिकं स्यात् । अथवा दिवसस्य यातें गते सति । आदिशब्दात् मध्यग्रहणमोक्षौ । दिवसस्य शेषे ग्रस्तश्चन्द्र उदेति प्रातः ग्रस्तोऽस्तमेति । यद्घटिकाभिःदिवसस्य शेषे गते वा स्पर्शादिकं तदा द्युदलतद्विवरं कार्यम्। द्युदलं सूर्यस्य दिनार्धम् । तद्घटिकादिकं तयोरन्तरं कार्यामित्यर्थः । प्राक्पश्चिमनतं स्यात् । दिनशेषे प्राग्नतं गते पश्चिमनतामिति । रवेस्तु रात्रिशेषे प्राग्नतंगत पश्चिम नतमिति । रवेस्तु रात्रि शेषे गते वा स्पर्शादिकं भवति । रात्रेः शेषे ग्रस्तोदितोऽर्को भवति । रात्रिगते ग्रस्तास्तमितो भवति । रात्रेः शेषे गते वा यावद्घटिकाद्येनावयवेन स्पर्शादिकं तावता ऊनितं निशाशकलं रात्र्यर्धम् । तच्छेषं प्राक् परं नतं स्यात् । वलनस्य सिद्धयै वलनसाधनायेत्यर्थः । एतल्लक्षणव्यतिरिक्ते स्पर्शादिकं तदा 'यातः शेषः प्राक्' इति नतं कार्यमित्यर्थः ॥१०॥

**सुधाकरः**—नतकालः षड्गुणो नतकालभागास्तत्समाः सममण्डलीयनतांशाः कल्पिता अथैकराशौ खार्कमितव्यासार्धे द्युज्या = ११७ । राशिद्वये द्युज्या = ११३ । राशित्रये द्युज्या = $१०९\frac{२}{५}$ । अत्र अर्धाधिके रूपं ग्राह्यमर्धाल्पे त्याज्यमिति करणग्रन्थनियमानुसारेण $\frac{११७}{११३} = १ । \frac{११७}{१०९\frac{२}{५}} = १ । \frac{११३}{१०९\frac{२}{५}} = १$ । अतः सर्वा द्युज्या ग्रहलाघवसदृशे करण तुल्या एव कल्पयितुं शक्यन्ते । अथ सममण्डलनतांशाः $= ६ \times \text{नका}$ । एते ज्याकरणार्थं राश्यात्मकाः

$$= \frac{६ \times \text{नका}}{३०} = \frac{\text{नका}}{५}$$ ततोऽक्षवलनम् $$= \frac{\text{ज्यासन} \times \text{ज्याअं}}{\text{द्यु}} = \frac{\text{ज्यासन} \times \text{वि} \times १२०}{\text{द्यु} \times १२}$$

$$= \frac{\text{ज्यासन} \times \text{वि} \times १०}{\text{द्यु}} = \frac{\text{ज्याजि} \times \text{ज्यासन} \times \text{वि} \times १०}{\text{द्यु} \times \text{ज्याजि}}$$

इदं द्विभक्तं जातमक्षजवलनचापम् $= \frac{\text{ज्याजि} \times \text{ज्यासन} \times \text{वि} \times १०}{२\ \text{द्यु} \times \text{ज्याजि}}$ । चक्रांशविभागात्मके यद्येतेऽक्षवलनभागास्तदा द्वात्रिंशद्विभागात्मके चन्द्रे किं फलं षड्गुणितं जातम्

$$= \frac{\text{ज्याजि} \times \text{ज्यासन} \times ३२ \times ६ \times \text{वि} \times १०}{३६० \times \text{द्यु} \times २ \times \text{ज्याजि}}$$

अथात्र ज्यासन इत्यस्य स्थाने एकद्वित्रिराशिज्यास्तथा द्युज्यास्थाने क्रमेण ११३, ११७, १२० इति प्रकल्प्य जातमिदं $\frac{\text{ज्याजि} \times \text{ज्यासन} \times ३२ \times ६}{३६० \times \text{द्यु} \times २}$ पूर्वसाधितायनवलनसमम् । ततो जातमक्षजवलनसम्बन्धि फलम् $= \frac{\text{आयनवल} \times \text{वि} \times १०}{\text{ज्याजि}} = \frac{\text{आव} \times \text{वि} \times १०}{४८\frac{३}{४}}$

$= \frac{\text{आव} \times}{५}$ स्वल्पान्तरतस्तेनोपपन्नं सर्वम् । फलयोः षड्गुणत्वादुभयसस्कृती रसहृ-

त्युक्तम्। एवं कृते द्वात्रिंशद्विभागात्मके चन्द्रबिम्बपरिधौ स्पष्टवलनं समप्रोतकदम्बप्रोतयोरन्तरं मध्यग्रहणे ह्यङ्घ्रिसंज्ञात्मकं जातम्। शरदिशो यथादिगङ्घ्रिदानेन चन्द्रपरिधौ यो बिन्दुश्चन्द्रकेन्द्रात् तदवधि या रेखा सैव मध्यग्रहणकाले कदम्बप्रोतखण्डम्। यत्र चन्द्रभूभयोरन्तरं स्वल्पान्तरतः परमाल्पं मध्यकालिकशरसमानमिति सुधीभिरुह्यम् ॥ १० ॥

**मानैक्यार्धहृतात् खषड्घ्नपिहितान्मूलं तदाशांघ्रयः**
**खच्छन्नं सदलैकयुक् च गदिताः * खच्छन्नजाशांघ्रयः।**
**सव्यासव्यमपागुदग्वलनजाशांघ्रीन् प्रदद्याच्छरा-**
**शायाः स्याद्ग्रहमध्यमन्यदिशि खग्रासोऽथवा शेषकम् ॥११॥**

**मल्लारिः**—छन्नं दिक्चरणसाधनमाह। खषड्भिः षष्ट्या हन्यते तत् तथा। एवम्भूतं पिहितं छन्नं मान्यैक्यार्धेन मानैक्यखण्डेन हृतं भक्तं सत् यल्लब्धं तस्मात् यन्मूलं तत् तस्य छन्नस्य आशांघ्रयो दिक्चरणाः स्युः। खच्छन्नं सदलैकेन सार्धेकेन युक् खच्छन्ना जायन्ते ते तथा। एवम्भूता आशांघ्रयो दिक्चरणा गदिता उक्ताः स्युः। ग्राह्यबिम्बार्धेन वृत्तं दिगङ्कं समदन्त ३२-कोष्ठाङ्कितं च कृत्वा तत्र शराशायाः शरस्य दिशमारभ्य अपाक् उदक् वलनजाशांघ्रीन् सव्यापसव्यं दद्यात्। चेद्दक्षिणा वलनांघ्रयस्तदा शरदिशः सव्यक्रमेण देयाः। चेदुत्तरास्तदाऽपसव्यं व्युत्क्रमेण तत्र मध्यं मध्यग्रहणं स्यात्। खग्रसनं खग्रासोऽन्यदिशि मध्यग्रहणस्पार्धेन्यामेव दिशि भवेत्। खग्रासाभावे बिम्बस्य शेषकं मध्यस्पार्धेन्यामेव दिशि भवेत्।

अत्रोपपत्तिः। यदि मानैक्यखण्डतुल्यग्रासेन दिगांघ्रि—८ वर्गः स्वल्पान्तरः षष्टितुल्यो लभ्यते तदेष्टेन किमिति तन्मूलं ग्रासाद्दिक्चरणा इत्युपपन्नम्। एवं खच्छन्नांघ्रयोऽपि साध्यास्तत्राचार्येण सार्धैकयुगित्युपलब्ध्या स्वल्पान्तराःसाधिताः शेषोपपत्तिः स्पष्टा ॥ ११ ॥

**विश्वनाथः**—अथ खच्छन्नं खच्छन्नचरणानाह मानैक्यार्धेति। खषड्घ्न-६०– पिहितात् षष्टिगुणितग्रासात् मानैक्यार्धेन हृतात्। तस्मान्मूलं यत् तत् आशांघ्रयश्छन्नस्य दिगंघ्रयः स्युः। अथ खच्छन्नं चेत् तदा तत् सदलैकयुक् सार्धरूप-१।३० युक्तं खच्छन्नजाशांघ्रयो गदिता उक्ता इति।

उदाहरणम्। ग्रासः १६।४८। षष्टिगुणितः १००८। मानैक्यखण्डेन १९। ३८। भक्तः फलं ५१।२०। अस्य मूलं जाताश्छन्नांघ्रयः ७।९। खच्छन्नं ५।४१ सदलैक-१।३० युक्तं जाताः खग्रासांघ्रयः ७।११।

---

* खच्छन्नात् स्वदलायुजश्च गदिताः—इत्युपपत्तिसम्मतः पाठः।

अथ मध्यग्रहणदिग्ज्ञानं श्लोकार्धेनाह सव्यासव्येति । इष्टवृत्तं कार्यम् । तद्दिगङ्कितम् । तत्र शराशायाः शरदिशोऽपागुदग्वलनजाशांत्रीन् सव्यासव्यं प्रदद्यात् । इह एकैकदिङ्मध्ये चत्वारोंऽऽशयो ज्ञेयाः । वलजाशांत्रयोऽपाग्दक्षिणाश्चेत् तदा शरदिशः सकाशात् सव्यं सव्यक्रमेण देयाः । उदक् उत्तराश्चेत् तदा शरदिशातोऽसव्यमपसव्यं देयाः । तत्र चिह्नं कार्यम् । तत्र दिशि मध्यः मध्यग्रहणं स्यात् । अन्यदिशि मध्यग्रहणसंमुखान्यादिशि खग्रासः । शेषं ग्रहणशेषं ज्ञेयम् ॥ ११ ॥

सुधाकरः—शराशाया यथादिग्वलनांशदानेन कल्प्यते के रे ख रेखा कदम्बप्रोतरूपा जाता । सा चन्द्रबिम्बपरिधौ म चिह्ने लग्ना ( द्रष्टव्यं ८ श्लोकस्य क्षेत्रम् ) तदा परिलेखविधिना म बिन्दौ मध्यग्रहणम् । ग्राहककेन्द्रे व बिन्दौ चन्द्रबिम्बे स्प बिन्दौ स्पर्शस्तथा ग्राहककेन्द्रे फ बिन्दौ चन्द्रबिम्बे मो बिन्दौ मोक्षस्तत्र $\angle$ म के स्प $= \angle$ म के मो । अतो

$\angle$ मके स्प = आ तदा त्रिकोणमित्या कोज्याआ $= \dfrac{\text{त्रि} \times \text{रके}}{\text{के व}}$ । त्रि–कोज्याआ =

$$\frac{\text{त्रि} \times \text{केव} - \text{त्रि} \times \text{रके}}{\text{केव}} = \frac{\text{त्रि}\,(\text{केव} - \text{रके})}{\text{केव}} = \frac{\text{त्रि. रख}}{\text{केव}} = \frac{\text{त्रि. छ}}{\text{मा}}$$ । केव = मा । रख = छन्नम्

$$\text{ततः} \frac{\text{त्रि}\,(\text{त्रि} - \text{कोज्याआ})}{२} = \text{ज्या}^२ \frac{\text{आ}}{२} = \frac{\text{त्रि. त्रि. छ}}{२\ \text{मा}} = \frac{१२० \times १२० \times \text{छ}}{२ \times \text{मा}}$$

$$= १२० \times \frac{६० \text{ छ}}{\text{मा}}$$ ।

मूलग्रहणेन

$$\text{ज्या} \frac{१}{२} \text{आ} = \sqrt{१२०} \times \sqrt{\frac{६० \times \text{छ}}{\text{मा}}}$$

अत्र आमानस्य सर्वदा नवत्यल्पत्वात् । $\frac{\text{आ}}{२}$ मानस्य पञ्चचत्वारिंशदल्पत्वात् ज्या द्विमक्षा स्वल्पान्तरात्

$$\frac{\text{आ}}{२} = \frac{\sqrt{१२०}}{२} \times \sqrt{\frac{६० \times \text{छ}}{\text{मा}}} \therefore \text{आ} = \sqrt{१२०} \times \sqrt{\frac{६० \times \text{छ}}{\text{मा}}}$$

चक्रांशाङ्किते चन्द्रबिम्बपरिधावेते भागा आसमास्तदा द्वात्रिंशद्विभागात्मके चन्द्रबिम्बपरिधौ के. लब्धा

आशांग्रयः $= \frac{३२\sqrt{१२०}}{३६०} \times \sqrt{\frac{६०\times छ}{मा}} = \frac{४\sqrt{१२०}}{४५} \times \sqrt{\frac{६०\times छ}{मा}}$

$= \sqrt{\frac{४\times४\times१२०}{४५\times४५}} \times \sqrt{\frac{६०\times छ}{मा}} = \sqrt{\frac{१६\times४०}{१५\times४५}} \times \sqrt{\frac{६०\times छ}{मा}}$

$= \sqrt{\frac{१६\times८}{३\times४५}} \times \sqrt{\frac{६०\times छ}{मा}} = \sqrt{\frac{१२८}{१३५}} \times \sqrt{\frac{६०\times छ}{मा}}$

$= \sqrt{\frac{१}{१+\frac{७}{१२८}}} \times \sqrt{\frac{६०\times छ}{मा}} = \sqrt{\frac{१}{१}} \times \sqrt{\frac{६०\times छ}{मा}}$

$= \sqrt{\frac{६०\times छ}{मा}}$ स्वल्पान्तरात्। तेनोपपन्नम्।

अथ चन्द्रस्य के केन्द्रान्मानार्धान्तरेण कृते वृत्ते यत्र ग्राहकमार्गे चे विन्दौ ज विन्दौ च सम्पातस्तत्रस्थे ग्राहककेन्द्रे क्रमेण चन्द्रविम्बे स विन्दौ उ विन्दौ च संमीलनोन्मीलने (इति सर्वं भास्करपरिलेखतः स्फुटम्) शे विन्दौ च खग्रासमानम्।

तेन $\angle$ शेकेस $= \angle$ शेकेउ $=$ खा $= \angle$ रकेच $= \angle$ रकेज ततस्त्रिकोणमित्या

कोज्याखा $= \frac{त्रि.केर}{केच}$। त्रि $-$ कोज्याखा $= \frac{त्रि\,(केच - केर)}{केच}$

$= \frac{त्रि\,(\frac{१}{२}भूवि - \frac{१}{२}चंविं - श)}{\frac{१}{२}भू वि - \frac{१}{२}चं विं} = \frac{त्रि\,(\frac{१}{२}भू विं + \frac{१}{२} च वि - च विं - श)}{\frac{१}{२} भू विं - \frac{१}{२} च वि}$

$= \frac{त्रि\,(ग्रास - चंविं)}{\frac{१}{२}भू विं - \frac{१}{२}च वि} = \frac{त्रि.\,खग्रा}{मानवियोगदलम्}$

$\therefore \frac{त्रि\,(त्रि - कोज्याखा)}{२} = \frac{ज्या^{२}\,खा}{२} = \frac{त्रि \times त्रि \times खग्रा}{२\ मा\ विद}$

$\therefore ज्या\frac{खा}{२} = \sqrt{१२०} \times \sqrt{\frac{६०\times खग्रा}{माविद}}$

अस्मात् आमानवत्।

खा$= \frac{२\sqrt{१२०}}{२} \times \frac{३२}{३६०} \times \sqrt{\frac{६०\times खग्रा}{मात्रिद}}$

$= \sqrt{\frac{६०\times खग्रा}{मा\ त्रिंद}}$ । अतः

"खच्छन्नात् स्वदलायुजश्च गदिताः खच्छन्नजाशांग्रयः"—इत्येव गणेशदैवज्ञोदितः पाठः स च वासनानभिज्ञैर्भ्रान्त्या भ्रष्टीकृत इति बुद्धिमद्भिर्मध्यस्थबुद्ध्या मदुक्तं विचिन्त्यम्। यथा छन्नमानैक्यदलाभ्यामाशांग्रयः साधितास्तथा द्वयोः स्थाने क्रमेण खच्छन्नमानार्धान्तरे

गृहीत्वा साधिता अंघ्रयः खच्छन्नजा आशांघ्रयः स्युरित्येवाचार्याभिप्रायो वासनया सिध्यतीति सर्वं निरवद्यम् ॥ ११ ॥

मध्याच्छन्नाशांघ्रिभिः प्राक् च पश्चा-
दिन्दोर्व्यस्तं तूष्णगोः स्पर्शमोक्षौ ।
खग्रस्तात् खच्छन्नपादैः परे प्राग्-
दत्तैरिन्दोर्मीलनोन्मीलने स्तः ॥ १२ ॥

**मल्लारिः**—अथ स्पर्शमोक्षदिग्ज्ञानमाह। मध्यग्रहणात् खच्छन्नस्य खग्रासस्य आशांघ्रिभिर्दिक्चरणैः प्राक्पश्चाद्दत्तैरिन्दोश्चन्द्रस्य स्पर्शमोक्षौ स्तः । एतदुक्तं भवति । मध्यग्रहणचिह्नात् छन्नांघ्रयः पूर्वदिशि यथागता गणयित्वा देयाः । तत्र स्पर्शश्चन्द्रस्य भवेत् । तथैव मध्यात् छन्नांघ्रयः पश्चिमदिशि देयाः । तत्र चन्द्रस्य मोक्षः । उष्णगोः सूर्यस्य व्यस्तं विपरीतम् । तद्यथा । मध्यात् छन्नांघ्रयो हि पश्चिमतो देयास्तत्र स्पर्शः । पूर्वदिशि देयास्तत्र मोक्ष इत्यर्थः । खग्रस्तात् खग्रासचिह्नात् खच्छन्नांघ्रिभिः पश्चिमायां दत्तैः संमीलनं स्यात् । पूर्वदिशि दत्तैरुन्मीलनं स्यादिति सूर्यस्य विपरीतं पूर्वदिशि संमीलनम् । पश्चिमदिश्युन्मीलनं स्यात् ।

अत्रोपपत्तिः । चन्द्रग्रहणे तु ग्रासस्य चन्द्रस्य पूर्वगतेर्बाहुल्यात् । अग्रे सरण्याः पूर्वदिशि ग्राहकत्वेन वर्त्तमानायां भूछायायाः बिम्बान्तश्चन्द्रमाः प्रविशति। अतश्चन्द्रबिम्बस्य पूर्वदिशि प्रथमं ग्राहकबिम्बे लग्नत्वात् तत्र स्पर्शः । एवं ग्रहणं कृत्वा पूर्वगतिबाहुल्यात् चन्द्रमा भूछायां पश्चिमतस्त्यक्त्वा गतः । अतो निःसरणे ग्राह्यबिम्बस्य पश्चिमदिशि संयोगोऽतस्तत्र मोक्षः ।

उक्तं च सिद्धान्तशिरोमणौ ।

पूर्वाभिमुखो गच्छन् भूछायान्तर्यतः शशी विशति ।
तेन प्राक् प्रग्रहणं पश्चान्मोक्षोऽस्य निःसरतः ॥

सूर्यग्रहणे हि सूर्यस्य ग्राह्यस्य पूर्वगतेरपेक्षया चन्द्रस्य ग्राहकस्य पूर्वगतिबाहुल्यात् ग्राहकेण पश्चिमस्थेन पूर्वदिग्वर्त्तमानस्य ग्राह्यस्य स्पर्शः कृतोऽतो ग्राह्यबिम्बस्य पश्चिमदिशि स्पर्शः । निःसरणवेलायां ग्राह्यबिम्बस्य पूर्वदिशि ग्राहकबिम्बं लग्नमतोऽत्र मोक्षःअनयैव युक्त्या सम्मीलनोन्मीलनदिशोरुपपत्तिर्ज्ञातव्या॥ १२॥

दैवज्ञवर्यस्य दिवाकरस्य सुतेन मल्लारिसमाह्वयेन ।
वृत्तौ कृतायां ग्रहलाघवस्य समाप्त इन्दुग्रहणाधिकारः ॥

इति श्रीगणेशदैवज्ञविरचितग्रहलाघवस्य टीकायां मल्लारिदैवज्ञविरचितायां चन्द्रग्रहणाधिकारः पञ्चमः ॥ ५ ॥

**विश्वनाथः**--अथ स्पर्शमोक्षसंमीलनोन्मीलनदिग्ज्ञानमाह मध्यादिति। मध्यान्मध्यग्रहणादिशः प्राक्पश्चाद्दत्तैश्छन्नाशांघ्रिभिरिन्दोः स्पर्शमोक्षौ स्तः। मध्यग्रहणात् प्राक्पूर्वदत्तैः स्पर्शः पश्चाद्दत्तैर्मोक्ष इत्यर्थः। उष्णगोः सूर्यस्य व्यस्तं विपरीतं प्राग्दत्तेषु छन्नांघ्रिषु मोक्षः। पश्चाद्दत्तेषु स्पर्श इत्यर्थः। खग्रासादिति। यद्दिशि खग्रासस्तद्दिशः सकाशात् परे प्राग्दत्तैः खच्छन्नपादैरिन्दोर्मीलनोन्मीलनाख्ये स्तः। खग्रासात् पश्चाद्दत्तैः संमीलनं पूर्वदत्तैरुन्मीलनम्। अस्माद्रवेर्विपरीतं पूर्वदत्तैः सम्मीलनं पश्चादुन्मीलनम्। अत्राचार्येणोक्तः सूर्यखग्रासः कदाचिद्भविष्यतीति ॥ १२ ॥




इति चन्द्रग्रहणाधिकारः।

**सुधाकरः**—आशांघ्रिस्थितिः परिलेखे या पूर्वं प्रदर्शिता तयाऽऽशांघ्र्यादिदानं सर्वं स्फुटमिति वासना सुगमा ॥ १२ ॥

इति सुधाकरनिर्मितवासना सकलया कलया कलयासना।
इह शशिग्रहणे परया गता भवलयावलया वलयाऽऽगता ॥

इति चन्द्रग्रहणाधिकारः ॥

## अथ सूर्य्यग्रहणाधिकारः ।

लग्नं दर्शान्ते त्रिभोनं पृथक्स्थं
तत् क्रान्त्यंशैः संस्कृतोऽक्षो नतांशाः ।
तद्दिग्द्व्यं-२२शो वर्गितश्चेद्‌द्विकोर्ध्वो-
ऽधोऽसा द्व्यूनः खण्डितस्तद्युतः सः ॥ १ ॥
सार्को हारः स्यात् त्रिभोनोदयार्क-
विश्लेषांशा-१० शांशहीनघ्नशक्राः ।
हाराप्ताः स्याल्लम्बनं नाडिकाद्यं
तिथ्यां स्वर्णं वित्रिभेऽर्काधिकोने ॥ २ ॥

**मल्लारिः**-----अथ सूर्यग्रहणाधिकारो व्याख्यायते । तत्रादौ लम्बनं वृत्तद्वयेन साधयति । अमान्ते लग्नं कृत्वा तत् त्रिभेण राशित्रयेण ऊनं सत् पृथक् अन्यत्र स्थाप्यम् । तत्क्रान्त्यंशैः संस्कृतोऽक्षोऽक्षांशा नतांशाः स्युः । संस्कारस्तु एकदिशोर्योगो भिन्नदिशोरन्तरमिति प्रसिद्धः। तेषां नतांशानां यो द्विद्व्यंशो द्वाविंशतिभागः स वर्गितः कृतवर्गः सन् चेत् द्विकात् द्व्यात् ऊर्ध्वोऽधिको भवति तदाऽसौ अधोऽन्यस्थाने स्थाप्यः । ततोऽत्र द्व्यूनो द्विहीनः सन् खण्डितोऽर्धित यत् फलं तेन स पूर्वस्थापितो युतः। ततः सार्को द्वादशयुक्तः सन् हारः स्यात् । ततस्त्रिभोनोदयो राशित्रयोनलग्नम् । अर्कः सूर्यः । अनयोर्यो विश्लेषोऽन्तरं यथा राशित्रयाल्पं तथा कार्यं तस्य यऽशाः । तेषां य आशांशो दशमांशः । तेन हीनाः संगुणिताश्च ये शक्राश्चतुर्दश ते हाराप्ताः सन्तो नाडिकाद्यं लम्बनं स्यात् । तत् तिथ्याममाघटीषु स्वर्णं कार्यम् । कदेत्याह । वित्रिभे त्रिभोनलग्नेऽर्कादधिके धनम् ऊने ऋणमिति ।

अत्रोपपत्तिः । ननु किं नाम लम्बनम् । उच्यते । लम्बनमित्यन्वर्थं नाम । यतो दृक्सूत्राच्चन्द्रो यावताऽन्तरेण लम्बितस्तल्लम्बनम् । अहो लम्बनं चन्द्रग्रहणे कथं नास्ति सूर्यग्रहणे कथमित्युच्यते । चन्द्रग्रहणे तु चन्द्रो ग्राह्यः स्वकक्षायां भ्रमति । भूछायाऽपि ग्राहकरूपा चन्द्रकक्षायामेव साधिताऽस्ति । अतो ग्राह्यग्राहकसमकक्षत्वात् लम्बननत्योरभावः । सूर्यग्रहणे तु ग्राह्यग्राहकयोः सूर्यचन्द्रयोर्भिन्नकक्षत्वाल्लम्बननती उत्पन्ने । अत्र भङ्गिं विरचय्य सूर्यस्य लम्बननत्युपपत्तिं शिष्यान् प्रति दर्शयेत् । तत्र किञ्चिदुच्यते । प्रथमं भूवृत्तं लघु गतितिथ्यंशतुल्यांशं कार्यं तदुपरि चन्द्रकक्षावृत्तं कार्यम् । तस्मादुपरि सूर्यकक्षावृत्तम् ।

अत्र द्वयोर्वृत्तयो राशयो द्वादशाङ्कय :। तत्र यथास्थाने चन्द्रकक्षायां चन्द्रो देयः। सूर्यकक्षायां सूर्यलग्ने अपि यथा स्थाने देये। एवं भूगर्भान्नीयमानं चन्द्रस्योपरि यत् सूत्रं तद्भूगर्भसूत्रमित्युच्यत एवं भूपृष्ठान्नीयमानं सूत्रं दृक्सूत्रमुच्यते। तत् तु सूर्योपरि नीयमानं चन्द्रं सान्तरं त्यक्त्वा याति। अतश्चन्द्रकक्षायां दृक्सूत्राच्चन्द्रो यावताऽन्तरेण लम्बितस्तल्लम्बनम्।

उक्तं च।

'दृक्सूत्राल्लम्बितश्चन्द्रस्तेन तल्लम्बनं स्मृतम्'।

अतो हि भूगर्भस्थलोकानां सूर्यग्रहणेऽपि लम्बनाभावः। दृग्गर्भसूत्रयोरेकीभूतत्वात्। एवमत्र लम्बने केवलं भिन्नकक्षात्वमेव कारणं नो वाच्यम्। भूगर्भे लम्बनाभावदर्शनात्। अतो भिन्नकक्षात्वं द्रष्टृणां भूपृष्ठस्थितित्वं चेति द्वे लम्बनकारणे। लम्बनं तु पूर्वापरं यतो गर्भसूत्रीय चन्द्रे दृक्सूत्रीकरणं पूर्वगत्यैव। एवं ग्रहे पूर्वापरान्तरोत्पत्तौ दक्षिणोत्तरान्तरमप्युत्पन्नं तन्नतिसंज्ञम्। अत्र लम्बनसाधनोपायो यथा। क्षितिजे दृग्गर्भसूत्रयोः परममन्तरं चन्द्रगतितिथ्यंशतुल्यकलानां सूर्यगतितिथ्यंशकलानामन्तरतुल्यम् ४८। ४५। खमध्ये तु दृग्गर्भसूत्रे एकीभूते अतो लम्बनाभावः।

उक्तं च।

'दृग्गर्भसूत्रयोरैक्यात् खमध्ये नास्ति लम्बनम्' इति।

क्षितिजे रवितुल्यं लग्नम्। तस्मिन् त्रिभे हीने कृते तत् सूर्यान्तरं त्रिभमेवातोऽस्माल्लम्बनं साध्यम्। यतः खमध्ये त्रिभोनलग्नं रवितुल्यमतस्तदन्तराभावे लम्बनाभावश्च। अत्रानुपातः। यदि त्रिज्यातुल्यया सूर्यत्रिभोनलग्नान्तरदोर्ज्ययेदं परमं लम्बनं तदेष्टदोर्ज्यया किमिति। अत्र लम्बनकलानां घटीकरणार्थमनुपातः। यदि गत्यन्तरकलाभिः षष्टिघटिकास्तदा लम्बनकलाभिः किमिति जातं घटिकाद्यं परमं लम्बनम्। अनेन दोर्ज्या गुण्या त्रिज्यया भाज्येष्टलम्बनं स्यादित्यत्राचार्येण भागेभ्य एव साधितम्। तद्यथा। 'त्रिभोनोदयार्कविश्लेषांशाशांशहीनघ्नशक्रा' इति। परमिदं लम्बनं मध्यमम्। यतः खमध्यक्षितिजयोरन्तरं सर्वत्र त्रिभमेव लक्षितम्। तन्न। यतो याम्योत्तरक्षितिजयोरन्तरं सर्वत्र त्रिभं नास्ति। अतः खमध्य एवेदं लम्बनमिष्टयाम्योत्तरवृत्तीयकरणार्थमनुपातः। खमध्ये तु त्रिभोनलग्नस्य नतांशाभावादुन्नतांशाः परमाः। अतोऽनुपातः। यदि द्वादशतुल्ये त्रिभोनलग्नस्य छायाकर्णे इदं लम्बनं तदेष्टछायाकर्णे किमिति। अत्र व्यस्तत्रैराशिकम्। एवमत्रेष्टत्रिभोनलग्नान्तरदोर्ज्यायाः परमलम्बनमिदं घटिकाद्यमसकृत्प्रकारत्यागाद्घटीचतुष्टयाद्नं गृहीतम् ३।४५

अयं गुणः । द्वादश च १२ गुणः । त्रिज्या १२० हरः। अत्र त्रिज्यातुल्येष्टदोर्ज्या १२०गुणघातगुणा त्रिज्याभक्ता । गुणघातो जाताः ४५ । एतावती त्रिज्या कृता। इयं त्रिभोनोदयार्कविश्लेषांशाशांशहीनघ्नशक्रतुल्या भवति ।अतः सा दोर्ज्या छायाकर्णभक्ता स्पष्टं लम्बनं स्यात् । तदर्थं त्रिभोनलग्नस्य नतोन्नतलवाः साध्याः । ततोऽनुपातः।यदि उन्नतांशज्याकोटौ त्रिज्या कर्णस्तदा द्वादशकोटौ क इति । एवमत्र छायाकर्णो द्वादशेभ्यो नतांशद्वाविंशत्यंशवर्गेणाधिको भवति । अतो द्वादश नतांशद्वाविंशत्यंशवर्गयुक्ताश्छायाकर्णः स्यात् । तस्य हरसंज्ञा कृता । यतः स दोर्ज्याया हरः । इदं नतांशद्वाविंशत्यंशवर्गे घ्ने भवति । अधिके सान्तरम्। तद्यथा। द्व्यधिकाद्द्वयमपास्य यच्छेषं तदर्धमपि। तेन नतांशद्वाविंशत्यंशवर्गेण युक्तं तावद् द्वादशछायाकर्णान्तरम् । अनेन द्वादश युक्तास्त्रिभोनलग्नच्छायाकर्णो भवति। अनेनेष्टदोर्ज्या भक्ता लम्बनं स्यादित्युपपन्नम् । एतल्लम्बनं चन्द्रगत्या गुणयित्वा षष्ट्या लब्धं चन्द्रे देयम् । तथा रवावपि देयम् । ताभ्यां तिथिः साध्या । अतो हि तल्लम्बनं तिथ्यामेव देयमित्युक्तम् । धनर्णोपपत्तिर्यथा । पूर्वकपाले दृक्सूत्राद्गर्भसूत्रं पूर्वस्यामधो लम्बितमतो ग्रहे पूर्वकपाले धनं देयम् । अत्र त्रिभोनलग्नमकाल्पकमस्ति ग्रहे यद्धनं क्रियते तत् तिथौ ऋणमेव भवति भोग्यत्वात् । तथा पाश्चिमकपाले दृक्सूत्रात् गर्भसूत्रं पश्चिमतो वर्त्ततेऽतो ग्रहे ऋणम् । त्रिभोनलग्नमत्रार्काधिकं यद्ग्रहे ऋणं तत् तिथौ धनम्।अत उक्तं स्वर्णं वित्रिभेऽर्काधिकोन इति । एवं सूर्यग्रहे लम्बनसंस्कृतो दर्शान्तः एवं मध्यकालो भवतीयं युक्तिर्मेऽपरि सविस्तरा ॥ १-२ ॥

## अथ सूर्यग्रहणाधिकारोदाहरणम् ।

**विश्वनाथः**--संवत् १६६७ शके १५३२ । मार्गशीर्षकृष्णे ३० बुधे घटी १२।३६। मूलनक्षत्रे घटी ५१।१२। गण्डयोगे घटी २३।४५। अस्मिन् दिने सूर्यपर्वविलोकनार्थं वर्षगणः ९०। चक्रम् ८। अधिमासः १। अवमानि १५। अहर्गणः १००५। प्रातर्मध्यमः सूर्यः८।५।३९।२५। चन्द्रः ८।१।१०। ३३। उच्चं ८।१७।७।२१। राहुः २।११।४१।५९। आभिर्घटीभि-१२।३६। श्चालितो रविः ८।५।५१।५०। चन्द्रः ८।३।५६।३४। उच्चम् ८।१७।८।४५। राहुः २।११।४१।१९।

अथ स्पष्टीकरणम् । तत्र रवेर्मन्दकेन्द्रम् ६।१२।८।१०। मन्दफलमृणम् ०।२७।५०। संस्कृतो रविः ८।५।२४।०। अयनांशाः १८।८। चरखण्डानि ५७। ४६।१९। चरं धनम् १७। अनेन संस्कृतो जातः स्पष्टो रविः ८।५।२५।५७।

स्पष्टा गतिः ६११५। फलत्रयसंस्कृतश्चन्द्रः ८।४।१०।५३। मन्दकेन्द्रम् ०।१२।
।५७।५२। मन्दफलं धनम् १।९।४८। संस्कृतो जातः स्पष्टश्चन्द्रः ८।५।२०।४१।
स्पष्टा गतिः ७२६।३०। आभ्यां तिथिघटी ०।२८। अनया पञ्चाङ्गस्थघटिकाः
१२।३६। युक्ता जातः पर्वान्तकालः १३।४। आभिर्घटीभिः ०।२८। चालिता
जाताः पर्वान्तकालीनाः सूर्यादयः ८।५।२६।२५। चन्द्रः ८।५।२६।२०। राहुः
२।११।४१।१८। विराह्वर्कः ५।२३।४५।७॥

अथ लम्बनसाधनं श्लोकद्वयेनाह लग्नमिति। सार्को हार इति। दर्शान्ते लग्नं साध्यम्। तत्र रवेर्भोग्यकालः ७३। दर्शान्तः १३।४। लग्नम् ११।२।४६। १७। राशित्रयरहितम् ८।२।४६।१७ इदं द्विस्थम् ८।२।४६।१७। अस्य सायनस्य 'स्युः खण्डानि'—*इत्यादिना क्रान्तिर्दक्षिणा २३।३८।१०। अक्षांशा दक्षिणाः २५।२६।४२। अनयोरेकादिक्त्वात् योगो जाता नतांशा दक्षिणाः ४९। ४।५२। एषां द्विद्व्यंशो २।१३।५१ वर्गितः ४।५८। अयं द्वाभ्यामधिकः। अतो द्विघ्नः ४।५८। द्वाभ्यामूनः २।५८। अर्धितः १।२९। अनेन युतो द्विस्थः ६।२७। सार्को जातो हारः १८।२७। वर्गश्चेद्द्वाभ्यामूनस्तदा स वर्गः सार्को हारः स्यात्। त्रिभोनलग्नम् ८।२।४६।१७। अर्कः ८।५।२६।२५। अनयोर्विश्लेषः ०।२।४०।८। अत्र त्रिभोनलग्नार्कयोरन्तरं यथा राशित्रयाल्पं भवति तथा कार्यम् अनयोर्मध्ये यः शोध्यते स न्यूनो ज्ञेयोऽन्योऽधिक इत्यर्थतः सिद्धम्। इदं धनर्णताज्ञानार्थमुक्तम्। अत्र कल्पितं त्रिभोनलग्नम् ८।२।४६।१७। अर्कः ८।५। २६।२५ अनयोरन्तरम् ०।२।४०।८। अस्माल्लम्बनमृणं ज्ञेयम्। अर्कात्त्रिभोनलग्नस्य न्यूनत्वादस्यांशाः २।४०।८। एषां दशमांशः ०।१६। शक्रा १४ दशमांशेन ०।१६। हीनाः १३।४४। एते दशमांशेनैव गुणिताः ३।३९। हारेण १८।२७ भक्ताः फलं घटिकाद्यं लम्बनमृणम् ०।११। वित्रिभस्यार्कान्न्यूनत्वात्। तत् तिथ्यां तिथिघटिकादिके स्वर्णं कार्यम्। कस्मिन् सति वित्रिभेऽर्काधिकोने सति त्रिभोनलग्नेऽर्काधिके स्वं धनं कार्यं हीने ऋणं कार्यमित्यर्थः। तस्मिन् तिथ्यन्ते मध्यग्रहणो भवतीति लम्बनसंस्कृतास्तिथ्यन्तः १२।५३॥१-२॥

*'चत्वारिंश' इत्यादिना वा।

# अथ सूर्यग्रहणाधिकारः ।

**सुधाकरः**—याम्योत्तरवृत्तासन्नमेव स्वल्पान्तराद्वित्रिभं प्रकल्प्य तदीयमध्यनतांशसमाना एव वित्रिभनतांशाः कल्पिताः । मध्यनतांशानयनं तु 'पलावलम्बावपमेन संस्कृतौ' इति भास्करप्रकारेण स्फुटमेव । अथ 'त्रिभोनलग्नार्कविशेषशिञ्जिनी' इत्यादिभास्करविधिना स्फुटलम्बनसाधनार्थं तावत् त्रिभोनलग्नार्कयोर्विशेषस्य 'वि' संज्ञकस्य खार्कमितव्यासार्धे 'दोःकोटिभागरहिताभिहताः' इत्यादिश्रीपतिप्रकारेण ज्या साध्यते ।

$$ज्यावि = \frac{(१८० - वि)\, वि \times ४ \times १२०}{४०५०० - (१८० - वि)\, वि}$$

शतेनापवर्त्तिते

$$ज्यावि = \frac{\left(१८ - \frac{वि}{१०}\right)\frac{वि}{१०} \times ४८०}{४०५ - \left(१८ - \frac{वि}{१०}\right)\frac{वि}{१०}} = \frac{\left(१८ \times \frac{७}{९} - \frac{७}{९} \times \frac{वि}{१०}\right)\frac{वि}{१०} \times ४८०}{४०५ \times \frac{७}{९} - \frac{७}{९}\left(१८ - \frac{वि}{१०}\right)\frac{वि}{१०}}$$

(अंशहरयोः $\frac{७}{९}$ गुणितेन)

$$= \frac{\left(१४ - \frac{१}{१ + \frac{२}{७}} \times वि\right)\frac{वि}{१०} \times ४८०}{४५ \times ७ - \frac{७}{९}\left(१८ - \frac{वि}{१०}\right)\frac{वि}{१०}} = \frac{\left(१४ - \frac{वि}{१०}\right)\frac{वि}{१०} \times ४८०}{३१५ - \frac{७}{९}\left(१८ - \frac{वि}{१}\right)\frac{वि}{१०}}$$

( स्वल्पान्तरादर्थाल्पत्वेना-ऽंशस्यापगमात् )

एवमेव यदि वित्रिभनतांशाः = न तदा वित्रिभशंकुचापांशाः = ९० − न ततः श्रीपतिविधिनैव

$$विशं = शं = \frac{(९० + न)(९० - न) \times ४ \times १२०}{४०५०० - (९० + ९)(९० - न)}$$

$$= \frac{(८१०० - न^{२})\, ४८०}{४०५००-(८१००-न^{२})} = \frac{(८१०० - न^{२})\, ४८०}{३२४०० + न^{२}}$$

अत्र यदि स्वल्पान्तरात्

$$\frac{३२४०० + न^{२}}{८१०० - न^{२}} = ४ + \frac{५ न^{२}}{८१०० - न^{२}} = ४ + \frac{न^{२}}{१६२० - \frac{न^{२}}{५}}$$

$$= ४ + \frac{न^{२}}{१६२०} + \frac{न^{४}}{५ \times १६२० \left(१६२० - \frac{न^{२}}{५}\right)} = ४ + \frac{न^{२}}{१६२०}$$ स्वल्पान्तरात् ।

तदा

$$शं = \frac{४८०}{४ + \frac{न^{२}}{१६२०}}$$ । ततो भास्करविधिना घट्यादिकं स्फुटं लम्बनम् $= \frac{४ ज्यावि \times शं}{त्रि \times त्रि}$

$$= \frac{४\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}\times ४\times १२०\times\left(\frac{४८०}{न^{२}\ .\ २\ \overline{१\ :\ ०}}\right)}{१२०\times १२०\left\{३१५-\frac{७}{९}\left(१८-\frac{वि}{१०}\right)\frac{वि}{१०}\right\}}$$

$$= \frac{४\times ४\times ४}{\left\{३१५-\frac{७}{९}\left(१८-\frac{वि}{१०}\right)\frac{वि}{१०}\right\}}\ \frac{\left(१४-\frac{}{१०}\right)\frac{वि}{१०}}{\left\{४+\frac{न^{२}}{१६२०}\right\}}$$

$$= \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{\left\{\frac{३१५}{६४}-\frac{७}{९\times ६४}\left(१८-\frac{वि}{१०}\right)\frac{वि}{१०}\right\}\left\{४+\frac{न^{२}}{१६२०}\right\}}$$

$$= \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{\left\{\frac{३१५\times २४२}{६४\times २४२}-\frac{७}{९\times ६४}\left(१८-\frac{वि}{१०}\right)\frac{वि}{१०}\right\}\left\{४+\frac{न^{२}}{१६२०}\right\}}$$

अत्र यदि रूपाल्पत्वात् $\frac{७}{९\times ६४}\left(१८-\frac{वि}{१०}\right)\frac{वि}{१०}$ इदं स्वल्पान्तरतस्त्यज्यते तदा

$$लम्बनम् = \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{\frac{३१५\times २४२}{६४\times २४२}\left(४+\frac{न^{२}}{१६२०}\right)} = \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{\frac{११९१}{२४२}\left(४+\frac{न^{२}}{१६२०}\right)}$$

$$= \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{\left(\frac{११९१}{२४२}+\frac{२४}{२४२}-\frac{२४}{२४२}\right)\left(४+\frac{न^{२}}{१६२०}\right)}$$

$$= \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{\left(\frac{१२१५}{२४२}-\frac{२४}{२४२}\right)\left(\frac{२६६२}{१२१५}+४-\frac{२६६२}{१२१५}+\frac{न^{२}}{१६२०}\right)}$$

$$= \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{\left(\frac{१२१५}{२४२}-\frac{२४}{२४२}\right)\left(\frac{२६६२}{१२१५}+\frac{२१९८}{१२१५}+\frac{न^२}{१६२०}\right)}$$

अत्र यदि प्रथमखण्डे रूपाल्पत्वात् $\frac{२४}{२४२}$ इदं त्यज्यते तथा लम्बनमानस्य सर्वदा घटिकाचतुष्कादल्पत्वाद्धरे द्वितीयखण्डे च 'कोट्या हतैरङ्ककृतेन्दुविश्वै'रिति भास्करप्रकारे हाराल्पीकरणनिदर्शनात् $\frac{२१९८}{१२१५}$ इदं त्यज्यते तदा लम्बनमानम्

$$= \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{\frac{१२१५}{२४२}\left(\frac{२६६२}{१२१५}+\frac{न^२}{१६२०}\right)} = \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{\frac{२६६२}{२४२}+\frac{१२१५\times न^२}{१६२०\times २४२}}$$

$$= \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{११+\frac{३\ न^२}{४\times २४२}} = \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{१२+\frac{३\ न^२}{२\times ४८४}-१}$$

$$= \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{१२+\frac{न^२}{४८४}+\frac{न^२}{२\times ४८४}-१} = \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{१२+\frac{न^२}{४८४}+\frac{१}{२}\left(\frac{न^२}{४८४}-२\right)}$$

$$= \frac{\left(१४-\frac{वि}{१०}\right)\frac{वि}{१०}}{१२+\left(\frac{न}{२२}\right)^२+\frac{१}{२}\left\{\left(\frac{न}{२२}\right)^२-२\right\}}$$ अत्र यावत्

$\left(\frac{न}{२२}\right)^२$ इदं रूपद्वयादल्पं तावत् स्वल्पान्तराद्धरस्य तृतीयं खण्डं त्यक्तमाचार्येण ततोऽग्रे गृहीतम् । अत उपपन्नं लम्बनानयनम् । धनर्णोपपत्तिश्च 'रवौ तदूनेऽभ्यधिके च तत् स्यादेवं नर्णं क्रमतश्च वेद्य'मिति भास्करोक्तेन स्फुटा ॥ १—२ ॥

त्रिकुनिघ्नविलम्बनं कलास्त-
त्सहितोनस्तिथिवद्व्यगुः शरोऽतः ।
अथ षड्गुणलम्बनं लवास्तै-
र्युगयुग्धित्रिभतः पुनर्नतांशाः ॥ ३ ॥

**मल्लारिः**—अथ लम्बनकाले व्यगोश्चालनमाह । त्रयोदशगुणितं लम्बनं कलाः स्युः । तिथिवद्व्यगुस्ताभिः कलाभिः सहितोनः । तिथौ चेल्लम्बनं धनं तदा व्यगावपि धनम् । ऋणं चेदत्रापि ऋणमिति । अतोऽमुष्माद्व्यगोः शरः पूर्ववत् साध्यः । अथ शब्दोऽनन्तरवाची । षड्गुणलम्बनं लवाः स्युः । तैर्लवैर्युग्वियुग्विंत्रिभतो नतांशाः साध्याः। ततः क्रान्त्यक्षांशसंस्कारेण नतांशाःसाध्याः। एतदुक्तं भवति । षड्गुणलम्बनं भागास्ते त्रिभोनलग्ने लम्बने धने सति धनं कार्याः । ऋणे लम्बने सति ऋणं कार्यास्ततः क्रान्त्यक्षांशसंस्कारेण नतांशाः साध्या इत्यर्थः ।

अत्रोपपत्तिः । यदि षष्टिघटिकाभिर्विपातचन्द्रगतिकला ७८७ एतास्तदा लम्बनकलाभिः किमिति गुणहरयोर्हरेणापवर्त्तितयोर्जाता गुणस्थाने त्रयोदश१३। अतस्त्रिकुनिघ्नविलम्बनमिति । अथ मध्यकालीनं त्रिभोनं लग्नं कार्यम् । तत्र लाघवार्थं लम्बनेन दर्शान्तकालीनं त्रिभोनलग्नमेव चालयति । तत्र घटिकाः षड्गुणा भागा भवन्ति । यतः षष्टिघटिकानां चक्रभागाः । अतो हि षड्गुणलम्बनं दर्शान्तकालीनत्रिभोनलग्ने धनमृणं कार्यं तन्मध्यकालीनत्रिभोनलग्नं भवति । अतो नतांशाः कार्या नतिसाधनार्थमेव ॥ ३ ॥

**विश्वनाथः**—अथ व्यगोर्लम्बनसंस्कारमाह त्रिकुनिघ्नेति । विलम्बनं ०।११ त्रयोदशगुणं जातं कलाद्यम् २ । २३ । व्यगुः ५ । २३ । ४५ । ७ । लम्बनस्य तिथौ ऋणत्वाद्व्यगावपि ऋणमतो लम्बनसंस्कृतो व्यगुः ५ । २३ । ४२।४४। अस्य भुजांशाः ६।१७।१६। अस्मात् 'तेंऽशा निघ्नाः' इत्यादिना जातः शरः ९ । ५४ । विराह्वर्कस्योत्तरगोलत्वादुत्तरं लम्बनम् ।०।११। षड्गुणं जातं लवाद्यम् १ । ६ । पृथक्स्थं त्रिभोनलग्नम् ८ । २ । ४६ । १७ । लम्बनस्य ऋणत्वाल्लवाद्येन हीनम् । ८ । १ । ४० । १७ । अस्य क्रान्तिर्दक्षिणा २३ । ३४ । ३५ । अक्षांशैः २५ । २६ ।४२ । संस्कृता जाता नतांशा दक्षिणाः ४९ । १ । १७ ॥ ३ ॥

**सुधाकरः**—दर्शान्ते यावान् विराह्वर्कस्तावानेव सपातचन्द्रो राहोश्चक्रशुद्धत्वात् । स च सपातचन्द्रो लम्बनसंस्कृतदर्शान्ते लम्बनघटीचालनेन क्रियते ।घटीषष्ट्या सपातचन्द्रगतिः स्वल्पान्तरात् ७९०′ । ३५″+ ३′ । ११″= ७९३′ । ४६″ इयं मध्यमसपातगतितुल्या लभ्यते तदा लम्बनघटीभिः किम् । जातं कलात्मकं चालनम् $= \frac{७९३ । ४६}{६०}$ लं० = १३ लं० स्वल्पान्तरात् । इदं चालन लम्बने धने धनं ऋणे ऋणमिति स्फुटमेव ।

अथ कल्प्यते 'उ' उन्नतकाले गर्भीयदर्शान्तस्तदा लम्बनस्य धनत्वे ऋणत्वे च क्रमेण लम्बनसंस्कृतदर्शान्ते पृष्ठीयदर्शान्ते उन्नतकालः=उ+लं० अत उन्नतघटीसंबन्धि लग्नं लम्बनघटीभवफलेनाधिकं हीनं च पृष्ठीयदर्शान्ते लग्नं भवति। अत्र स्वल्पान्तरात् घटयात्मकं लम्बनं षड्गुणमिदमंशात्मकं फलमेव द्वयोर्लग्नयोरन्तरं प्रकल्पितम्। ततः पृल = गदल ± ६ लं

∴पृल−३=पृवित्रि=गदल−३ ± ६ लं

∴ =गदवि ± ६ लं

अतः सर्वमुपपन्नम् ॥ ३ ॥

**दशहतनतभागोनाहताष्टेन्दवस्त-**
**द्रहितसधृतिलिप्तैः षड्भिराप्तास्त एव।**
**स्वदिगिति नतिरेतत्संस्कृतः सोऽङ्गुलादिः**
**स्फुट इषुरमुतोऽत्र स्यात् स्थितिच्छन्नपूर्वम् ॥४॥**

**मल्लारिः**—अथ नतिसाधनमाह। दशभक्ता ये नतांशास्तैरूनाः सन्तस्त एव गुणिता ये अष्टेन्दवस्ते कलाद्याः पृथक् स्थाप्याः। तै रहिता हीना ये सधृतिलिप्ताः षड्भागाः। अष्टादशकलान्विताः षड्भागास्ताभिः कलाभिर्हीनाः कार्या इत्यर्थः। ततो यच्छेषं तेन ते पृथक्स्था भाज्याः। यल्लब्धं सा स्वदिक् नतांशदिक् नतिः स्यात्। एतया नत्या संस्कृतः सोऽङ्गुलादिः शरः स्फुटः स्यात्। अमुतो हि स्पष्टशरादेव स्थितिच्छन्नपूर्वं साध्यम्।

अत्रोपपत्तिः। नतिकारणं तु लम्बनानयने उक्तमेव। तत्साधनार्थमनुपातः। यदि त्रिज्यातुल्यया १२० नतांशज्यया परमा नतिकलाः ४८। ४५। तदेष्टनतांशज्यया किमिति। ता नतिकलास्त्रिभक्ता अंगुलानि स्युः १६। १५। तथाऽत्र त्रिज्या ८१ धृता। इयं दशहृतनतभागोनाहताष्टेन्दुतुल्या भवति। इयं त्रिज्या ८१ केन भक्ता परमनतिः स्यादतः परमनत्यंगुलभक्ता जातो हरः ५। ५७। अयं हरस्त्रिज्यातुल्यकलोनसाष्टादशकलाषड्भागतुल्य एव (स्वल्पान्तरात्)। अतस्तद्रहितसधृतिलिप्तैः षड्भिस्त एव भक्ता अंगुलाद्या नतिः स्यादित्युपपन्नम्। खमध्याद्दक्षिणत उत्तरतो वा त्रिभोनलग्नं यावद्भिर्नतांशैर्नतं स्यात् तद्वशेनैव दृक्सूत्राच्चन्द्रोऽपि दक्षिणत उत्तरतो वा नतिसंज्ञनान्तरेण नतो भवति। अतो हि नतांशदिगेव नतिर्भवतीत्युपपन्नम्। इयं नतिः स्थूला स्वल्पान्तरा भवति। अत्र नतिर्याम्योत्तरमन्तरम्। शरोऽपि याम्योत्तरः। अतो नतिसंस्कृत एव शरः स्पष्टशरो भवति। अस्मादेव छन्नस्थित्यादिकं साध्यम्। यतो हि मानैक्यखण्डं कर्णः।

ग्राह्यग्राहकयोर्याम्योत्तरमन्तरं कोटिः । सा तु नतिसंस्कृतशरतुल्यैव भवति । चन्द्रग्रहणे तु नतेरभावात् केवलशरतुल्यैव भवति ॥ ४ ॥

**विश्वनाथः**--अथ नतिसाधनमाह दशेति । नतभागाः ४९।१।१७। दश॰ भक्ताः फलम् ४ । ५४। अष्टेन्दवो १८ दशभक्तफलेन हीनाः १३ । ६ । एते दशभक्तफलेनैव गुणिता जाताः कलाः ६४ । ११ । एताः पथक्स्थाः ६४ ।११। तद्रहितसधृतिलिप्तः षड्भिस्त एवाप्ताः । तद्यथा । धृतिलिप्ताभिः सहितैः षड्भिर्भागैरिति 'दशहृतनतभागोनाहताष्टेन्दव' इत्यादिना कलादि यत् फलं तदष्टादश कलामध्ये रहितं कार्यं कलास्थाने यदा न शुध्यति तदा षड्भागादेको ग्राह्यः। यदा कलात्मकफलं षष्ट्यधिकं तदा षष्टिभक्तं भागात्मकं कार्यं तत् भागस्थाने शोध्यम्। अनेन य पृथक् स्थितास्ते भाज्याः फलं स्वदिक् नतांशादिक् अंगुलाद्या नतिः स्यात् । एतत्संस्कृतोऽगुलादिः शरः स्फुटः स्यात् । अमुतः स्फुटशरादुक्तवत् स्थितिच्छन्नादिकं कार्यम् । कलात्मकं फलम् ६४ । ११ । अनेन एते ६। १८ । रहिताः ५ । १३ । ४९ । अनेन पथक्स्था ६४ । ११ भक्ताः फलमंगुलाद्या नतिर्दक्षिणा १२ । १६ । नतांशानां दक्षिणत्वात् नत्या संस्कृतोऽगुलादिः शरो जातः स्पष्टः शरो दक्षिणः २।२२ । 'गातिर्द्विघ्नी' * इत्यादिना रविविम्बम् ११। ८ । चन्द्रविम्बम् ९ । ४९ । मानैक्यखराडम् १०। २८ । ग्रासः ८ । ६ ।

अथ स्थित्यानयनम् । मानैक्यखराडम् १० । २८ । इषुणा २ । २२ सहितम् १२ । ५० । दशघ्नम् । १२८ ।२० ग्रासेन ८। ६। गुणितम् १०३९ ।३० । इदं वारद्वयं षष्ट्या सवर्णितम् ३७४२२०० । अस्य मूलम् ३२। १४ । इदं पृथक् ३२ । १४ । अस्य रसांशेन ५।२२ । पृथक्स्थं हीनम् २६ । ५२ । चन्द्रविम्बेन ९ । ४९ । भक्तं फलं जाता घटिकादिका स्थितिः २ । ४४ ॥ ४ ॥

**सुधाकरः**— कल्प्यते पृष्ठीयदर्शान्ते वित्रिभनतांशाः =न ।

तदा श्रीपतिप्रकारेण नतांशानां ज्या खार्कमिते व्यासार्धे

$$\text{ज्यान} = \frac{(१८०-\text{न})\text{न}\times४\times१२०}{४०५००-(१८०-\text{न})\text{ न}}$$

$$= \frac{\left(१८-\frac{\text{न}}{१०}\right)\frac{\text{न}}{१०}\times४\times१२०}{४०५-\left(१८-\frac{\text{न}}{१०}\right)\frac{\text{न}}{१०}} \quad \text{।( १०० अपवर्तिते )}$$

---

* अयं श्लोकोऽस्यैव ग्रन्थस्य २०० पृष्ठे विलोक्य ।

अथ गत्यन्तरपञ्चदशांशसमाः परमा नतिकलाः = (४८′ । ४५″) त्रिभिर्हृताः परमाऽङ्गुलात्मिका नतिः = १६ । १५ । ततोऽनुपातो यदि त्रिज्यया परमा नतिस्तदेष्टवित्रिभनतांशज्यया किमिति जाताऽङ्गुलात्मिका नतिः

$$= \frac{\left(१८ - \frac{न}{१०}\right)\frac{न}{१०} \times ४ \times (१६' । १५'')}{४०५ - \left(१८ - \frac{न}{१०}\right)\frac{न}{१०}} = \frac{\left(१८ - \frac{न}{१०}\right)\frac{न}{१०} \times ६५'}{४०५ - \left(१८ - \frac{न}{१०}\right)\frac{न}{१०}}$$

$$= \frac{\left(१८ - \frac{न}{१०}\right)\frac{न}{१०}}{\frac{४०५}{६५} - \frac{\left(१८ - \frac{न}{१०}\right)\frac{न}{१०}}{६५}} = \frac{\left(१८ - \frac{न}{१०}\right)\frac{न}{१०}}{(६।१४) - \frac{\left(१८ - \frac{न}{१०}\right)\frac{न}{१०}}{६५}}$$

अत्र हरस्य ऋणात्मके द्वितीयखण्ड '६५' इत्यस्य स्थाने स्वल्पान्तरेण '६०' इदं गृहीतम् । ततः ऋणात्मकखण्डस्याधिकत्वात् धनात्मके प्रथमखण्डे तारतम्यात् १४ स्थाने (१८) इति गृहीतं यथा वियोज्यवियोजकान्तरे पुनरपि वास्तवो हरो भवेदेवं जाताऽङ्गुलात्मिका नतिः

$$= \frac{\left(१८ - \frac{न}{१०}\right)\frac{न}{१०}}{(६।१८) - \frac{\left(१८ - \frac{न}{१०}\right)\frac{न}{१०}}{६०}}$$

। अत्र यदि हरे ऋणात्मकं खण्डं १८ जातायं क्रियते तर्हि तत् षष्टिगुणं कार्यम् । एवं कृते जाता नतिः

$$= \frac{\left(१८ - \frac{न}{१०}\right)\frac{न}{१०}}{(\overset{\circ}{६}।१८') - \left(१८ - \frac{न}{१०}\right)\frac{न}{१०}}$$

अत उपपन्नं सर्वम् ॥ ४ ॥

**स्थितिरसहतिरंशा वित्रिभं तैः पृथक्स्थं**
**रहितसहितमाभ्यां लम्बने ये तु ताभ्याम् ।**
**स्थितिविरहितयुक्तः संस्कृतो मध्यदर्शः**
**क्रमश इति भवेतां स्पर्शमुक्त्योस्तु कालौ ॥५॥**

**मल्लारिः**----अथ स्पर्शकालमोक्षकालौ साधयति । षड्गुणा स्थितिरंशाः स्युः । तैरंशैर्मध्यदर्शान्तकालीनं पृथक्स्थापितं त्रिभोनलग्नं स्पर्शार्थं रहितं मोक्षार्थं सहितं कार्यम् । आभ्यां त्रिभोनलग्नाभ्यां पृथक् लम्बने साध्ये । ताभ्यां लम्बनाभ्यां स्थित्या विरहितयुक्तो मध्यो गणितागतो दर्शः संस्कृतः कार्यः । तद्यथा । स्पर्शार्थं तिथौ स्थितिर्हीना कार्या । तस्यां तल्लम्बनं धनमृणं लक्षणागतं कुर्यात् ।

स स्पर्शकालो भवति । तथैव मोक्षार्थं दर्शान्ते स्थितिर्योज्या । तस्यां स्वीयं लम्बनं संस्कार्यं स मोक्षकालो भवतीत्यर्थः ।

अत्रोपपत्तिः । स्थितिहीनयुक्ततिथेः पृथक् त्रिभोनलग्ने साध्ये । ताभ्यां लम्बने अपि साध्ये । ते स्थितिहीनयुक्ततिथौ देये तौ स्पर्शमोक्षौ भवत इत्यत्र लाघवार्थं त्रिभोनलग्ने स्थितिघटीभिश्चालिते । तत्र स्थितिघटिका यावत् षड्गुणा क्रियन्ते तावद्भागा भवन्ति । ते भागा दर्शान्तकालीने त्रिभोनलग्ने स्पर्शकालीनकरणार्थमृणं देयाः प्राक् कपालत्वात् । मोक्षार्थं धनं देया अग्रेसरत्वादित्युपपन्नम् । अत्रार्कोऽपि स्थितिचालितो गृह्यते चेत् सूक्ष्मता स्यादिति द्रष्टव्यम् ॥५

**विश्वनाथः**----अथ स्पर्शमोक्षकालज्ञानमाह स्थितिरिति । स्थिति २।४४। रस ६ हतिर्जाता अंशाः १६।२४। वित्रिभम् ८।२।४६।१७। पृथक्स्थम् ८।२।४६।१७। एकत्रांशै रहितम् ७।१६।२२।१७। अपरत्र सहितम् ८।१९।१०।१७। स्पर्शे साध्यमाने रहितं मोक्षे सहितं स्पर्शमोक्षजे वित्रिभे भवतः। इत्यनेन प्रकारेण, गणितागततिथ्यन्तात् मध्यास्थितितुल्यघटिकाभिः स्पर्शमोक्षकालीनकरणार्थं चालनं सुगमत्वादुक्तम् । परन्तु किञ्चित् स्थूलं भवति । अथ सूक्ष्मोपायः । तिथ्यन्तकालीनसूर्यस्य स्थितितुल्यघटिकाभिर्गतगम्यचालनं दत्वा स्पर्शमोक्षकालीनः सूर्यः कार्यः । स्पर्शे चालनं रहितं कार्यं मोक्षे सहितमिति । एवं मध्यदर्शान्त एकत्र स्थितिघटिकाभी रहितः कार्यस्तत्र स्पर्शकालो भवति । अपरत्र युक्तः कार्यस्तत्र मोक्षकालो भवति । ताभ्यां लग्नं साध्यम् । तत् त्रिभोनं कार्यं तदा स्पर्शमोक्षजे वित्रिभे भवतः । आभ्यां लम्बने कार्ये तत्र प्रथमं रहितात् लम्बनं साध्यते । वित्रिभम् ७।१६।२२।१७। अस्य क्रान्तिः दक्षिणा २१।२४।३९। अक्षांशैः २५।२६।४२। संस्कृता जाता नतांशा दक्षिणाः ४६।५१।२१। अस्य द्विद्वयंशः २।७। वर्गितः ४।२८। पृथक् ४।२८ । द्वयूनः २।२८। अर्धितः १।१४। एतद्युक्तः पृथक्स्थः ५। ४२ । सार्को जातो हरः १७।४२ । पर्वान्तकालीनः सूर्यः ८।५।२६ ।२५। गतिः ६१।१५ । स्थितिघटिकाभिः २।४४ । चालितो जातः स्पर्शकालीनः सूर्यः ८।५।२३।३८। स्पर्शकालीनं त्रिभोनलग्नम् ७ । १६ । २२ । १७ त्रिभोनोदयार्कविश्लेषः ० । १९ । १ । २१ । अस्यांशाः १९ । १ । २१ । अस्य दशांशः १ । ५४ । अनेन हीनाः शक्राः १२ । ६ । एते दशांशेनैव गुणिताः २२ । ५९ । हारेण १७ । ४२ भक्ता लब्धं नाडिकाद्यं लम्बनमृणम् १ । १७ । अथ मोक्षकालीनं लम्बनं साध्यते । तत्रांशैः सहितं वित्रिभम् ८।१९।१०।१७। अस्य क्रान्तिर्दक्षिणा २३ । ४२ । २८ । अक्षांशैः संस्कृता जातानतांशाः दक्षिणाः

४९ । ९ । १० । अस्य द्विद्व्यंशः २ २४ । वार्गतः ४ । ५९ । पृथक् ४ । ५९ द्व्यूनः २ । ५९ । अर्धितः १ । २९ । एतद्युक्तः पृथक्स्थः ६ । २८ । सार्को जातो हारः १८ । २८ । मोक्षकालीनः सूर्यः ८ । ५ । २९ । १२ । मोक्षकालीनत्रिभोनलग्नम् ८ । १९ । १० । १७ । त्रिभोनोदयार्कविश्लेषः ० । १३ । ४१ । ५ । अस्यांशाः १३ । ४१ । ५ । अस्य दशमांशः १ । २२ । अनेन हीनभ्रशकाः १७ । १५ । हारेण भक्ता लब्धं घटिकाद्यं लम्बनं धनम् ० । ५६ । मध्यस्थितिविरहितयुक्तो मध्यदर्शः । ताभ्यां लम्बनाभ्यां संस्कृतःस्पर्शमुक्त्योः कालौ स्तः । मध्यस्थित्या रहितो मध्यदर्शान्तः स्पर्शलम्बनेन संस्कृतः स्पर्शकालः स्यात् । मध्यस्थित्या युतो मध्यदर्शान्तो मोक्षलम्बनेन संस्कृतो मोक्षकालः स्यात् । पूर्वं मध्यलंबनसंस्कृतो दर्शान्तमध्यकालो ज्ञेय इत्यनुक्तमपि बुद्धिमता ज्ञायते । मध्यदर्शः १३ । ४ । स्थित्या २ । ४४ । विरहितः १० । २० । स्पर्शलम्बनेन १ । १७ । संस्कृतो जातः स्पर्शकालः ९ । ३ । मध्यदर्शः १३ । ४ स्थिति–२ । ४४ युक्तः १५ । ४८ । मोक्षलम्बनेन संस्कृतः ० । ५६ । जातो मोक्षकालः १६ । ४४ ॥ ५ ॥

**सुधाकरः**—स्पष्टशरवशेन या स्थित्यर्धघटी सा षड्गुणा अंशा भवन्ति । त एव स्पर्शमध्यवित्रिभयोर्मोक्षमध्यवित्रिभयोश्चान्तरांशाः स्वल्पान्तरतः स्वीकृतास्ततो मोक्षे धनचालनेन स्पर्शे ऋणचालनेन तात्कालिके वित्रिभे कृते । ताभ्यां ये लम्बने स्पर्शमोक्षभवे ताभ्यां 'तिथ्यन्ताद्गणितागतात्स्थितिदलेनोनाधिकात्'—इत्यादिभास्करविधिनाऽसकृत्कर्म विना स्पर्शमोक्षकालौ साधितावित्युपपद्यते सर्वम् 'तिथ्यन्ताद्गणितागता' दित्याद्युपपत्त्यर्थं मत्कृतब्राह्मस्फुटसिद्धान्तटीकाया ८६–८७ पृष्ठे विलोक्ये ॥ ५ ॥

**मर्दादेव मीलनोन्मीलने स्तो**
**ग्रासो नादृश्योऽङ्गुलाल्पो रवीन्द्वोः ।**
**धूम्रः कृष्णः पिङ्गलोऽल्पार्धसर्व-**
**ग्रस्तश्चन्द्रोऽर्कस्तु कृष्णः सदैव ॥ ६ ॥**

**मल्लारिः**—अथ सम्मीलनोन्मीलनकालौ साधयति । एवमनयैव रीत्या मर्दात् मीलनोन्मीलने स्तः । एतदुक्तं भवति । मर्दे षड्गुणं भागाः स्युः । ते दर्शान्तकालीनत्रिभोनलग्ने सम्मीलनार्थं हीना उन्मीलनार्थं युक्ताः । ताभ्यां पृथक् लम्बने साध्ये । ततश्च सम्मीलनार्थं तिथौ मर्दं न्यूनं कार्यम् । तत्र तल्लम्बनं संस्कार्यं सम्मीलनकालो भवति । तथैव मर्दं तिथौ योज्यं तत्र लम्बनं द्वितीयं देयमुन्मीलनकालो भवति ।

अस्योपपत्तिः । स्पर्शमोक्षवत् सुगमा ।

रवीन्द्वोः सूर्यचन्द्रयोरंगुलादल्पो ग्रासो नादेश्यः । यतो हि किरणबलवशादल्पग्रासो न दृश्यत इति प्रत्यक्षहेतुः । चन्द्रो हि अल्पार्धसर्वग्रस्तो धूम्रादिः स्यात् । तद्यथा । अल्पग्रहे धूम्रवर्णो [illegible] [illegible]: सर्वग्रहः पिंगलः स्यात् । अर्कः सदा अल्पादिग्रासेषु कृष्ण एकवर्णः । अत्र दृग्गोचरतयैवोपपत्तिः ॥ ६ ॥

**विश्वनाथः**—मर्दात् सम्मीलनोन्मीलनसाधनं पर्वानादेश्यत्वं वर्णज्ञानं चाह मर्दादिति । एवं पूर्वोक्तप्रकारेण मर्दान्मीलनोन्मीलने स्तः । एतदुक्तं भवति मर्दरसहतिरंशाः स्युः । तैः पृथक्स्थं वित्रिभं सम्मीलनेन साध्यमानेन रहितमुन्मीलनेन सहितम् । आभ्यामुक्तवल्लम्बने कार्ये । मर्दरहितयुतो मध्यदर्श आभ्यां लम्बनाभ्यां संस्कृतः सम्मीलनोन्मीलने स्तः । रवीन्द्वोरंगुलाल्पो ग्रासो यदाऽऽगच्छति तदा नादेश्यः । चन्द्रग्रहणे चन्द्रोऽल्पार्धसर्वग्रस्तः सन् धूम्रः कृष्णः पिंगलः स्यात् । अल्पग्रस्तो धूम्रवर्णः । अर्धग्रस्तः कृष्णवर्णः । सर्वग्रस्तः पिंगलः स्यात् । अर्कः सदैवाल्पादिग्रासेषु कृष्णवर्ण एव ॥ ६ ॥

[illegible]**ाकरः**—प्रथमचरणस्य वासना पञ्चमश्लोकवदेव । इन्दोर्भागः षोडशः खण्डितोऽपीति भास्करविधितारतम्यात् स्वल्पे छन्नो धूम्रवर्णः सुधांशोरितिवाक्याच्च वासना स्फुटैव ॥ ६ ॥

**इष्टं द्विघ्नं छन्नक्षुण्णं स्पर्शान्त्यान्तर्नाडीभक्तम् ।**
**रूपार्धेनोपेतं विद्यादिष्टे कालेऽर्कस्य ग्रासम् ॥ ७ ॥**

**मल्लारिः**—अथेष्टग्रासानयनमाह । इष्टं घटीपूर्वं द्विघ्नं द्विगुणं ततो हि छन्नेन ग्रासेन क्षुण्णं गुणितं सत् स्पर्शान्त्ययोः स्पर्शमोक्षयोर्या अन्तर्मध्यनाडिकाः पर्वकालाख्यास्ताभिर्भक्तं ततो लब्धं रूपार्धेन उपेतं युक्तं सत् अर्कस्येष्टे काले ग्रासं विद्यात् जानीयात् ।

अत्रोपपत्तिः । यदि स्थितिघटिकाभिरयं ग्रासस्तदेष्टघटीभिः किमिति ग्रासोऽभीष्टघटीगुणः स्थित्या भाज्यः । अत्र स्पर्शमोक्षस्थितीष्टं पृथक् न कृतम् । अतो हि पर्वकाल एव हरो गृहीतः । एवं हरस्य द्विगुणितादिष्टं द्विगुण कार्यमित्युपपन्नम् ॥ ॥ ७ ॥

**विश्वनाथः**--अथेष्टग्रासानयनमाह । इष्टमिति । इष्टं १ द्विनिघ्नं २ छन्न-८।६ गुणम् १६।१६। स्पर्शकाल- ९ । ३ मोक्षकालयो-१६ । ४४ रन्तरघटिकाभि-७ । ४१ भक्तं फलम् २। ६ । रूपार्धेन ३० त्रिंशद्व्यगुलैर्युतम् २ । ३६ । इष्टकालेऽर्कस्य ग्रासं विद्यात् । शेषं वलनपरिलेखादिकं पूर्ववत् कार्यमिति । लम्बनसंस्कृततिथ्यन्त- १२ । ५३ कालीनो रविः ८ । ५ । २६ । १४ । त्रिभयुतः ११ ।५। २६ । १४ । अयनलवाढ्यः ११ । २३ ।३४ । १४ । 'इतश्चरवदलैर्नगशरेन्दुमितै'रित्यादिनाऽऽनीतं वलनं दक्षिणम् १ ।३०। मध्यग्रहणकालः १२ । ५३ ।

दिनार्धम् १३ । ३ । यातः शेषः प्राक् परत्रोन्नतः स्यात् इत्यादिना जातं नतं पूर्वम् ० । १० । विषयलब्धगृह्यादितो ० । १ । ० । ० । अस्मान्नगशरेन्दुमितै-रित्यादिनाऽऽनीतं वलनम् । ० । १४ । पलभया ५ । ४५ । गुणितं १ । २० पञ्चभक्तं जातं वलनमुत्तरम् । ० । १६ । पूर्वनतत्वादुभयोः संस्कृतिः १ । १४ । रसभक्ता जाता वलनांग्रयो दक्षिणाः ० । १२ । ग्रासः ८ । ६ । षष्टिगुणितः ४९६ । मानैक्यखण्डेन १० । २८ भक्तः फलम् ४६ । २६ । अस्य मूलं जाताऽछ-न्नांग्रयः ६ । ४९ तथाऽस्य परिलेखः ॥ ७ ॥




**सुधाकरः**—अत्र स्फुटशरजनिता स्थितिर्यदि 'स्थि' इति नाम्ना व्यवह्रियेत । तथाऽऽद्यं स्फुटस्थित्यर्धम्=आस्फुस्थि । द्वितीयं स्फुटस्थित्यर्धम्=द्विस्फुस्थि । ततो द्वयोर्योगेन आस्फुस्थि + द्विस्फुस्थि = मोका − स्पका । गणयित्वा विस्तारं बहुषु स्थानेष्विति भास्करपाटीगणितविधानेन मध्यममानेन स्फुटस्थित्यर्धम् = स्फुस्थि = $\frac{\text{आस्फुस्थि} + \text{द्विस्फुस्थि}}{२}$ = $\frac{\text{मोका} - \text{स्पका}}{२}$ ।

अथ चन्द्रग्रहणवत् प्रथमं स्फुटशरजनितेन स्थित्यर्धेन स्थिसंज्ञकेन पिहितहतेष्टं स्थितिविहृतं तदित्यादिविधिवासनानयनक्षेत्रवदत्र रविचन्द्रमानैक्यखण्डेन क्षेत्रं विरच्यते । के=रविकेन्द्रम् । कखव मानैक्यार्धवृत्तम् । केर=मध्यकालिकः स्पष्टशरः । खर=छन्नमानम् । फर=स्पष्टशरज-

नितस्थित्यर्धं ग्राहकमार्गखण्डम् । केतरेखा फरसमानान्तरा तत्र पूर्वसाधितस्पष्टस्थित्यर्धेन $\frac{\text{मोका} - \text{स्पका}}{२}$ अनेन गत्यन्तरांशगुणनेन कलीकृतेन समा केतरेखा। केखसमानान्तरा तदरेखा सा यत्र केफरेखायां लग्ना तत्र द विन्दुः । दधरेखा च केत समानान्तरा कृता । दध = केत= स्पष्टस्थित्यर्धकला । दन = इष्टकालकला । तदा नध = स्पष्टस्थित्यर्धजनितभुजकला । न बिन्दुगता केनरेखा यत्र फररेखायां लग्ना तत्र इ विन्दुः । अथ के घ न, के र इ त्रिभुजयोः, के इ फ, के न द त्रिभुजयोः, के र फ, के ध द त्रिभुजयोश्च, साजात्यात् । $\frac{\text{न ध}}{\text{इ र}} = \frac{\text{द ध}}{\text{फ र}}$

$\therefore$ $\text{इर} = \frac{\text{फ र} \times \text{न ध}}{\text{द ध}}$ अयमेव शेषं शशाङ्कग्रहणोक्तमत्र स्फुटेषुजेन स्थितिखण्डकेन हतोऽथ तेनैव हृतः स्फुटेन बाहुः स्फुटः स्याद्ग्रहणेऽत्र भानोः । इत्यादिना स्पष्टो भुजः । तथा त्रिभुजसाजात्याच्च $\text{फ इ} = \frac{\text{द न} \times \text{फ र}}{\text{द ध}} = \frac{\text{इ का} \times \text{फ र}}{\text{स्पस्थि}} = \frac{\text{का} \times \text{फ र}}{\frac{\text{मोका}-\text{स्पका}}{२}} = \frac{\text{२ इ का} \times \text{फ र}}{\text{मोका}-\text{स्पका}}$

ततश्चन्द्रग्रहणवत् पिहितहतेष्टमित्यादिना स्वल्पान्तरात् यदि इ ल = इ च, तदा $\text{इ च} = \frac{\text{ख र} \times \text{फ इ}}{\text{फ र}}$

$= \frac{\text{ख र} \times \text{२ इ का} \times \text{फ र}}{\text{फ र (मोका} - \text{स्पका)}} = \frac{\text{छन्न} \times \text{२ इ का}}{\text{मोका} - \text{स्पका}}$, अत उपपन्नमिष्टग्रासानयनम् । अथ चन्द्रग्रहणस्य ८ श्लोकसंस्थानवत् अत्रापि इल > इ च तथाऽनयोः परमान्तरम् = ब= $= \frac{८५८}{१००००}$ मा। अत्र यदि परमं मानैक्यखण्डं ११ गृह्यते तदा $\text{ब} = \frac{८५८ \times ११}{१००००} = \frac{९४३८}{१००००}$ अंगु

$= \frac{९४३८ \times ६०}{१००००}$ व्यङ्गु $= \frac{५६६२८}{१०००} = ०।५६।$ अथ यदि मानैक्यखण्डं १० गृह्यते तदा

$\text{ब} = \frac{८५८}{१०००}$ अंगु $= \frac{८५८ \times ६०}{१०००}$ व्यंगु $= \frac{५१४८}{१००} = ० । ५१ ।$ अथ पूर्वसाधितेऽन्तरे

$\frac{\text{श (मा}-\text{श)}}{\text{२ (मा}+\text{श)}}$ मास्मिन् मानैक्यार्धम् = १० प्रकल्प्य शरस्थाने च १, २, ३, ४ प्रकल्प्य अन्तराणि साधितानि । एषां योगः=२।४३।चतुर्भिर्भक्तो जातं मध्यममानेन वास्तवावास्तवेष्टग्रासयोरन्तरम् = ० । ४१ आचार्येण सर्वत्रोपयोगित्वात् स्वल्पान्तरात् ० । ३० इति क्षेपः प्रकल्पितः । अतः सर्वं निरवद्यम् ॥ ७ ॥

| श | अन्तर |
|---|---|
| १ | ० २४ |
| २ | ०।४० |
| ३ | ०।४८ |
| ४ | ०।५१ |



इति सुधाकरनिर्मितवासना सकलया कलया कलयासना।
दिनकरग्रहणे परया गता भलयाऽलया वलयाऽऽगता ॥

इति सूर्यग्रहणाधिकारः ।

## अथ मासगणाधिकारः ।

अथ मासगणात् सुलघुक्रियया
ग्रहणद्वयसिद्धिकृतेऽभिदधे ।
स्फुटसूर्यविपाततिथींश्च वपु-
र्ग्रसनादिविशेषचमत्कृतये ॥ १ ॥

क्षेपो भाद्यः खं कृता भूदृशोऽर्के
रुद्राः शैला नागचन्द्रा विपाते।
वृत्ते शून्यं वज्रिणश्चन्द्रबाणा
वाराद्ये द्वौ व्यंघ्रिनन्दाब्धयः स्यात् ॥ २ ॥

**मल्लारिः**—अथ मासगणादेव ग्रहणद्वयसाधनाधिकारो व्याख्यायते। मासगणात् सुतरां लघुक्रियया ग्रहणद्वयसिद्ध्यर्थं स्फुटान् सूर्यविपाततिथीन् तथा वपूंषि बिम्बानि ग्रसनं ग्रास इत्यादि विशेषचमत्कारदर्शनार्थमभिदधेऽभिधास्ये। तत्रादौ क्षेपकानाह। अर्के भाद्यो राश्याद्योऽयं क्षेपः स्यात्। खम् ०। कृताः ४। भूदृशः २१ इति। विपाते व्यगौ रुद्राः ११। शैलाः ७। नागचन्द्राः १८। क्षेपः स्यात्। वृत्ते शून्यम् ०। वज्रिणश्चतुर्दश १४। चन्द्रबाणा एकपञ्चाशत् ५१। वाराद्ये द्वौ व्यंघ्रिनन्दाब्धयो विचरणैकोनपञ्चाशत्। वारस्थाने द्वौ २। घटीष्वष्टचत्वारिंशत् ४८। पलेषु पञ्चचत्वारिंशत् ४५।

अत्रोपपत्तिः। ग्रन्थशकादौ रविचन्द्रराहूणां क्षेपाः प्रथममुक्ताः सन्ति। एवं राहुक्षेपे चन्द्रक्षेपं त्यक्त्वा निपातः कृतः। सूर्यक्षेपस्तु सिद्ध एव। वृत्तं चन्द्रस्य मन्दकेन्द्रम्। चन्द्रोच्चक्षेपयोरन्तरे जातस्तस्यापि क्षेपः। एवं तच्छकादौ यन्मध्यमं तिथेर्वाराद्यं स वारादिकस्य क्षेपः। अत्र मासगणोत्पन्ना ग्रहा मासादिप्रतिपदि स्युः। अतः पौर्णमास्यन्तकरणार्थं पक्षचालनानि ग्रहेषु क्षेप्याणि। ततो लाघवार्थं क्षेपेष्वेव प्रक्षिप्य क्षेपाः पाठपाठताः ॥ १-२ ॥

**विश्वनाथः**—अथ मासगणात् पर्वानयनमाह अथेति। अथेत्यनन्तरम्। मासगणात् सुतरां लघुक्रियया ग्रहणद्वयस्य सिद्धिः साधनम्। तस्य कृते तदर्थं स्फुटसूर्यविपाततिथीन् तथा वपूंषि बिम्बानि ग्रसनं ग्रास इत्यादि विशिष्टचमत्कारदर्शनार्थमभिदधे वच्मि। येन गणकानां चमत्कारो भवति। तत्रादौ क्षेपकानाह क्षेप इति। स्पष्टोऽर्थः ॥१-२॥

अथ मासगणाधिकारः।

**सुधाकरः**—स्पष्टार्थौ।

अत्रोपपत्तिः। 'रुद्रा गोऽब्जाः कुवेदा' इत्यादिना ग्रन्थादौ र=११।१९।४१। चं=११।१९।६। चंद्रोच्चम् = ५। १७। ३३। रवितश्चंद्रस्य न्यूनत्वाद्दर्शांतो नाभूत्। तज्ज्ञानाय। "भक्ता व्यर्कविधोर्लवा"इत्यादिना दर्शांतस्य भोग्यकलाः =३५′ मध्यमा चंद्रगतिः=७९०′। ३५″॥ मध्यमा रविगतिः=५९′। ८″। चग–रग = ७३१′। २७″ = ४३८८७″ ततोऽनुपातेन भोग्यघटी= $\frac{\text{भोग्यविकला} \times ६०}{४३८८७} = \frac{३५\times६०\times६०}{४३८८७}$ = २घ, ५२प। एतच्चालनेन

रा
दर्शान्ते रविः = ११।१९°।४४॥ 'रवेः पाक्षिकं चालनं खेंद्रदेवा' इत्यादिना पाक्षिकचालनं रवेः = ० । १४° । ३३' द्वयोर्योगेन जातो रवेः क्षेपः = ० । ४ । १७ ॥

| | रा |
|---|---|
| अथ दर्शांते यावान् रविस्तावानेव चंद्रः | =११ । १९° । ४४ |
| दर्शांतकालिकं चंद्रोच्चं च | =५ । १७ । ३३ |
| चंद्रादुच्चस्य शोधनेन चंद्रकेंद्रम् | =६ । २ । ११ |
| चंद्रकेन्द्रस्य वृत्तसंज्ञस्य पाक्षिकं चालनम् | =६ । १२ । ५४ |
| अनयोर्योगेन जातो वृत्तस्य क्षेपः | =० । १५ । ५ |
| अथ ग्रंथारम्भकालिको राहोः क्षेपः | =० । २७ । ३८ |

रा
गतेरल्पत्वाद्दर्शांतजोऽपि स एव। अतो दर्शांतजो विपातः=१०।२२°।६' अयमस्य पाक्षिक-
रा
चालनेना—०।१५।२८नेन सहितो जातो विपातस्य क्षेपः = ११।७°।२६' दिनाद्ये पाक्षिकं चालनम् =०।४५।५५। इदं ग्रंथारम्भकालिकदर्शांतवारादिना —२।२ ।५२ऽनेन सहितं जातो वारादिकः क्षेपः २।४८।४७। मासगणादागता रव्यादयः क्षेपयुताः पूर्णान्ते भविष्यंति ग्रंथारम्भकालिकक्षेपेषु पाक्षिकचालनाधिकत्वात्।

अथ पाक्षिकचालनाधिका ग्रंथारम्भक्षेपाः

| | रा | ० | |
|---|---|---|---|
| रक्षे | = ० | ४ | १७' |
| विपाक्षे | =११ | ७ | २६ |
| वृत्तक्षे | = ० | १५ | ५ |
| वारादिक्षे | = २ | ४८ | ४७ |

अत्राचार्येण रविक्षेपे ४ कला अधिकाः। विपाते ८ कला न्यूनाः। वृत्ते १४ कला न्यूनाः। वारादौ पलद्वयं न्यूनं च स्वोपलब्ध्यनुसारेण कृतमिति बुद्धिमद्भिर्विचिन्त्यम्। अत्राचार्यस्य वदतो व्याघातदोषो ग्रन्थादावन्यथा क्षेपोक्तत्वाद्भवति तदपि धीमद्भिः सन्धेयम्—इत्युपपन्नं सर्वम् ॥ १–२ ॥

**भानोः खं भूः खाब्धयोऽयं ध्रुवः स्यात्**
**शैलाः कर्का राशिपूर्वो व्यगोः स्यात्।**
**वृत्तस्याङ्का भूरसाश्वार्थतिथ्यो**
**वाराद्यस्याक्षाः खगास्तर्करामाः ॥ ३ ॥**

**मल्लारिः**- —अथ ध्रुवानाह। भानोः सूर्यस्य खम्०। भूः १। खाब्धयः४०। अयं राशिपूर्वो ध्रुवः स्यात्। व्यगोः। शैलाः सप्त ७। कुरेकः १। अर्का द्वादश

१२ । ध्रुवः स्यात् । वृत्तस्य । अङ्का नव ९ । भूरेकः १ । रसाः षट् ६ ।
अथ तिथिवाराद्यस्य । अक्षाः पञ्च ५ । खगा नव ९। तर्करामाः षट्त्रिंशत् ३६।

अस्योपपत्तिः । एकादशवर्षमितं चक्रम् । अतो हि एकादशवर्षाहर्गणात् रव्यादयः पूर्वोक्तवत् साधितास्ते ध्रुवसंज्ञा इति ॥ ३ ॥

**विश्वनाथः**-----ध्रुवकानाह । भानोरिति स्पष्टोऽर्थः ॥ ३ ॥

**सुधाकरः**—अत्रोपपत्तिः । एकस्मिन् चक्रे एकादशसौरवर्षात्मके सौरमासाः=१३२ अधिमासा 'दशनैर्दलाढ्यैः' इत्यादिना ४ । चान्द्रमासाः =१३६। अथ सूर्यसिद्धान्तोक्ताः 'चान्द्राः खाष्टखखव्योमखाग्निखर्तुनिशाकराः । ( मध्य अ. श्लो. ३७ ) एते सहस्रगुणिताः कल्पे स्युर्भगणादय' इत्यादिना कल्पचान्द्रदिवसाः=१६०३०००००८०००० एते त्रिंशद्भक्ता जाताश्चान्द्रमासाः=५३४३३३३६००० । सूर्यसिद्धांतोक्ताः कल्पसावनदिवसाः=१५७७९१७८२८००० । ततोऽनुपातो यदि कल्पचांद्रमासैः कल्पकुदिनानि तदैकचक्रचांद्रमासै–१३६ रेतैः किं जाता एकचक्रसम्बन्धिनः सावनदिवसाः सावयवाः $= \frac{१५७७९१७८२८०००\times१३६}{५३४३३३३६०००}$
=४०१६।९।३६ एभ्यो मध्यमाधिकारीयेन 'स्वखनगलवर्हीनो द्युव्रज' इत्यादिप्रकारेण मध्यमो रविः = ११ । २८ । २० । २५ अयं द्वादशशुद्धो जातो रविध्रुवः =
रा रा
०।१°।३९′।३५″=०।१°।४०′ स्वल्पान्तरात् अत उपपन्नो रविध्रुवः ।

अथ व्यगोर्ध्रुवार्थं तेनैवाहर्गणेन 'गणमनुहृतिरिंदुः' इत्यादिना मध्यमश्चन्द्रः = ११। २८।२०।१०॥ 'नवकुभिरिषुवेदैः'—इत्यादिना जातोऽगुः = ४।२७।८।९। द्वयोरन्तरेण विपातश्चंद्रः = ७।१।१२।१=७।१।१२ स्वल्पांतरादत उपपन्नो विपातध्रुवः ।

अथ पूर्वागतो मध्यमश्चन्द्रः =११।२८।२०।१०॥ 'नवहतदिनसंघ' इत्यादिना चन्द्रमन्दोच्चम् = २ । २७। ११ । ४६ । अनेन हीनो मध्यमश्चन्द्रो यातं केन्द्रं वृत्तसंज्ञम् = ९। १। ८ । १९ = ९ । १ । ८ स्वल्पान्तरात् । अनेन वृत्तस्याङ्का भूरसा इत्यत्र भूगजा इति सिध्यतीति ध्येयम् ।

अथैकचक्राहर्गणः सावयवोऽ ४०१६ । ९ । ३६ यं सप्तभिस्तष्टो जातो वारादि ध्रुवस्तिथ्याः = ५ । ९ ३६ । अत उपपन्नं सर्वम् ॥ ३ ॥

**मासौघतो द्विगुणितान्नगषड्भिराप्त-**
**राश्यादिना रहितमासगणो रविः स्यात् ।**
**मासा गृहाणि विनिजत्रिलवाश्च तेंऽशा**
**मासांघ्रितुल्यकालिकाः स्युरयं विपातः ॥ ४ ॥**

**मल्लारिः**--अथ मासगणात् सूर्यविपातावेकवृत्तेन साधयति । द्विगुणितात् मासगणात् नगषड्भिः सप्तषष्ट्याऽऽप्तं लब्धं यद्राश्यादि फलं तेन रहितो मास

गणो मध्यमरविः स्यात् । अथ यावन्तो मासगणे मासास्तावंत्येव गृहाणि राशयः स्युः । त्रिगतो निजः स्वकीयस्त्रिलवो येभ्यस्ते तथा । एवम्भूता मासा अंशा भागाः स्युः । मासानां योंऽघ्रिश्चरणः । तत्तुल्या एव कलिकाः । अयं विपातः स्यात् ।

अत्रोपपत्तिः । यदि कल्पचान्द्रमासैः कल्पग्रहभगणानां राशयो लभ्यन्ते तदेकमासेन किमिति लब्धाः पृथक् पृथक् सूर्यविपातवृत्तवारादिकानां मासगुणाः। ततोऽन्योऽनुपातः । यद्येकमासेनैते तदेष्टमासगणेन के । अत्र रूपहरस्याविकृतत्वान्नाशे कृते मासगणेनैव ते गुणा गुण्यास्ते ग्रहाः स्युरिति। अत्र गुणानां चतुःस्थितत्वात् मासगणाङ्कबाहुल्यात् गुणने जडकर्म दृष्ट्वा आचार्येण खण्डगुणनानि सर्वत्र विहितानि । तत्रादौ रवेरयं राश्यादिर्मासगुणः ० । २९। ६। १६ । अत्र खण्डगुणनार्थमेको राशिरेव धृतः । अतो मासगणतुल्यो रविः स्यात् । ततस्तदेकस्माच्छुद्धं शेषम् ० । ५३ । ४४ । इदं सप्तषष्ट्यासवर्णितं जातावुपरि द्वौ २ । अतो द्विगुणमासगणात् सप्तषष्टिलब्धं मासगणे न्यूनीकृतं सत् रविर्भवतीत्युपपन्नम् । तथैवायं विपातमासगुणः १ । ० । ४० । १५ अत्रैकराशिरतो मासा एव राशयः । शेषस्यापि खण्डद्वयं कृतम् । तत्रैकं खण्डम् ० ।४०। इदं त्रिभिः सवर्णितं जातौ भागस्थाने द्वौ । अतो मासा द्विगुणास्त्रिभक्ता इत्यत्रापि यो राशिर्द्वाभ्यां गुण्यते त्रिभिर्भज्यते स तावत् स्वत्रिभागोन एव भवति अतो विनिजत्रिलवा इति मासा भागाः स्युरिति । अन्यत् खण्डम् ० । १५। इदं चतुर्भिः सवर्णितं जातं कलास्थाने रूपम् । अतो मासांघ्रितुल्यकलिका इत्युपपन्नम् ॥ ४॥

**विश्वनाथः**--अथ मध्यमार्कव्यगुसाधनमाह मासौघत इति । संवत् १६६९ शाके १५३४ कार्त्तिकशुक्ल-१५ गुरौ घटी ३२ । ३३ । भरणीनक्षत्रे घटी २३ । १४ । वज्रयोगे घटी ४४ । ४४। अब्दाः ९२ । चक्रम् ८ । अधिमासौ :२ । मासाः ५७ । द्विगुणिताः ११४ । नगषड्भक्ताः फलं राश्यादि १ । २१ । २ । ४१ । अनेन रहितो मासगणो जातो रविः ७ । ८ । ५७ । १९ । रवेर्ध्रुवकः० । १ । ४० चक्रहतः ० । १३ । २० । अनेन रहितो रविः ६ । २५ । ३७ । १९ । रविक्षेपकेण ० । ४ । २१ युतो रविः ६ ।२९। ५८ । १९ ।

अथ विपातसाधनम् । मासगणः ५७ । एते राशयः ५७ । मासगणः ५७ । अस्य त्रिलवः १९ । अनेन रहितो मासगणो जाता अंशाः ३८ । मासागणः ५७ । अस्यांघ्रिः १४ । १५ एताः कलाः । एवं राश्यादिव्यगुः १० । ८। १४ । १५ । व्यगोर्ध्रुवः ७ । १ । १२ । चक्रहतः ८ । ९ । ३६ । अने

युक्तो ऽयगुः ६ । १७ । ५० । १५ क्षेपकेण ११ । ७ । १८ युक्तो जातो ऽयगुः ५ । २५ । ८ । १५ ॥ ४ ॥

**सुधाकरः**—अत्रोपपत्तिः । कल्पे यावन्तः सौरा मासास्तावन्त एव सौरा राशयः ।

अतोऽनुपातो यदि कल्पचान्द्रमासैः कल्पसौरमाससमाः सौरा राशयो लभ्यन्ते तदैकेन चान्द्रमासेन के । लब्ध एकस्मिन् चान्द्रमासे सूर्यराशिः $=\frac{५१८४००००००}{५३४३३३३६०००}=\frac{५१८४००००}{५३४३३३३६}$

$=\frac{८६४००००}{८९०५५५६}=\frac{२१६००००}{२२२६३८९}=\cfrac{१}{१+\cfrac{१}{३२+\cfrac{१}{१+\cfrac{१}{१+\cfrac{४७१५}{३०८३७}}}}}$

आसन्नमानानि, $\frac{१}{१}, \frac{३२}{३३}, \frac{३३}{३४}, \frac{६५}{६७},$

अत्राचार्येण मासगणस्यैकवक्रान्तर्गतस्याल्पत्वात् चतुर्थमासन्नमानं गृहीतम् । तेनैकस्मिन् चान्द्रमासे रविराशिः $=\frac{६५}{६७}=१-\frac{२}{६७}$ अनुपातेनेष्टचान्द्रमासे राश्यादिको रविः= इचामा $-\frac{२\ इचामा}{६७}$ अत उपपन्नं रव्यानयनम् ।

यदि मासगणः=मा, तदा 'मासाः पृथक् ते द्विगुणास्त्रिपूर्णबाणाधिकाः खाङ्कनृपांशयुक्तास्त्रिभिर्विभक्ता' इत्यादिभास्करप्रकारेण क्षेपमपहाय भागात्मको विपातखण्डः $=\frac{२\ मा\times१७०}{१६९\times३}+\frac{२\ मा}{३}$

$+\frac{२\ मा\times१७०}{१६९\times३}-\frac{२\ मा}{३}=\frac{(३-१)\ मा}{३}+\frac{३४०\ मा-३३८\ मा}{१६९\times३}=मा-\frac{मा}{३}=\frac{२\ मा}{५०७}$

$=मा-\frac{मा}{३}$ अंशाः $+\frac{१२०\ मा}{५०७}$ कलाः $=मा-\frac{मा}{३}$ अंशाः $+\frac{मा}{४}$ कलाः स्वल्पान्तरात् अत्र माससमराशिसंयोजनेनोपपन्नं विपातानयनम् ॥ ४ ॥

**स्वाद्र्यंशकेन रहिता मनुतष्टमासा**
**वृत्तं गणाभ्रकुलवाढचलवं गृहादि ।**
**स्वार्धान्विता दिनमुखं मनुतष्टमासा**
**मासौघतो दशगुणाद्द्रगुणात्वियुक्तम् ॥ ५ ॥**

**मल्लारिः**—अथैकवृत्तेन वृत्तवारादिके साधयति । मनुभिश्चतुर्दशभिस्तष्टा भक्ता अवशिष्टा ये मासास्ते स्वस्याद्र्यंशकेन सप्तभागेन रहिताः सन्तो गृहादि

राश्यादि वृत्तं स्यात्। परमेतत् गणस्य मासगणस्य अभ्रकुभिर्दशभिर्लवा: । तैराढ्या युक्ता लवा भागा यस्य तत्। एवम्भूतं कार्यम्। तथैव मनुतष्टा मासा: स्वस्य अर्धेनान्विता युक्ता: सन्तो दिनमुखं वारादिकं स्यात्। दशगुणात् मासगणाद्भ-गुणै: सप्तविंशत्यधिकशतत्रयेण याऽऽप्तिर्लब्धिस्तया युक्तं कार्यमित्यर्थ: ।

अत्रोपपत्ति: । वृत्तगुणो राश्यादि: ० । २५ । ४८ । ५२ । अत्र चतुर्दश-भिर्मासैरेकं चक्रं भवति । अतो भगणप्रयोजनाभावात् मनुतष्टमासा इत्युक्तम्। अत्राऽऽप्तैको राशिर्धृत: । एकशुद्धध्रुव: ०।४। ११ । ८ । अस्यापि खण्डद्वयं कृत्वा-त्रेदं खण्डमधिकं गृहीतम् ० । ४ । १७ । ८ । सप्तभि: सवर्णितं जातं राशि-स्थाने रूपम् । अतो हि स्वाद्र्यंशकेन रहिता इति । अधिकं खण्डम् ० । ६ । दशभि: सवर्णितं जातं भागस्थाने रूपम् १ । अतो गणाभ्रकुलुवाढ्यमित्युपप-न्नम् । अत्र तिथिवारादिकस्यायं मासगुण: १ । ३१ । ५० । अत्र खण्डद्वयम् १ । ३० । इदं द्वाभ्यां सवर्णितं जातं गुणस्थाने त्रय: ३ । यो राशिस्त्रिगुणो द्वाभ्यां भज्यते स स्वार्धान्वित एव भवति । अन्यत् खण्डम् ० । १ । ५० । इदं भगुणै: सवर्णितं जाता गुणस्थाने दश १० । अतो दशगुणात् भगुणाप्तियुक्तमि-त्युपपन्नम् ॥ ५ ॥

**विश्वनाथ:**--अथ वृत्तवारादिसाधनमाह । स्वाद्र्यंशमिति । मनुतष्टमासा: स्वकीयेन सप्तमांशेन राश्यादिना ० । ४ । १७ । ८ हीना: ० । २५ । ४२ । ५२ । मासगण: ५७ । अस्य दशमांशोंऽशादि ५ । ४२ । ० । इदमंशादौ युक्तम् १ । १ । २४ । ५२ । वृत्तध्रुवक: ९ । १ । ६ । चक्रहत: ० । ८ । ४८ । अनेन युक्त: १ । १० । १२ । ५२ । क्षेपकेण ० । १४ । ५१ युक्तो जातं वृत्तम् १ । २५ । ३ । ५२ ।

अथ वारादिसाधनं मनुतष्टमासा: १ स्वकीयेनार्धेन ० । ३० । युक्ता: १ । ३० । ० । मासगणो ५७ दशगुण: ५७० । भगुणै--३२७ भक्त: फलम् १ । ४४ । ३५ । अनेन युक्तं जातं वारादि ३ । १४ । ३५ । तिथेर्वारादिध्रुवक: ५ । ९ । ३६ । चक्रहत: ६ । १६ । ४८ । अनेन युक्त: ९ । ३१ । २३ । क्षेपक--२ । ४८ । ४५ । युतो जातं वारादि ५ । २० । ८ ॥ ५ ॥

**सुधाकर:**--अत्रोपपत्ति: । सूर्यसिद्धान्तीयाश्चन्द्रतुङ्गभगणोनाश्चन्द्रभगणा जाता मंदकेंद्रभग-णा वृत्ताख्यभगणा:=५७२६५१३३००० एते द्वादशगुणा: कल्पचान्द्रमासैर्भक्ता एकस्मिन् चान्द्रमासे

$$\text{राश्यादिकं वृत्तम्} = \frac{१२ \times ५७२६५१३३०००}{५३४३३३३६०००} = \frac{५७२६५१३३}{४४५२७७८} = १२ \; \frac{३८३१७९७}{४४५२७७८} \text{ भगण-}$$

स्यैकस्य प्रयोजनाभावादेकस्मिन् चान्द्रमासे राश्यादिकं चन्द्रमन्दकेन्द्रं वृत्ताख्यम् $= \frac{३८३१७९७}{४४५२७७८}$

$= \cfrac{१}{१+\cfrac{१}{६+\cfrac{१०५९११}{६२०९८१}}}$ अतो द्वितीयमासन्नमान $-\frac{६}{७}$ मिदमेव गृहीतमाचार्येण । तत

एकस्मिन् चान्द्रमासे वृत्तं राश्यादिकम् $= \frac{६}{७} + \frac{३८३१७९७}{४४५२७७८} - \frac{६}{७}$

$= \frac{६}{७} + \frac{३८३१७९७ \times ७ - ४४५२७७८ \times ६}{४४५२७७८ \times ७} = \frac{६}{७} + \frac{२६८२२५७९ - २६८१६६६८}{३११६९४४६}$

$= \frac{६}{७} + \frac{१०५९११}{३११६९४४६}$, ततोऽनुपातेन यदि चान्द्रमासाः $=$ मा $=$ १४ ल $+$ शे, तदेष्टचान्द्रमासे राश्यादिवृत्तम्

$= \frac{६(१४ल+शे)}{७} + \frac{१०५९११ मा}{३११६९४४६} = १२ ल + \frac{६ शे}{७} + \frac{१०५९११ मा}{३११६९४४६}$ भगणानां

प्रयोजनाभावात् त्यागे राश्यादि वृत्तम् $= \frac{६ शे}{७} + \frac{१०५९११ मा}{३११६९४४६} =$ शे $- \frac{शे}{७}$ राशिः

$+ \frac{३० \times १०५९११ मा}{३११६९४४६}$ लवाः $=$ शे $- \frac{शे}{७}$ रा $+ \frac{३१७७३३० मा}{३११६९४४६}$ लवाः $=$ शे $- \frac{शे}{७}$ रा $+ \frac{मा}{१०}$ लवाः

स्वल्पान्तरात्। अत उपपन्नं वृत्तानयनम्।

अत्रापि यदि मासगणः $=$ मा $=$ १४ल$+$शे, तदाऽनुपातेन एकस्मिन् चान्द्रमासे सावनदिनानि

$= \frac{१५७७९१७८२८९०००}{५३४३३३३६०००} = \frac{१५७७९१७८२८}{५३४३३३३६} = २९ \frac{२८३५१०८४}{५३४३३३३६}$

$= २९ + \cfrac{१}{१+\cfrac{१}{१+\cfrac{३२६८८३२}{२५०८२२५२}}}$ यानि तदासन्नमान $[२९\frac{१}{२}]$ इदं गृहीत्वाऽनुपातेनेष्टचान्द्रमासे

सावनदिनानि $= \left(२९\frac{१}{२}\right)$ मा $+ \left(\frac{२८३५१०८४}{५३४३३३३६} - \frac{१}{२}\right)$ मा सप्ततष्टानि जातानि $=$

$\left(१\frac{१}{२}\right)\left(१४ल+शे\right) + \frac{मा\ (५६७०२१६८ - ५३४३३३३६)}{१०६८६६६७२} = \frac{३ \times १४ल}{२} +$

शे $+ \frac{शे}{२} + \frac{३२६८८३२ मा}{१०६८६६६७२}$ पुनरेतानि सप्ततष्टानि जातानि $=$ शे $+ \frac{शे}{२} + \frac{३२६८८३२ मा}{१०६८६६६७२} =$

$शे + \frac{शे}{२} + \frac{३२६८८३२ \text{ मा} \times १०}{१०६८६६६६२०} = शे + \frac{शे}{२} + \frac{१० \text{ मा}}{३२७}$ स्वल्पान्तरादत उपपन्नं दिनमुखा-

नयनम् ॥ ५ ॥

**मासगणाज्जनितो रविरूनश्चक्रहतध्रुवकेण निजेन ।**
**संकलिता इतरेऽथ च ते स्युः क्षेपयुता निजमासि सितान्ते ॥६॥**

**मल्लारिः**--ध्रुवकक्षेपका अत्र योज्या इत्याह । मासगणात् जनितः उत्पादितो रविर्निजेन स्वेन चक्रहतेन ध्रुवकेण ऊनः कार्यः । इतरे विपातादयस्तेन संकलिताः संयोज्याः । ततस्ते सूर्यादयः स्वीयेन क्षेपकेण युताः सन्तो निजेऽभीष्टे मासि सितान्ते पौर्णमास्यन्ते स्युरिति ।

अत्रोपपत्तिः । चक्रहतास्तु ध्रुवका ग्रहेषु प्रक्षेप्या एव वर्षाणामेकादशतष्टत्वात् । तत्र रवेर्ध्रुवको द्वादशशुद्धोऽस्ति । अतस्तदूनो रविः कार्यः । अन्ये योज्याः । एवं क्षेपास्तु योज्या एव यतो ग्रन्थशकादिमारभ्या ग्रेसरकालादेव ग्रहाः साधिताः । अतः सृष्ट्यादेः सकाशात् साधिता ये ग्रहास्तद्युक्ता एवेत्युपपन्नम् ॥ ६ ॥

**विश्वनाथः**—अथ मासगणादुत्पन्नानां रव्यादिकानां ध्रुवादिसंस्कारमाह मासेति । मासगणात् जनित उत्पादितो रविर्निजेन चक्रहतध्रुवकेण ऊनः कार्यः। इतरे विपातादयश्चक्रहतध्रुवकेण संकलिताः कार्याः । ते सर्वे निजक्षेपकेण युताः । निजेऽभीष्टे मासि सितान्ते पूर्णिमास्यन्ते स्युरिति ॥ ६ ॥

**सुधाकरः**—अत्रोपपत्तिः । रविध्रुवस्य चक्रशुद्धत्वात् चक्रहतध्रुवकेण हीनः कृतः अन्येषां तु याथातथ्याद्योग उचित एव । ततो ग्रन्थशकादौ पक्षोद्भवचालनाधिकक्षेपवशाद् ग्रहा निजमासि पूर्णान्ते भवन्त्येवेति ॥ ६ ॥

**रवौ पाक्षिकं चालनं खेन्द्रदेवा**
**विपाते नभो बाणचन्द्रा नखाश्च ।**
**षडर्का युगाक्षा गृहाद्यं च वृत्ते**
**दिनाद्येनभोऽक्षाब्धयो बाणबाणाः ॥ ७ ॥**

**मल्लारिः**—पाक्षिकं चालनं कथयति । सूर्ये पाक्षिकं पञ्चदशदिनभवं तदेतच्चालनम् । खं शून्यं राशिः । इन्द्राश्चतुर्दश भागाः । देवास्त्रयस्त्रिंशत् कलाः । विपाते नभः शून्यं राशिः । बाणचन्द्राः पञ्चदश भागाः । नखा विंशतिः कलाः । वृत्ते षड् राशयः । अर्का द्वादश भागाः । युगाक्षाः चतुष्पञ्चा-

शत् कलाः। दिनाद्ये वाराद्ये नभः शून्यं वारः । अक्षाब्धयः पञ्चचत्वारिंशत् घटिकाः। बाणबाणाः पञ्चपञ्चाशत् कलाः।

अत्रोपपत्तिः। पूर्वमनुपातात् रव्यादीनां मासगुणाः साधिताः सन्ति तेषामर्धं चालनं कृतम्। अमान्तकालिकग्रहसाधनार्थमिति। एतदेव द्वादशगुणं षण्मासचालनं चतुर्विंशतिगुणं वर्षचालनं भवतीति सुगमा ॥ ७॥

**विश्वनाथः**—अथ पक्षचालनमाह। रवौ पाक्षिकमिति स्पष्टोऽर्थः॥ ७ ॥

**सुधाकरः**—रूपार्धं मासगणं प्रकल्प्य 'मासौघतो द्विगुणितात्' इत्यादिना पक्षोद्भवचालनानि कलापर्यन्तमेव साधितानीति स्फुटा वासना ॥ ७ ॥

**शरा वेदपक्षा भुजङ्गाग्नयोऽर्के**
**व्यगौ षट् कृताः कुश्च षाण्मासिकं स्यात्।**
**शरा वार्धयस्त्रीषवो भादिवृत्ते**
**दिनाद्ये तिथेर्द्वौ भवा भूर्दिनाद्यम्॥ ८ ॥**

**मल्लारिः**—अथ षाण्मासिकं राश्यादिचालनमाह । शराः पञ्च। वेदपक्षाश्चतुर्विंशतिः। भुजङ्गाग्नयोऽष्टत्रिंशत्। इदमर्के षाण्मासिकं चालनं स्यात्। व्यगौ षट्। कृताश्चत्वारः। कुरेका। वृत्ते शराः पञ्च। वार्धयश्चत्वारः। त्रीषवः त्रिपञ्चाशत्। तिथेर्दिनाद्ये द्वौ। भवा एकादश। भूरेका। इदं दिनाद्यं चालनं स्यात् ॥ ८॥

**विश्वनाथः**—अथ षाण्मासिकचालनमाह शरा इति स्पष्टोऽर्थः ॥८॥

**सुधाकरः**—मासषट्कं मासगणं प्रकल्प्य 'मासौघतो द्विगुणितात्' इत्यादिनव षाण्मासिकचालनानि कलापर्यन्तसाधितानीत्यत्रापि स्फुटा वासना ॥ ८ ॥

**अभिमततिथिसिद्ध्यै प्राक् परे यास्तु तिथ्यः**
**स्वयुगरसलवोनाश्चालनं स्याद्दिनाद्ये।**
**स्वयुगगुणलवोनाः स्याल्लवाद्यं दिनेशे**
**स्वगुणनवलवोना विश्वनिघ्नाश्च वृत्ते ॥९॥**

**मल्लारिः**—अथेष्टतिथिसाधनमाह । अभिमताया इष्टायास्तिथेः सिद्ध्यै प्राक् पौर्णमास्याः पूर्वं परे पश्चात् या यावत्य इष्टतिथ्यः स्युस्ताः स्वस्य युगरसलवेन चतुःषष्टिभागेन ऊनाः सत्यो दिनाद्ये चालनं स्यात्। स्वस्य युगगुणलवेन चतुस्त्रिंशदंशेन ऊनास्ता एव तिथयः। दिनेशे सूर्ये लवाद्यं चालनं स्यात्। ततस्ता एव तिथयो विश्वैस्त्रयोदशभिर्हन्यन्ते गुण्यन्ते तास्तथा। ततः स्वस्य गुणनवलवेन त्रिनवतिभागेन ऊना वृत्ते चालनं स्यात्।

अत्रोपपत्तिः । अत्रैकचान्द्रदिनमानम् । ० । ५९ । ३ । ४५। यद्येकतिथावे-
तत् तदेष्टतिथिभिः किमिति । इदमिष्टतिथिगुणं रूपहरस्याविकृतत्वान्नाशः ।
अत्र खण्डगुणनार्थमस्यैक एव गृहीतः । अत इदमेकशुद्धं कृत्वा जातम्
० । ० । ५६ । १५ । चतुःषष्ट्या सवर्णितमूर्ध्वस्थाने रूपम् । अतः स्वरसयु-
गलवोनास्तिथयो वाराद्ये देयाः । पूर्वं ऋणमग्रे धनमिति चालनेऽप्युक्तमस्ति ।

अथ रविचालनोपपत्तिः । तत्र रवेश्चान्द्रदिनान्तर्वर्त्तिनी मध्यगतिरियं भा-
गाद्या ० । ५८ । १४ । अस्या अप्येको गृहीतोऽत इदं रूपशुद्धं जातम्
०।१।४६। इदं चतुस्त्रिंशत्सवर्णितं जातमूर्ध्वं रूपम् १ । अतो युगगुणलवो-
नास्तिथयो रविचालनमिति । अथ वृत्तचालनम् । वृत्तस्य चन्द्रमन्दकेन्द्रस्य
चान्द्रदिनान्तर्वर्त्तिनी मध्यगतिर्भागाद्या १२ । ५१ । ३७ । अस्यास्त्रयोदश
गृहीताः । अत इदं त्रयोदशशुद्धम् ० । ८ । २३ । इदं त्रिनवतिसवर्णितं जातम्
ऊर्ध्वं त्रयोदशैव । अतो विश्वनिघ्नाः स्वत्रिनवतिभागोनास्तिथयो वृत्त-
चालनमिति ॥ ९ ॥

**विश्वनाथः**-अथेष्टतिथिसाधनमाह अभीति । अभिमतायास्तिथेः सिद्ध्यै
प्राक् पौर्णमास्याः पूर्वं परे पश्चात् या यावत्य इष्टतिथ्यः स्युस्ताः स्वचतुःषष्टि-
भागेन ऊनाः सत्यो दिनाद्ये चालनं स्यात् । स्वस्य चतुस्त्रिंशदंशेन ऊनास्ता एव
तिथयो दिनेशे सूर्ये भागाद्यं चालनं स्यात् । ततस्ता एव तिथयस्त्रयोदशभिर्गु-
ण्यास्ततः स्वस्य त्रिनवतिभागेनोना वृत्ते चालनं स्यात् ॥ ९ ॥

सुधाकरः—अत्रोपपत्तिः । तत्रैकस्मिन् चान्द्रमासे सावनदिनाद्यम्=२९। ३१ । ५०
$=\frac{१०६३१}{३६०}$ सवर्णेन दिनात्मकम् । ततो यदि त्रिंशत्तिथिभिरिदं सावनंदिनादिकं तदा इष्टतिथिभिः
किम् । जातमिष्टतिथिसम्बन्धि सावनदिनम् $=\frac{१०६३१}{१०८००}$ इति । अत्र $\frac{१०६३१}{१०८००}$ अस्य विततरूपम्

$$=\cfrac{१}{१+\cfrac{१}{६२+\cfrac{१}{१+\cfrac{१}{९+\cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{३+\cfrac{१}{\ldots}}}}}}}}$$

# मासगणाधिकारः ।

तत आसन्नमानानि, $\frac{१}{१}, \frac{६२}{६३}, \frac{६३}{६४}$ ..................................................

आचार्येण $\frac{६३}{६४}$ इदमासन्नमानं गृहीतम् । तस्योत्थापनेन जातमिष्टतिथिसम्बन्धि सावनं दिनम्

$= \frac{६३ \text{ इति}}{६४}$, एकेन सावनेन यदि रविगतिः $=५९'।८'' = \frac{३५४८}{६०} = \frac{८८७'}{१५} = \frac{८८७^\circ}{९००}$ तदेष्टतिथिसम्बन्धिसावनेन किं जातं लवाद्यं रविचालनम् $= \frac{६३ \times \text{इति}}{६४} \times \frac{८८७}{९००} = \frac{२१ \times ८८७ \text{इति}}{३०० \times ६४}$

$= \frac{७ \times ८८७ \times \text{इति}}{१०० \times ६४} = \frac{६२०९ \times \text{इति}}{६४००}$ ।

$$\text{अथ } \frac{६२०९}{६४००} = \cfrac{१}{१ + \cfrac{१}{३२ + \cfrac{९७}{१९१}}}$$

तत आसन्नमानानि $\frac{१}{१}, \frac{३२}{३३}$ ..................................................अथ स्वल्पान्तरात्

$$\left.\begin{array}{l} \text{वाभि} = \frac{१}{१} \therefore \text{ वाभि} = १ \\ \text{वाभि} = \frac{३२}{३३} \therefore ३३\text{वाभि} = ३२ \end{array}\right\} \text{ द्वयोर्योगेन } ३४\text{वाभि} = ३३ \therefore \text{वाभि} = \frac{३३}{३४}$$ । एतदुत्थापनेन

जातं लवाद्यं रविचालनम् $= \frac{३३ \text{ इति}}{३४}$

अथ चन्द्रगतिः $=७९०'$ । $३५''$ ॥ तदुच्चगतिः $=६'$ । $४१''$ । चन्द्रकेन्द्रगतिः $=$वृत्तगतिः $=$ $७८३'$ । $५४'' = \frac{४७०३४'}{६०} = \frac{४७०३४^\circ}{६० \times ६०} = \frac{२३५१७^\circ}{३० \times ६०} = \frac{७८३९^\circ}{६००} = \frac{२६१३^\circ}{२००}$ ततोऽनुपातेनेष्टतिथिसम्बन्धि लवाद्यं चालनम् $= \frac{२६१३ \times ६३ \times \text{इति}}{२०० \times ६४} = \frac{१३ \times २०१ \times ६३ \times \text{इ}}{१२८००}$

$= १३ \left( \frac{१२६६३}{१२८००} \text{इति} \right)$ । अथात्रापि

$$\frac{१२६६३}{१२८००} = \cfrac{१}{१ + \cfrac{१}{९२ + \cfrac{१}{२ + \cfrac{१९}{७९}}}} = \text{वाभि}$$

तत आसन्नमानानि $\frac{१}{१}, \frac{९२}{९३}$ .........

अत्राचार्येणासन्नमान- $\frac{१२}{१३}$ मिदं गृहीतम्। एतदुत्थापनेन जातं लवाद्यं वृत्तचालनम्= १३ ($\frac{१२}{१३}$ इति)

अत उपपन्नं सर्वम् ॥ ९ ॥

**अत्यष्ट्यष्टिवृषार्कगोशरदृशः खण्डानि तैर्वृत्तदो-**
**र्भागत्रीन्दुलवप्रमैक्यमगतघ्नोच्छिष्टविश्वांशयुक् ।**
**प्राग्वत् स्यात् स्वमृणं फलं त्विति रवेः केन्द्राद्यदन्यच्च तद्**
**द्व्याप्तं स्वाङ्गलवोनितं कुरु तयोः कार्या पुनः संस्कृतिः ॥१०॥**

**मल्लारिः**—अथ रवेः स्पष्टार्थं तिथेरपि स्पष्टार्थं सूर्यचन्द्रयोर्मन्दफले साधयति । एतानि खण्डानि स्युः । अत्यष्टिः सप्तदश १७ । अष्टिः षोडश १६ । वृषाश्चतुर्दश १४ । अर्का द्वादश १२ । गावो नव ९ । शराः पञ्च ५ । दृशौ द्वौ २ । तैः खण्डकैः कृत्वा वृत्तस्य दोर्भुजः । तस्य ये भागाः । तेषां यस्त्रीन्दुभिस्त्रयोदशभिर्लवो भागो यन्मितः स्यात् । तन्मितानां खण्डानामैक्यम् । तत् अगतेन खण्डकेन हन्यते तथा । एवम्भूतस्य उच्छिष्टस्य शेषस्य यस्त्रीन्दुलवस्त्रयोदशभागस्तेन युक्तं सत् । प्राग्वदिति वृत्ते मेषादिषट्के धनं तुलादिषट्के ऋणं चन्द्रफलं स्यात् । इत्यनेनैव प्रकारेण रवेर्मन्दकेन्द्राद्भुजादिविधिना एभिः खण्डैः सूर्यमन्दफलं साध्यं तद्‌द्व्याप्तं ततः स्वस्याङ्गलवेन ऊनितं कार्यम् । तयोः सूर्यचन्द्रफलयोः संस्कृतिः कार्या । संस्कृतिर्यथा । धनयोर्योगः । ऋणयोरपि योगः । धनर्णयोरन्तरमिति ।

अत्रोपपत्तिः । अत्र वृत्तत्रयोदशभागान्तरं प्रकल्प्य पूर्वोक्तवन्मन्दफलखण्डानि चन्द्रस्य साधितानि राशित्रयमध्ये सप्तैव । एतानि मन्दफलखण्डानि सावयवानि यतः पञ्चदशगुणानि निःशेषाणि भवन्ति । अतः पञ्चदशगुणानि कृत्वा पठितानि। अत्रेष्टफलार्थमनुपातः । यदि त्रयोदशभागैरेकं खण्डं तदेष्टवृत्तदोर्भागः किमिति लब्धमितखण्डानामैक्यं कार्यं ततः शेषादनुपातः । यदि त्रयोदशभागैर्भोग्यखण्डं तदा शेषांशैः किमिति लब्धं गतखण्डयोगे योज्यं तत् फलं स्यात् । धनर्णोपपत्तिः स्पष्टीकरणाधिकारे उक्तैवास्ति । एवं रविकेन्द्रादपि मन्दफलं साध्यम् । तत्र लाघवार्थमेभिरेव खण्डै रविकेन्द्रादपि फलं साध्यमित्युपपन्नम् । अत्र चन्द्रफलं केन भक्तं रविफलं स्यादिति ज्ञानार्थं सूर्यफलेन परमेण २ । १० । चन्द्रपरमफले ५ । २ । भक्ते लब्धं द्वौ २ । अतश्चन्द्रफलं द्व्याप्तम् । एवं द्विभक्तं चन्द्रफलम् २ । ३१ । सूर्यफलात् २ । १० यदधिकम् ०।२१ तद्‌द्विभक्तस्य २।३१। षडंशाः स्वल्पान्तरात् । अत उक्तं स्वषडंशविवर्जितमिति । एवमुभयोः फलयोः संस्कृतिः कार्या तिथौ देयत्वात् ॥ १० ॥

**विश्वनाथः**—अथ स्पष्टतिथिसाधनार्थं वृत्तफल रविमन्दकेन्द्रफल-साधनमाह अत्यष्टीति। अत्यष्टिः सप्तदश १७। अष्टिः षोडश १६। वृषाश्चतुर्दश १४। अर्का द्वादश १२। गावो नव ९। शराः पञ्च ५। दृशौ द्वौ २। एतानि खण्डानि स्युः। वृत्तम् १।२५।३।५२। अयमेव भुजः। अस्य भागाः ५५। ३। ५२। त्रीन्दुलवः ४। एतत्प्रमितगतखण्डकानां योगः ५९। अगतेन भोग्यखण्डेन ९ उच्छिष्टमवशेषम् ३।३। ५२। निघ्नम् २७। ३४। ४८। अस्य विश्वांशः २। ७। १७। अनेन गतखण्डयोगो युक्तः ६१। ७। १७। प्राग्वदिति मेषादिषट्के वृत्ते फलं धनं तुलादिषट्के ऋणमित्यर्थः। वृत्तस्य मेषादिकेन्द्रत्वात् धनं वृत्तफलम् ६१। ७। १७। रविः ६। २९। ५८। १९। मन्दोच्चात् २।१८ शुद्धो जातं रवेः केन्द्रम् ७।१८।१।४१। अस्य भुजांशाः ४८। १।४१। त्रयोदशभक्ताः फलम् ३। एतत्तुल्यगतखण्डयोगः ४७। भोग्यखण्डकेन १२ शेषं ९। १। ४१ गुणितम् १०८।२०। १२। अस्य विश्वांशः ८।२०।० अनेन गतखण्डयोगो युक्तः ५५। २०। ०। इदं द्विभक्तम् २७। ४०।० स्वकीयेन षडंशेन ४। ३६। ४० रहितं २३। ३। २० तुलादिकेन्द्रत्वात् जातं रविफलमृणम् २३। ३। २०। फलद्वयसंस्कृतिर्धनम् ३८। ३। ५७ ॥ १०॥

**सुधाकरः**-अत्रोपपत्तिः। त्रयोदशादित्रयोदशभागवृद्धया चन्द्रकेन्द्रांशानां वशेन चन्द्रमन्दफलभागान् पञ्चदशगुणान् कृत्वाऽधोऽधो विशोध्य खण्डानि पठितानि। तद्यथा। खार्कमितव्यासार्धे केन्द्रांशानां ज्याः संसाध्य विलिख्यन्ते। अर्धाधिके रूपं ग्राह्यमर्धाल्पे त्याज्यमिति नियमेन

के=१३°। २६°। ३९°। ५२°। ६५°। ७८°। ९०°।

ज्या=२७ । ५२ । ७५ । ९४ । १०८। ११७। १२०।

अथ सर्वखण्डानां योगः पञ्चदशभक्तो जातं लवादिकं परमं मन्दफलम् $= \frac{७५}{१५} = ५^\circ$। ततोऽनुपातो यदि त्रिज्यया परमं फलं तदेष्टकेन्द्रज्यया किम्। ततो मन्दफलं लवादिकं पञ्चदशगुणं कार्यम्। एवं केन्द्रज्यासम्बन्धीनि फलानि

$$\frac{२७\times५\times१५}{१२०} = \frac{१३५}{८} = १६\frac{७}{८}$$ ।

$$\frac{५२\times५\times१५}{१२०} = \frac{१३\times५}{२} = ३२\frac{१}{२}$$ ।

$$\frac{७५\times५\times१५}{१२०} = \frac{३७५}{८} = ४६\frac{७}{८}$$ ।

$$\frac{९४\times५\times१५}{१२०} = \frac{४७\times५}{४} = ५८\frac{३}{४}$$ ।

$\frac{१०८\times५\times१५}{१२०}=\frac{२७\times५}{२}=६७\frac{१}{२}$ ।

$\frac{११७\times५\times१५}{१२०}=\frac{५८५}{८}=७३\frac{१}{८}$ ।

$\frac{१२०\times५\times१५}{१२०}=१५\times५=७५$ ।

अर्धाल्पत्यागेनार्धाधिके रूपग्रहणेन क्रमेण फलानि

१७।३३।४७।५९।६८।७३।७५। अधोऽधो विशोधनेन

खण्डानि = १७।१६।१४।१२। ९। ५। २। अत उपपन्नं चन्द्रमन्दफलानयनम् ।

अथ चन्द्रपरममन्दफलम्=५°=३००′ सूर्यस्य च आचार्योक्तस्पष्टाधिकारविधिना 'तद्भुजभागखेचरलवोनघ्ना नखा' इत्यादिना यद्यपि परमं मन्दफलम्=२°।१०′।४५″।

तथाऽप्यत्राचार्येण परमं फलम् = २° । १०′ । ५२″ । ३०‴ = $\frac{३१२५'}{२४}$ । इदं गृहीतम् । अथानुपातेन चंफ=$\frac{३००\times ज्याके}{१२०}$ । रफ = $\frac{३१२५\times ज्याके}{२४\times१२०}$ । यदि द्वयोः केन्द्रे समे तदा $\frac{रफ}{चंफ}=\frac{३१२५}{२४\times३००}=\frac{१२५}{२४\times१२}=\frac{१२५}{२८८}$ ∴ रफ=चंफ $\left(\frac{१२५}{२८८}\right)$= चंफ×

$\left(\frac{१}{२}-\frac{१}{२}+\frac{१२५}{२८८}\right)$ = चंफ$\left(\frac{१}{२}-\frac{१४४}{२८८}+\frac{१२५}{२८८}\right)$ = चंफ$\left(\frac{१}{२}-\frac{१९}{२८८}\right)$

= चंफ $\left(\frac{१}{२}-\frac{१}{२\times६}+\frac{१}{२\times६}-\frac{१९}{२८८}\right)$

= चंफ$\left(\frac{१}{२}-\frac{१}{२\times६}+\frac{२४-१९}{२\times६\times२४}\right)$ = चंफ $\left(\frac{१}{२}-\frac{१}{२\times६}+\frac{५}{२\times६\times२४}\right)$

अत्राचार्येण $\frac{५}{२\times६\times२४}$ इदं खण्डं त्यक्तं ततो जातं रविफलम् = चंफ $\left(\frac{१}{२}-\frac{१}{२\times६}\right)$

$\frac{चंफ}{२}-\frac{चंफ}{२\times६}$ अतो रविकेन्द्राच्चन्द्रफलं यत् तद्द्वयासं स्वाङ्गलवोनितं च रविमन्दफलं भवति । अथात्र रविफलम् = $\frac{चंफ}{२}-\frac{चंफ}{२\times६}=\frac{५ चंफ}{२\times६}$ तथा पूर्वं यत् खण्डं त्यक्तं तन्मानम् = $\frac{५ चंफ}{२\times६\times२४}$ अतः पूर्वागतस्य रविफलस्या- $\frac{५ चंफ}{२\times६}$ स्य जिनांशसमं त्यक्तखण्डमानं भवतीति सुधीभिर्भृशं विचिन्त्यम् ॥ १० ॥

**वृत्तैष्यफलाद्रसाप्तियुक्ता रहिताः कर्किमृगादिके च वृत्ते ।**
**सगुणांशखवह्नयो हरःस्यादथ सूर्याच्चरपूर्वमुक्तवत् स्यात्॥११॥**

**मल्लारिः**—अथ हरं साधयति । वृत्तस्य यदेष्यं दलं भोग्यखण्डं तस्माद्या रसाप्तिः खडंशः । तेन सगुणांशाः सत्र्यंशाः खवह्नयस्त्रिशत् कर्किमृगादिके वृत्ते युक्ता रहिताः कार्याः । कर्क्यादिषड्भे युक्ता मकरादिषड्भे रहिताः सन्तो हरः स्यात् । अथ सूर्योच्चचरादिमानं चोक्तवत् पूर्ववत् साध्यम् ।

अस्योपपत्तिः । इयं फलसंस्कृतिस्तिथौ देयाऽतो घटीकरणार्थमनुपातः । यदि गत्यन्तरकलाभिः षष्टिघटिकास्तदाऽऽभिः फलकलाभिः कति घटिकाः । एवमत्र फलभागानां पूर्वं कलीकरणार्थं षष्टिर्गुणः । एतत् फलं पञ्चदशगुणितमस्ति सावयवत्वात्।अतः पञ्चदश हरः।गुणहरयोर्हरेणापवर्त्तितयोर्जातो गुणः४। इदानीं षष्टिर्गुणः । अतो गुणघातो जातो गुणः २४० । हरस्तु गत्यन्तरकलाः । तास्तु मध्यमा एव गृहीताः ७३० । गुणहरयोश्चतुर्विंशत्या अपवर्त्तितयोर्जातो गुणः १० । हरः ३०।२०। फलसंस्कृतिर्दशहतेत्यग्रे उक्तमस्ति । अयं हरो मध्यः । अतः स्पष्टत्वं यथा । वृत्तभोग्यखण्डं परमम् १७ । इदं केन गुणं परमं गतिफलं भवति । अत्रेदं भोग्यखण्डं वेदैर्गुण्यं ततश्चतुर्विंशत्याऽपवर्त्तितगुणहरयोर्गुणेनापवर्त्तितयोर्जातो हरः षट् । इदं फलं सगुणांशखवह्निमिते हरे संस्कार्यम् । तत्र कर्क्यादिषट्के केन्द्रे गतिफलं धनमतो युक्ता इति । मकरादिषट्के ऋणमतो रहिता इति । एवं जातः स्पष्टो हरः । अतो हि फलसंस्कृतिर्दशहता हारोद्धृता नाड्यः स्युरित्युपपन्नम् ॥ ११ ॥

**विश्वनाथः**—अथ हरसाधनमाह वृत्तैष्येति । वृत्तस्य भोग्यखण्डं ९ षड्भक्तं फलम् १ । ३० अनेन सगुणांशखवह्नयः ३० । २० । वृत्तस्य मकरादिषट्के स्थितत्वाद्रहिता जातो हरः २८ । ५० । अथ सूर्योच्चचरं प्रोक्तवत् कार्यम् । सूर्यः ६ । २९ । ५८ । १९ । अयनांशाः १८ । १० । सायनरविः ७ । १८ । ८ । १९ । अस्माच्चरं धनम् ८४ ॥ ११ ॥

**सुधाकरः**—अत्र चन्द्रस्य मध्यमा गतिः स्वल्पान्तरात् ७९० कला गृहीताः । तथा चन्द्रतुङ्गगतिश्च ६ कलास्ततश्चन्द्रकेन्द्रगतिः = ७८४′ = १३° स्वल्पान्तरात् । तेनैव हेतुना त्रयोदशभागवृद्ध्या पूर्वं चन्द्रमन्दफलखण्डानि साधितानि । अथ चन्द्रगतिफलज्ञानार्थमद्यतनश्वस्तनकेन्द्रजफलयोरन्तरं स्वल्पान्तरात् एष्यखण्डमेव । इदं च पूर्वं पञ्चदशगुणं कृतं तेन भागात्मकं फलान्तरसमं गतिफलम् = $\frac{\text{एख}}{१५}$ इदं षष्टिगुणं जातं कलात्मकं गतिफलम्=४एख।

ततः 'केन्द्रे कुलीरमृगषट्कगते धनर्णम्' इत्यादिना चन्द्रस्पष्टगतिः = ७९०′ + ४ एख ।

अथात्र सर्वदा रविगतिः६२कला गृहीतास्ततो जातं गत्यन्तरम् = ७९०′−६२′ + ४एख ।

इदं गत्यन्तरं चतुर्विंशतिभक्तं लब्धं हराख्यम्

$$= \frac{७९०' - ६२ \pm ४ \text{ एख}}{२४} = \frac{७२८' \pm ४ \text{ एख}}{२४}$$

$$= ३० \frac{१}{३} \pm \frac{\text{एख}}{६} = ३०' । २०'' \pm \frac{\text{एख}}{६} ।$$

यद्यद्यतनमन्दकेन्द्रं वृत्ताख्यम् = १९° । ३०′ तदाऽत्यष्टयष्टिवृषेत्यादिना भागात्मकं चन्द्रफलम् = $\frac{२५}{१५}$ = $\frac{५}{३}$ =१° । ४०′ । ततः श्वस्तनकेन्द्रम् = १९° । ३०′ + १३° = ३२° । ३०′ । अस्मादुक्तवत् खण्डजं चन्द्रस्य श्वस्तनफलम् = $\frac{४०}{१५}$ = $\frac{८}{३}$ = २° । ४०′ अनयोरन्तरं वास्तवं फलान्तरसमं चन्द्रगतिफलम् = १° । अथाद्यतनकेन्द्रवशेनैष्यखण्डम् = १६ । इदं पञ्चदशभक्तं भागादिकं गतिफलम् $\frac{१६}{१५}$ = १° । ४′ स्वल्पान्तरतः पूर्वसाधितगतिफलसमम् । यदि वृत्तं त्रयोदशापवर्त्यं भवेत् तदाऽद्यतनश्वस्तनफलयोरन्तरसममेवैष्यखण्डोद्भवं गतिफलं भविष्यतीति विचिन्त्यं विपश्चिद्भिरिति सर्वमुपपन्नम् ॥ ११ ॥

**नाड्यः स्युः फलसंस्कृतिर्दशहता हारोद्धृताऽथो चरं**
**सायं लक्षणकं त्वथो विघटिकाः पश्चादृणं प्राग्धनम् ।**
**स्वांघ्र्युनान्तरयोजनान्यथ तिथिः स्पष्टा त्रिभिः संस्कृता**
**तत्संस्कारघटीसमाश्च कलिका देया व्यगौ चोष्णगौ ॥१२॥**

**मल्लारिः**—तदेवाह। फलयोः संस्कृतिर्दशगुणा स्पष्टहरभक्ता सती नाड्यः स्युः । अथो चरं सायं लक्षणकं विपरीतलक्षणम् । धनं चेत् तदा ऋणमृणं चेत् तदा धनमिति । स्वांघ्रिणा स्वचरणेन ऊनानि रेखादेशान्तरयोजनानि । विघटिकाः पलानि । रेखातः पश्चात् स्वपुरे ऋणम् । पूर्वस्यां धनम् । एवं त्रिभिः फलैरपि संस्कृता तिथिः स्पष्टा स्यात् । तत्संस्कारस्तेषां फलानां यः संस्कारस्तद्घटीसमाः कलिका व्यगौ उष्णगौ च देयाः ।

अत्रोपपत्तिः। फलनाडीकरणोपपत्तिः पूर्वमेवोक्ता। चरव्यस्तत्वे हेतुर्यथा । यद्ग्रहे ऋणं तत् तिथौ धनं यद्धनं तदृणं भोग्यत्वात्। अतश्चरं विपरीतम् ।रेखास्वदेशान्तरोपपत्तिः पूर्वं प्रतिपादिताऽस्ति । तिथी रविचन्द्रान्तराद्भवति । अतो गत्यन्तरादनुपातः । यदि भूपरिधियोजनैः—४८०० गत्यन्तरकला लभ्यन्ते तदा रेखास्वदेशान्तरयोजनैः किमिति। पुनर्घटीकरणायानुपातः। यदि गत्यन्तरकलाभिः षष्टिघटिकास्तदाऽऽभिः किमिति गत्यन्तरकलातुल्ययोर्गुणहरयोर्नाशः । पुनरस्य फलस्य पलीकरणार्थं षष्टिर्गुणः।एवं गुणघातो गुणः३६०० । हरः४८००।गुणहरौ द्वादशशता—१२०० पवर्त्तितौ गुणः ३ । हरः ४ । अतः स्वाङ्घ्र्यूनानि योजनानि पलानि स्युरित्युपपन्नम् । एतत्फलत्रयसंस्कृता तिथिः स्पष्टा भवतीत्युपपन्नम् । रविव्यगू मध्यमातिथ्यन्तकालीनौ तयोः स्पष्टतिथिकालीनकरणार्थं

फलसंस्कारघटीभिश्चालनं देयम् । अतो लाघवार्थं स्वल्पान्तरत्वात् संस्कार-घटीसमाः कलाः सूर्ये व्यगौ देयास्तौ तात्कालिकौ मध्यमौ भवत इति । अत-स्तयोः स्पष्टत्वार्थं फलमग्रे साधयति ॥ १२ ॥

**विश्वनाथः**---अथ स्पष्टतिथिसाधनं नाड्य इति । फलसंस्कृतिः ३८। ३।५७। दशहता ३८०।३९।३०। हारेण २८।५०। भक्ता फलं नाड्यः संस्कृते-र्धनत्वाद्धनम् १३।१२। चरं धनम् ८४। सायं लक्षणकं सूर्यास्तमयिकामित्युक्ते-र्जातमृणम् ८४। देशान्तरयोजनानि ६४ स्वाङ्घ्र्यूनानि जातानि देशान्तर-पलानि ४८। रेखातः पूर्वत्वाद्धनानि । फलत्रयसंस्कृतिधननाड्यः १२ । ३६। तिथिः ५।२०।८। फलत्रयसंस्कृता जाता स्पष्टा गुरौ घट्यः ३२ । पलानि ४४। फलत्रयसंस्कारघट्यः १२।३६। एतत्तुल्यकलादिसंस्कृतोऽर्कः । ७ ।०।१०।५५। व्यगुश्च ।५।२५।२०।५१ ॥ १२॥

**सुधाकरः**—कल्प्यते मध्यमरविः = र, यथोक्तवत् केन्द्रयोः फलसंस्कारेण स्पष्टो रविः = र ± र फ । अथ वृत्ते तु ' मन्दोच्चं ग्रहवर्जितं निगदितं केन्द्रम्'–इत्यादितो वैपरीत्यं साधितं तेनात्र यदि धनं तदा वास्तवमृणम् । परंतु अस्य फलस्य धनर्णत्वं तु पूर्वकेन्द्रानुसारे-णैव।तेन यदि मध्यमचन्द्रः = चं, तथा द्वयोः केन्द्रयोः चन्द्रफलम् = ± चं फ । तदा स्पष्टश्चंद्रः = च ± चं फ । ततो रविचन्द्रान्तरम् = स्पचं − स्पर = चं − र ± चंफ ± रफ । अथ पूर्वं चं − र इति रविचन्द्रान्तरवशेन या भुक्तकलास्तासु ± चंफ ± र फ एताः संस्कृता इदानीं भवं ते, ततः पूर्वसाधितभोग्यकलाः ( ± चं फ ± र फ ) एतद्विपरीतसंस्कृता अर्थात् ± चंफ ± रफ एतत्संस्कृताः स्फुटभोग्यकला भवंति । अतः ± चं फ ± र फ एतत्सम्बंधिकालेन संस्कृताः पूर्वागतमध्यमतिथिभोग्यघटिका लङ्कायां स्फुटा भोग्यघटिका भवंति । अथ ± च फ ± रफ = सं । तदेदं पञ्चदशगुणितमतो जातः कलात्मकः संस्कारः= ४ सं । हार-श्च चतुर्विंशतिगुणो जातं कलात्मकं स्फुटं गत्यन्तरम् = २४ हा ततोऽनुपातो यदि गत्यन्तरकलाभिः षष्टिघटिकास्तदा संस्कारकलाभिः काः । लब्धा घट्यः = $\frac{४सं \times ६०}{२४ हा} = \frac{१० सं}{हा}$ अत उपपन्नं ' नाड्यः स्युः फलसंस्कृतिर्दशहता हारोद्धृता' इति । उत्तरगोले स्वदेशे चरकालेनादावेव रवेरुदयस्तेन निरक्षभोग्यघटिकाश्चराधिकाः स्वदेशे भोग्यघटिकाः । दक्षिणे तु पश्चाद्रवेरुदयस्तेन चरोना निरक्षभोग्यघटिकाः स्वदेशार्कोदयतो भोग्यघटिकाः स्युः । अत-श्चरं सायं लक्षणकमर्थात् मेषादावर्के साधने धनं तुलादावृणमिति । लङ्कातः स्वनिरक्षे पूर्वं आ-दावेव रव्युदयः पश्चात् पश्चाद्रव्युदयो देशान्तरविघटीभिः । अतो लङ्कायां तिथिभोग्यघटिकाः पूर्वदेशान्तरे देशान्तरविघटिकाभिरधिकाः पश्चाद्रहिताः स्वनिरक्षे तिथिभोग्यघटिकाः स्युः

देशांतरविघटीज्ञानार्थं चानुपातः । यदि स्पष्टभूपरिधियोजनैः ३६०० विघटिकास्तदा देशान्तरयोजनैः किम् । लब्धा विघटिकाः = $\frac{३६००\times देयो}{स्पभूप}$ । अत्राचार्येण स्पष्टभूपरिधिः = ४८०० इति कल्पितस्तदा देशान्तरविघटिकाः = $\frac{३६००\times देयो}{४८००}$ = $\frac{३ देयो}{४}$ । अत उपपन्नम् । अनेन 'पादोनरेखापरपूर्वयोजनैः पलैः' — रिति रामदैवज्ञोक्तमप्युपपद्यत इति । यदि रविगतिः = ६० कलास्तावती च तद्घटीमध्ये राहुगत्यभावाद्विराहुर्कगतिश्च कल्प्यते तदा चालनवासनातिसुगमेति सर्वं निरवद्यम् ।

अथानेन गणेशोक्तप्रकारेण तिथेर्भोग्यघटिका न वास्तवा भवन्ति मध्यमरविचन्द्रान्तरजनितभोग्यकलाभ्यः षष्टिगुणाभ्यो मध्यमरविचन्द्रगत्यन्तराप्तात् मध्यमतिथिभोग्यप्रमाणत्वादिति सुधीभिर्मध्यस्थबुद्ध्या भृशं विचिन्त्यमिति ॥ १२ ॥

**सस्वार्हल्लवमिनजं फलं युगघ्नं**
**लिप्तास्ताः कुरु च तयोः स्फुटौ च तौ स्तः ।**
**वित्र्यंशद्वियुतहरः कृशानुभक्त-**
**श्चन्द्रस्य प्रभवति बिम्बमंगुलाद्यम् ॥ १३ ॥**

**मल्लारिः**-----इनात् सूर्याज्जायते तत् तथा । एवम्भूतं फलं स्वस्य अर्हल्लवन चतुर्विंशत्यंशेन युक्तं युगघ्नं चतुर्गुणितं सत् ता लिप्ताः कलाः स्युः । तास्तयोः सूर्यविपातयोः कुरु तौ स्फुटौ स्तः । वित्र्यंशौ यौ द्वौ ताभ्यां युतो हरः कृशानुभिस्त्रिभिर्भक्तः सन् फलमंगुलाद्यं चन्द्रस्य बिम्बं प्रभवति ।

अत्रोपपत्तिः । अत्र रविफलं पञ्चदशभिर्भाज्यं पूर्वं पञ्चदशगुणितत्वात् ततः कलार्थं षष्टिर्गुणः । गुणहरयोर्हरेणापवर्त्तितयोर्गुणः ४ । अतो युगघ्नमिति । अत्र प्रथमं रविफलं परमेतावत् २।५।३१ धृतम् । एतान्मितं धार्यम् २।१०।३१। अनयोरन्तरमिदम् ।०।५। इदं चतुर्विंशत्या सवर्णितं जातं द्वयं फलं तुल्यमेव । अतः सस्वार्हल्लवमिति । ताः फलकलाः रविव्यग्वोर्देयास्तौ स्फुटौ भवतः। अथ चन्द्रबिम्बस्योपपत्तिः । अत्र गतेर्बिम्बानयनं कार्यमित्यत्र हरोऽपि गतिखण्डमतो हरादनुपातः । यद्यस्मिन् मध्यमे हरे ३० । २० । इदं चन्द्रबिम्बं १० । ४० । तदेष्टस्य स्पष्टहरे किमिति । अत्र गुणाद्धरो हि त्रिगुणासन्नोऽतोऽत्र वित्र्यंशौ द्वौ क्षेप्यौ । ततस्त्रिगुणं चन्द्रबिम्बं भवति । अत उक्तं वित्र्यंशद्वियुतहरः कृशानुभक्तश्चन्द्रबिम्बमिति ॥ १३ ॥

**विश्वनाथः**—अथ व्यगुरविस्फुटीकरणमाह । वेदघ्नमिति । रविफलं २३ । ३ । ३० । वेदघ्नम् ९२ । १३ । २० । स्वकीयचतुर्विंशांशविभागेन ३।५० । ३ । सहितं जाताः कलाः ९६ । ३ । तरणिफलस्य ऋणत्वादृणं रविफलं

धनं चेत् तदा एताः कलाः व्यग्वर्कयोर्युताः कार्याः। ऋण फले रहिताः कार्याः। तौ व्यग्वर्कौ स्फुटौ स्तः । कलाभिः संस्कृतो जातः स्पष्टो रविः ६ । २८ । ३४ ५२ । स्पष्टो व्यगुः ५ । २३ । ४४ । ४८ । हारः २८ । ५० वित्र्यंशाद्वि–१ । ४० । युतः ३० । ३० । कृशानु–३ भक्तो लब्धमंगुलाद्यं चन्द्रविम्बम् १० । १० । ॥ १३ ॥

सुधाकरः—अत्रोपपत्तिः । पूर्वं १० श्लोकवासनायां तृतीयं खण्डं रविमन्दफलोत्थं यत् त्यक्तं तन्मानं च गृहीतरविमन्दफलस्य जिनांशसमं तत्रैव प्रदर्शितं ततः कलाकरणार्थं पञ्चदशगुणाः फलभागाश्चतुर्गुणिताः कृताः । ततस्तत्संस्कारतो रविव्यग्वर्कौ स्फुटौ भवत एवेत्युपपन्नं पूर्वार्धम् ।

अथ पूर्वप्रकारवैपरीत्येन चंग = २४ हा + ६२ ततो 'भुक्तिर्युगाचलभाजिते'त्यनेनांगुलाद्यं

$$\text{चन्द्रस्य विम्बम्} = \text{चंवि} = \frac{\text{२४ हा + ६२}}{\text{७४}} = \frac{\text{३ ( २४ हा + ६२ )}}{\text{७४ × ३}} = \frac{\text{७२ हा + १८६}}{\text{३×७४}}$$

$$= \frac{\text{७४ हा + १८६ − २ हा}}{\text{३ × ७४}} = \frac{\frac{\text{हा + १८६ − २ हा}}{\text{७४}}}{\text{३}}$$ । अत्र २हारस्थाने मध्यममानेना–

$$\text{३०।२०यं हरो गृहीतस्ततः चवि} = \frac{\text{हा} + \frac{\text{१८६ − २ (३० । २०′)}}{\text{७४}}}{\text{३}} = \frac{\text{हा} + \frac{\text{१८६-(६०।४०।)}}{\text{७४}}}{\text{३}}$$

$$= \frac{\text{हा} + \frac{\text{१२५ । २०′}}{\text{७४}}}{\text{३}} = \frac{\text{हा + १ । ४२′}}{\text{३}} = \frac{\text{हा + १ । ४०′}}{\text{३}} \ \text{स्वल्पान्तरात्} = \frac{\text{हा} + (\text{२} - \frac{\text{१}}{\text{३}})}{\text{३}}$$ ।

अत उपपन्नं चन्द्रविम्बानयनम् ॥ १३ ॥

**खाब्ध्याप्ताकांगतदलयुतोनाः स्वकेन्द्रे कुलीर-**
**नक्राद्ये स्याद्व्यरिलवभवा अंगुलाद्यर्कविम्बम् ।**
**हारो वीषुः स्वतिथिलवयुक् स्यात् कुभाऽस्यां धनर्णं**
**खाक्षाप्ताकांगतदलमतो नक्रकर्क्यादिकेन्द्रे ॥ १४ ॥**

मल्लारिः—अथ सूर्यविम्बभूभाविम्बे साधयति । खाब्धिभिश्चत्वारिंशता ४० आप्तं भक्तं च तदर्कस्य अगतदलं भोग्यखण्डं तेन व्यरिलवभवा विषड्लवा एकादश युक्तोनाः कार्याः । कदेत्याह । स्वकेन्द्रे सूर्यस्य मन्दकेन्द्रे कुलीरनक्राद्ये सति । कर्क्याद्ये युता मकराद्य ऊनाः सन्तोऽअंगुलादि सूर्यविम्बं स्यात् । विगता इषवः पञ्च यस्मात् स तथा । एवम्भूतो हरः। स्वस्य तिथिलवेन पञ्चदशांशेन युक् कुभा स्यात् । अस्यां कुभायां खाक्षैः पञ्चाशताऽऽप्तं भक्तं

यदर्कस्य अगतदलं भोग्यखण्डं तत् नक्रकर्क्यादिकेन्द्रे धनर्णं कार्यम् । मकरादौ धनं कर्क्यादौ ऋणम् । तत् भूछायाविम्बं भवति ।

अत्रोपपत्तिः । मध्यगतिप्रमाणेन रवेर्मध्यबिम्बमिदम् १० । ५० । यदि मध्यगत्या इदं तदा स्पष्टगत्या किम् । अत्र भोग्यखण्डपरमत्वे गतिफलपरमत्वमित्यत्र भोग्यखण्डात् गतिफलं प्रसाध्य बिम्बं साध्यम् । तदत्र परमं बिम्बम् ११ । १५ । अनयोर्मध्यस्पष्टयोरन्तरम् ० । २५ । इदं परमभोग्यखण्डस्यास्य १७ । चत्वारिंशत्तमो भागः । अयं मध्याबिम्बे देयः । कर्क्यादौ गतिफलं धनमतो युतो युक्तः । मकरादौ गतिफलमृणमतो हीनः । एवं रविबिम्बं भवति । अथ भूभाविम्बोपपत्तिः । अत्र चन्द्रमध्यगतिवशात् जातं भूभाखण्डमेकम् । २७ । इदं मध्यहरस्य ३० । २० । पञ्चोनितस्य स्वातिथिलवयुक्तस्य समं भवति । अतो हि स्पष्टहरादेवं साध्यम् । तदत्र सूर्यगतिफलोत्थं विम्बं भूछायायामस्यां देयम् । तत्र सूर्यभोग्यखण्डस्य पञ्चदशांशं देयमिति दृश्यते । यतो हि परमं भोग्यखण्डमिदम् । १७ । त्र्यंशोनाष्ट-७ । ४० भक्तं रविगतिफलं भवति २ । १३ । तदपि सप्तभक्तं भूभाखण्डं भवति । अतोऽयं हरघातो हरः * ५० । भोग्यखण्डं पञ्चाशद्भक्तं तत्र भूभाखण्डे देयः । मकरादौ ऋणं फलं गतेः । अतस्तद्भूभायां युज्यते । कर्क्यादौ धनं फलं तद्भूभायां न्यूनं भवति ।। १४ ।।

**विश्वनाथः**—अथ रविविम्बसाधनमाह खाब्धीति । गतखराडम् १२ । अस्मात् खाब्ध्या-४० प्तिः ० । १८ । अनेन व्यरिलवभवाः १० । ५० । केन्द्रस्य कर्क्यादित्वात् ऊनाः १० । ३२ जातं रविविम्बम् । हारः २८ । ५० । पञ्चरहितः २३ । ५० स्वकीयेन पञ्चदशभागेन १ । ३५ युक्तः २५ । २५ । सूर्यफलाधने भोग्यखराडं १२ पञ्चाशद्भक्तं फलम् ० । १४ । रविकेन्द्रस्य कर्क्यादित्वात् ऋणं जाता भूभा २५ । ११ ॥ १४ ॥

**सुधाकरः**—अत्र त्रयोदशभागकेन्द्रगत्या यद्येष्यखण्डं तदा रविकेन्द्रगत्यैकभागमितया किं जातमत्र रव्येष्यखण्डवशाच्चन्द्रवद्गतिफलं कलात्मकम् $= \frac{४ \text{ एख}}{१३}$ । इदं द्व्यासं स्वाङ्गलवोनितं ततः सस्वजिनांशं जातं कलात्मकं रविगतिफलम् $= \frac{२५}{२४} \cdot \frac{५}{१२} \cdot \frac{४}{१३} \text{ एख} = \frac{२५}{२४} \cdot \frac{५}{३} \cdot \frac{१}{१३} \text{ एख}$ । ततः कुलीरनक्रादिकेन्द्रयोः क्रमेण रविस्पष्टा गतिः$=५९'$ । $८''$

---

* त्र्यंशोनाष्टसंख्या $= ८ - \frac{१}{३}$ सप्तभिर्गुणिता $५६ - \frac{७}{३} = ५४$ स्वल्पान्तराद्धक्यतो मल्लारिवासना स्वल्पान्तरा ।

$\pm\frac{२५}{२४}\cdot\frac{५}{३}\cdot\frac{१}{१३}$ एख । 'भानोर्गतिःस्वदशभागयुता' इत्यादिनाभास्करोक्तेनकलात्मकंबिम्ब-मानीयतद्रामैर्विभज्यजातमंगुलात्मकंरविबिम्बम्=रविं$=\frac{११}{६०}\left(५९'।८''\pm\frac{२५}{२४}\cdot\frac{५}{३\cdot१२}\text{ एख}\right)$

$=\frac{६५०।२८}{६०}\pm\frac{११}{६०}\cdot\frac{२५}{२४}\cdot\frac{५}{३}\cdot\frac{१}{१३}$ एख ।

$=१०\text{अं}+५०\text{व्य}\pm\frac{११\times२५\text{ एख}}{१२\times२४\times३\times१३}=१०\frac{५०}{६०}\text{अं}\pm\frac{२७५\text{ एख}}{११२३२}$

$=११-\frac{१}{६}\pm\frac{\text{एख}}{४०+\frac{२३२}{२७५}}$ अत्र हरे $\frac{२३२}{२७५}$ इदं खण्डं त्यक्तमाचार्येण यतस्तथाकृते परमे चैष्यखण्डे सप्तदशमितेऽपि एकव्यंगुलान्तरमपि न भवति । एवं जातमंगुलाद्यं रविबिम्बम्

$=११-\frac{१}{६}\pm\frac{\text{एख}}{४०}$ एवमुपपद्यते रविबिम्बानयनम् ।

अथ भूभासाधनोपपत्तिः । तत्र पूर्वविधिना चन्द्रस्य स्पष्टा गतिः = २४ ह + ६२ । कुलीरनक्रादिकेन्द्रयो रविस्पष्टगतिः $=५९'।८''\pm\frac{२५}{२४}\cdot\frac{५}{३}\cdot\frac{१}{१३}$ एखाततो 'भानोर्गतिः शरहता रविभिर्विभक्ते' त्यादिभास्करोक्तेन कलात्मकं भूभाबिम्बं रामैर्हृतं जातमंगुलाद्यं

भूभाबिम्बम् $=\frac{२(२४\text{ह}+६२)}{१५\times३}-\frac{५}{१२\times३}\left(५९'।८''\pm\frac{२५\times५}{२४\times३\times१३}\text{एख}\right)$

$=\frac{४८\text{ह}+१२४}{१५\times३}-\frac{५(५९'।८'')}{१२\times३}\mp\frac{५\times२५\times५}{३\times१२\times२४\times३\times१३}$ एख

$=\frac{४८\text{ह}+१२४}{१५\times३}-\frac{२५(५९'।८'')}{१५\times१२}\mp\frac{६२५\text{ एख}}{३३६९६}$

$=\frac{४८\text{ह}}{१५\times३}+\frac{१२४}{१५\times३}-\frac{२५(५९'।८'')}{१५\times३\times४}\mp\frac{\text{एख}}{५३+\frac{५७१}{६२५}}$

$=\frac{१६\text{ ह}}{१५}+\frac{१२४\times४}{१५\times३\times४}-\frac{२५(५९'।८'')}{१५\times३\times४}\mp\frac{\text{एख}}{५०+३\frac{५७१}{६२५}}$

$=\frac{१६\text{ ह}}{१५}+\frac{४९६-(१४७८।२०')}{१५\times३\times४}\mp\frac{\text{एख}}{५०+३\frac{५७१}{६२५}}$

$$= \frac{१६\ ह}{१५} - \frac{(९८२।२०')}{१५\times १२} \mp \frac{एख}{५० + ३\frac{५७१}{६२५}} = \frac{१६\ ह}{१५} - \frac{८१।५२'}{१५} \mp \frac{एख}{५० + ३\frac{५७१}{६२५}}$$

$$= \frac{१६}{१५}\left\{ ह - (५।७') \right\} \mp \frac{एख}{५० + ३\frac{५७१}{६२५}}$$

अत्राधाल्पत्वात् ७" इदं त्यक्तं तदा जातं भूभाविम्बस्य मानम्

$$\frac{१६\ (हा - ५)}{१५} \mp \frac{एख}{५० + ३\frac{५७१}{६२५}}$$ । अत्रापि हरस्य द्वितीयं खण्ड-३ $\frac{५७१}{६२५}$ मिदं

त्यक्तं यतस्तथाकृते परमे चैष्यखण्डे सप्तदशप्रमिते ह्येकव्यंगुलान्तरं भवति ।

$$\left( \frac{१७}{५०} अं = \frac{१७\times ६०}{५०} व्यं = \frac{१०२०}{५०} = २०\ व्यं । \frac{१०२०}{५३\frac{५७१}{६२५}} = १९\ व्यं \right)$$

एवं जातमंगुलात्मकं भूभाविम्बम् $= \frac{१६}{१५}(ह - ५) \mp \frac{एख}{५०}$ अत उपपन्नम् ॥ १४॥

**ज्ञात्वैवं तिथिपूर्वकं ग्रहणजं शेषं भवेत् पूर्ववत्**
**षण्मासैरुत पक्षवर्जितयुतैः पक्षेऽथ वाऽऽलोकयेत् ।**
**अर्केन्दुग्रहणं व्यगोर्भुजलवैस्तिथ्यल्पकैरुष्णगो-**
**र्याम्यैर्वस्वधरैर्द्युरात्रिगतिथौ चाहर्निशामाश्रिते ॥ १५॥**

**मल्लारिः**—एवं बिम्बादि प्रसाध्येदानीं ग्रहणसम्भूतिमाह । एवं तिथिपूर्वकं ज्ञात्वा शेषं ग्रहणजं शरस्थित्यादि पूर्ववत् चन्द्रग्रहणोक्तवद्भवेत् । अर्केन्द्वोः सूर्यचन्द्रयोर्ग्रहणं षण्मासैर्ग्रहणादन्यद्ग्रहणम् । अथ वा पक्षवर्जितयुतैः षण्मासैः सार्धपञ्चमासैः सार्धषण्मासैर्वा आलोकयेत् ग्रहणसम्भूतिं पश्येत् । तत्सम्भवमाह। व्यगोर्भुजभागैस्तिथ्यल्पकैः सद्भिर्ग्रहणम्। तु विशेषे। उष्णगोः सूर्यस्य ग्रहणे व्यगुभुजभागैर्याम्यैर्दक्षिणगोलजैर्वस्वधरैः सद्भिर्ग्रहणम् ।तद्यथा। सूर्यग्रहणे यदा व्यगुरुत्तरगोले तदा तद्भुजांशैस्तिथ्यल्पकैरेव ग्रहणम् । यदि याम्या भुजभागास्तदाष्टाधिकत्वे ग्रहणसम्भवो नास्तीत्यर्थः । द्युरात्रिगतिथौ सत्याम् । सूर्यग्रहणं तु दिवा तिथौ सत्यां भवति । चन्द्रग्रहणं तु रात्रौ तिथौ सत्यां भवति । अथ वा अहर्निशं तिथौ आश्रिते किञ्चिद्दिनरात्रिस्पर्शे तिथौ सति सूर्यचन्द्रग्रहणे भवत इति व्याख्या ।

अस्योपपत्तिः प्रतिपादितप्रमेयाऽतिसुगमा च ॥ १५ ॥

**विश्वनाथः**—अथ ग्रहणसम्भवमाह ज्ञात्वेति । एवं तिथिपूर्वकं तिथिव्यग्वादिकं ज्ञात्वा शेषं स्थितिशरादिकं पूर्ववच्चन्द्रग्रहणवद्भवेत् । अर्केन्द्वोर्ग्रहणसम्भूतेः सकाशात् अन्यग्रहणसम्भूतिं षण्मासैर्वदेत् । उत अथ वा पक्षवर्जितैः षण्मासैर्ग्रहणं विलोकयेत् सार्धपञ्चभिर्मासैरित्यर्थः । अथ वा पक्षयुतैः पञ्चदशदिनयुतैः षण्मासैर्ग्रहणं विलोक्यम् । अथ वा पक्षे पञ्चदशदिने विलोक्यम् । आदौ यत्र ग्रहणसम्भूतिस्तत्रत्यं व्यगुरवितिथ्यादिकं कृत्वा तेषां पक्षचालनं धनं देयम् । तत्र ग्रहणं विलोक्यम् । तत्र चेन्न ग्रहणं तदा तत्रत्यानां व्यग्वादीनां षण्मासचालनं धनं देयम् । तत्र चेन्न तदा पक्षचालनमृणं देयम् । तत्र चन्न तदा पक्षचालनं धनं देयम् । एवमग्रे पुनश्चालनं कृत्वा ग्रहणं विलोक्यम् । तत्र व्यगोर्भुजलवैस्तिथ्यल्पकैः पञ्चदशभागाल्पकैरर्केन्द्वोर्ग्रहणं स्यात् । सूर्यस्य याम्यैर्दक्षिणैर्व्यगुभुजांशैर्वस्वघ्रैरष्टाल्पैरर्कग्रहणं स्यात् । कस्मिन् सति द्युरात्रिगतिथौ सति दिनमानात् तिथौ न्यूने सति सूर्यग्रहणं विलोक्यम् । चेद्रात्रिगतस्तिथ्यन्तस्तदा चन्द्रग्रहण विलोक्यम् । चेदथ वा अहर्निशमाश्रिते सति । इदं ग्रस्तोदिते ग्रस्तास्ते वा ग्रहणं स्यात् ॥ १५ ॥

**सुधाकरः**—ग्रहणं हि 'सपातसूर्यस्य भुजांशका यदा मनूनकाः स्याद्ग्रहणस्य सम्भवः' इति भास्करोक्तेन चतुर्दशतोऽल्पेषु भुजांशेषु भवति । अत्र राहोश्चक्रशुद्धत्वाद्विपातार्कः सपातार्कसमः । कल्प्यते विराह्वर्कः = ६$^{रा}$ । ६° तदा ग्रहणसम्भवो जातो भुजांशानां षण्णां मनूनकात् । अथ षण्मासोत्तरे विराह्वर्कस्य चालनं 'व्यगौ षट् कृताः कुश्च षाण्मासिकं स्या' दित्यनेनाचार्योक्तेन राश्यादिकम् ६ । ४ । १ । तत्संस्कारेण तदा व्यग्वर्कः = ६$^{रा}$+६°+( ६$^{रा}$+४°+१′ ) = ० । १०° । १′ । अतोऽत्रापि भुजांशानां मनूनत्वाद्ग्रहणसम्भवः । अथ पुनः कल्प्यते यदा सूर्यग्रहणसंभवो जातस्तदा व्यग्वर्कः = ११$^{रा}$ + २४° ततः सार्धषण्मासोत्तरे व्यग्वर्कचालनेन

६$^{रा}$ + ४° । १′ + ( ०$^{रा}$ । १५° । २० ′ ) = ६$^{रा}$ । १९° । २१′

अनेन सहितो जातस्तदा पूर्णान्तकाले व्यग्वर्कः

= ११$^{रा}$ + २४° + ( ६$^{रा}$ । १९° । २१′ ) = ६$^{रा}$ । १३° । २१′ । अत्रापि भुजांशानां मनूनत्वाच्चन्द्रग्रहणसंभवो जातः । तत्रैव विराह्वर्के यदि पाक्षिकं चालनम् ०$^{रा}$ । १५° । २०′ इदं योज्यते तदा दर्शान्तादग्रतः पूर्णान्तकाले विराह्वर्कः = ११$^{रा}$ । २४° + ( ०$^{रा}$ । १५° । २०′ ) = ०$^{रा}$ । ९° । २०′ अत्रापि भुजांशानां मनूनत्वाच्चन्द्रग्रहणसंभवः । अथ कल्प्यते कस्मिन्नप्यमान्ते विराह्वर्कः = ६$^{रा}$ । ६° 'तदा याम्ये वस्वघ्रैः' इति वक्ष्यमाणविधिना सूर्यग्रहणसंभवः । ततोऽग्रे सार्धपञ्चमासोत्तरे व्यग्वर्कचालनेन ६$^{रा}$ । ४° । १ - ( ०$^{रा}$ । १५° । २′० ) = ५$^{रा}$ । १८° । ४१′ अनेन जातो विराह्वर्कः पूर्णान्तकाले = ११$^{रा}$ । २४° । ४१′ अत्रापि भुजांशानां मनूनत्वाद्ग्रहणसम्भवो जातः । इत्यनेन षण्मासैरुत पक्षवर्जितयुतैः

पक्षेऽथवालोकयेत्' इत्युपपद्यते । मनूनकैश्चन्द्रग्रहणसम्भवस्तु भास्करविधिना स्फुट एव। अथ कियन्मिते व्यग्वर्कभुजांशे सूर्यग्रहणमिति विचारः । शरनतिसंस्कारोत्पन्ने स्पष्टशरे मानैक्यार्धसमे विम्बयोः स्पर्श एव। मानैक्यार्धादल्पे तु ग्रहणमवश्यमेव । कल्प्यते विराह्वर्कस्योत्तरगोले तादृशः परमः शरो जातो यत्रैव ग्रहणसम्भवो यदा परमा दक्षिणा नतिश्च ४८ । ४६तदा स्पष्टशरः पश−(४८' । ४६'')। अयं यदा मानैक्यार्धसमस्तदा ग्रहणसंभवः। मध्यममानैक्यार्धं च=३२' तदा पश−(४८'।४६'')=३२' ∴ पश= ८०'।४६'' अतोऽस्मादधिके शरे पृथिव्यां कुत्रापि ग्रहणसंभवो न।अथ कियति व्यग्वर्कभुजांशेऽयं शर उत्पद्यते तदर्थमनुपातः। यदि परमशरेणा−२७०'नेन त्रिज्या १२०लभ्यते तर्हि ग्रहणसंभवोत्पादकपरमशरेणा−८०'।४६''

नेन का जाता भुजज्या = $\frac{१२०\times(८०'।४६'')}{२७०}=\frac{४(८०'।४६'')}{९}=\frac{३२३'।४''}{९}$

= ३५' । ५४'' स्वल्पान्तरात्। अस्याश्चापं व्यगुभुजांशाः स्पष्टाः= १७° । २७' । अत्राचार्येण मध्यमस्पष्टभुजांशान्तरं परमरविमन्दफलसमं २° । १०' । हीनं कृतम् । एवं कृते जाता व्यग्वर्कभुजांशाः = १५° स्वल्पान्तरात्। विराह्वर्कस्य दक्षिणगोले तु यदि नत्यभाव स्तदा मनैक्यार्धसमशरजनिते सप्तमितभुजांश एव ग्रहणसंभव इति । दिवसे सूर्यग्रहणस्य रात्रौ चन्द्रग्रहणस्य संभवो वा स्पर्शमोक्षान्तर्गतः कोऽपि कालो दिवसे रात्रौ च तदा क्रमेण सूर्यग्रहणस्य चन्द्रग्रहणस्य संभव.। यदा सभवस्तदा गणितप्रयासः कर्त्तव्योऽन्यथा किं गणितप्रयासेनेति । सर्वमवशिष्टमन्यत् स्फुटमिति सर्वं निरवद्यम् ॥ १५ ॥

**सत्र्यंशगुणोनितो हरोऽयं वेदघ्नोऽङ्कहृतो व्यगोर्भुजांशैः ।**
**हीनोभवताडितोऽद्रिहृतस्याच्छन्नंशीतरुचोंऽगुलादिकंवा१६**

**मल्लारिः**---अथ ग्रासं साधयति । अयं हरः सत्र्यंशैर्गुणैस्त्रिभिरूनितस्ततो वेदैश्चतुर्भिर्हन्यते स तथा । ततोऽङ्कैर्नवभिर्हृतो भक्तो व्यगुभुजांशैर्हीनः कार्यः । यद्धीनो न स्यात् तदा ग्रहणमेव नास्ति । ततः स भवैरेकादशभिस्ताडितो गुणितः । अद्रिहृत् सप्तभक्तः । फलं शीतरुचश्चन्द्रस्यांगुलादि छन्नं वा प्रकारान्तरेण स्यात् ।

अत्रोपपत्तिः । शरोनं मानैक्यखण्डं ग्रास इति मुख्ययुक्तिः । तदत्र मध्यमं मानैक्यखण्डाभिदम् १८। ५२। अत एव भागाः साधिता विलोमविधिना । शरवद्व्यगुभुजभागा भवघ्नाः सप्तभक्ताः शरो भवति । अतो व्यस्तविधिना मानैक्यखण्डं सप्तगुणमेकादशभक्तं जाता भागाः १२ । एते मध्यहराद्यथाऽऽप्यच्छान्ति तथा कार्यम् । अतो मध्यहरे सत्र्यंशगुणोनिते सति सप्तविंशतिर्यावत् चतुर्गुणा नवभिर्भज्यते तावद्द्वादश भागा एव भवन्ति । अतः सत्र्यंशगुणोनितश्चतुर्गुणो नवभक्तो भागाः स्युस्तेभ्यो व्यगुभुजभागा ऊनाः कार्याः । शरस्य न्यूनकिर्त्तव्यत्वात् ततो भागा भवगुणाः सप्तभक्ताश्छन्नमंगुलाद्यं चन्द्रस्य भवतीत्युपपन्नम् ॥ १६ ॥

**विश्वनाथः**----अथ चन्द्रस्य छन्नानयनमाह सत्र्यंशेति । हारः २८।५०। सत्र्यंशगुणेन ३।२०। रहितः २५।३०। वेदघ्नः१०२।०। नवाभिर्भक्तः ११।२०। व्यगोर्भुजांशैः ६।१५।१२। हीनः ५।४।४८। यदा व्यगुभुजांशैर्हीनो न भवति तदा चन्द्रग्रहणं न स्यात् । एकादशाभिर्गुणितः ५५।५२।४८। सप्त-भक्तः फलं शीतरुचश्चन्द्रस्य अंगुलाद्यं छन्नम् ७।५८। वेत्यथ वा ।

अथ सूर्यग्रहणे ग्रस्तोदिते ग्रस्तास्ते नतघटिकाज्ञानमाह ।

चेन्निशैष्यके गतेऽर्कग्रहस्तदन्वितम् ।
स्याद्दिवादलं नतं प्राक् परं क्रमात् तदा ॥

चेन्निशैष्यके रात्रिशेषे रात्रिगते वाऽर्कग्रहः । तदा यावतीभिर्घटिकाभी रात्रि-शेषे गते वा सूर्यग्रहणं स्यात् तदा तावतीभिर्घटिकाभिर्युतं दिनदलं तत् प्राक् परं नतं भवति । रात्रिशेषे प्राङ्नतं रात्रिगते पश्चान्नतं स्यादित्यर्थः ॥ १६ ॥

सुधाकरः—अत्रोपपत्तिः । 'वित्र्यंशद्वियुतहरः कृशानुभक्त' इत्याद्याचार्योक्तविधिना चन्द्रबिम्बम् $= \frac{\text{हा} + (२ - \frac{१}{३})}{३}$ । तथा 'हारो वीषु' रित्यादिना भूभाविम्बम् $= \frac{१६}{१५}(\text{हा} - ५) \mp \frac{\text{एख}}{५०}$ । ततो द्वयोर्योगदलेन मानैक्यखण्डम् $= \frac{\text{हा} + (२ - \frac{१}{३})}{६} + \frac{८(\text{हा} - ५)}{१५} \mp \frac{\text{एख}}{१००}$

$$= \frac{५\text{हा} + (१० - \frac{५}{३}) + १६\,\text{हा} - ८०}{३०} \mp \frac{\text{एख}}{१००}$$

$$= \frac{२१\,\text{हा} - ७० - \frac{५}{३}}{३०} \mp \frac{\text{एख}}{१००} = \frac{२१\,\text{हा} - ७१\frac{२}{३}}{३०} \mp \frac{\text{एख}}{१००} ।$$

ततो यदि परमशरनवत्यंगुलैर्व्यंगवर्कभुजज्या त्रिज्या१२०मिता लभ्यते तदा मानैक्खण्डमितेन शरेण किं लब्धा भुजज्या सा दशगुणा२१हृता जाता मानैक्यार्धसम्बन्धिनो व्यग्यर्कभुजांशाः

$$= \frac{१०}{२१} \cdot \frac{१२०}{९०} \left( \frac{२१\,\text{हा} - ७१\frac{२}{३}}{३०} \mp \frac{\text{एख}}{१००} \right)$$

$$= \frac{४ \times १०}{२१ \times ९०} \left( २१\,\text{हा} - ७१\frac{२}{३} \right) \mp \frac{\text{एख} \times १२० \times १०}{१०० \times २१ \times ९०}$$

$$= \frac{४}{९ \times २१} \left( २१\,\text{हा} - ७१\frac{२}{३} \right) \mp \frac{२\text{एख}}{३१५} = \frac{४}{९} \left( \frac{२१\text{हा} - ७१\frac{२}{३}}{२१} \right) \mp \frac{२\,\text{एख}}{३१५}$$

$$= \frac{४}{९} \left( \text{हा} - \frac{७१\frac{२}{३}}{२१} \right) \mp \frac{२\,\text{एख}}{३१५}$$

$= \frac{४}{९} \left\{ हा - (३।२'५) \right\} \overline{+} \frac{२\ एख}{३१५} = \frac{४}{९} \left\{ हा - (३।२०'+५') \right\} \overline{+} \frac{२एख}{३१५}$

अथात्र यदि परममेष्यखण्डम्=१७तदान्तिमखण्डफलम् $= \frac{२\ एख}{३१५} = \frac{२×१७^{\circ}}{३१५} = \frac{३४× ६०'}{३१५}$

$= \frac{३४×१२'}{६३} = \frac{३४×'४}{२१} = \frac{१३६}{२१} = ६'$ इदं स्वल्पान्तरात् त्यक्तम्। ततो मानैक्यार्धसम्ब-

न्धिनो भुजभागाः$= \frac{४}{९}\left( हा - ३\frac{१}{३} - ५' \right) = \frac{४}{९}\left( हा - ३\frac{१}{३} \right) - \frac{५'×४}{९}$

$= \frac{४}{९}\left( हा - ३\frac{१}{३} \right) - २'$ । अत्रापि द्वितीयमृणात्मकं खण्डं स्वल्पान्तरात् त्यक्तम् । तदा

मानैक्यार्धसम्बन्धिनो व्यग्वर्कभुजभागाः $= \frac{४}{९}\left( हा - ३\frac{१}{३} \right)$तत एभ्योऽभीष्टव्यग्वर्कभुज-

भागा विशोधिताः शिष्टाश्छन्नांगुलसमशरसम्बन्धिनो व्यग्वर्कभुजभागाः। तत 'स्तेऽष्टा निघ्नाः शङ्करैः शैलभक्ता' इत्यादिना शरांगुलसमं छन्नांगुलमानमित्युपपद्यते सर्वम् । अत्र—$\frac{२\ एख}{३१५}$तत्खण्डभवं परममृणफलम् = ६' द्वितीयं त्यक्तखण्डमानं च = – २' द्वयोर्योगेन

परममन्तरमृणं वसुकलासममाचार्यविधिनेति सुधीभिर्विचिन्त्यम् । चन्द्रग्रहणेऽस्य छन्नस्यान-यनं कृतम्। 'शेषं भवेत् पूर्ववत्' इत्यनेनात्रापि तथैवानेयमिति ज्ञापितं चाचार्येण पुनरानयन-प्रकारो दर्शितोऽतो 'वा' इति दत्तमित्यलं पल्लवितेन ॥ १६ ॥

**अमान्तनतनाडिकांघ्रिरहिताद्युतात् प्राक् परे**
**गृहादिकरवेर्नतांशकरसांशसंस्कारिताः ।**
**व्यगोर्भुजलवाः स्फुटाः स्युरथ सप्तशुद्धाश्च ते**
**निजार्धसहिता रवेः स्थगितमंगुलाद्यं स्फुटम् ॥१७॥**

**मल्लारिः**--अथ रविग्रहणे ग्रासानयनं स्थूलमाह । दर्शान्तकालीनं यन्नतं तस्य नाडिका घटिका यास्तासामंघ्रिश्चतुर्थांशो राश्यादिस्तेन प्राक् पूर्वनते रहि-ताद् गृहादिकात्। रवेः सूर्यात्। परे पश्चिमनते युताद्ये नतांशकाः स्युः । तस्य क्रान्तिरक्षांशैः संस्कृता नतांशा भवन्ति । तेषां नतभागानां यो रसांशकः षडंश-स्तेन व्यगोर्भुजलवाः संस्कारिताः । एकदिशोर्योगो भिन्नदिशोरन्तरमिति । ते स्फुटाः स्युः । ततस्ते सप्तभ्यः शुद्धाः कार्याः । यदि न शुध्यन्ति तदा ग्रहण-मेव नास्ति। ते निजेन अर्धेन सहिताः सन्तो रवेरंगुलादिकं स्फुटं स्थगितं ग्रासः स्यात्। इति व्याख्या।

अत्रोपपत्तिः। अत्र रविग्रहणे लम्बननतिसाधनं विना ग्रहणसम्भवोऽपि न ज्ञायते। अतः स्थूले लम्बननती साध्यते। नतघटीनां चतुर्थांशो लम्बनं तद्दर्शान्ते देयम्। पुनस्तत्कालीननताद्यः पञ्चमांशः स रवौ पूर्वकपाले यावत् न्यूनीक्रियते पश्चिमकपाले युक्तः क्रियते तत् त्रिभोनलग्नं भवति। अत्र चतुर्थांशसंस्कृतस्य तस्य पञ्चमांशः केवलचतुर्थांशतुल्य एव भवति। अतो नतघटीनां चतुर्थांशः पूर्वापरे नते रवौ हीनाधिकः कार्यः। तत् त्रिभोनलग्नं स्यात्। तस्य नतांशाः कार्याः। तेभ्यो नतिः साध्या सा शरेण संस्कार्या। स स्पष्टशरो मानैक्यखण्डान्निष्कासनीयो ग्रासः स्यादित्यत्र लाघवार्थं नतभागोत्थनतिभागैर्व्यगुभुजभागा ये ते विहीनाः कृताः। तद्यथा। नतभागानां चतुर्थांशः स्थूलाऽनतिर्भवति। नतिस्तु स्पष्टशरखण्डम्। अतोऽस्याः भागकरणार्थं सप्तगुण एकादश हरः। पूर्वं चत्वारो हरः। एवं जातो हरघातो हरः ४४। गुणहरयोर्गुणेनापवर्तितयोर्लब्धा हरस्थाने षट्। अतो नतांशरसांशसंस्कारिता व्यगुभुजभागाः स्युरिति। अत्र रवेर्मानैक्यखण्डमिदम् ११। मध्यं कियद्भ्यो भुजभागेभ्यः स्यादिति ज्ञानार्थं सप्तगुणमेकादशभक्तं जाता भागाः सप्त ७। अत एतेषु भागेषु सप्तभ्यो न्यूनेस्वेव ग्रहणम्। अतः सप्तशुद्धाः। शरार्थं स्थूलत्वात् निजार्धसहिता इति तत् अंगुलादिकं सूर्यग्रहणे छन्नं भवतीत्युपपन्नम्॥ १७॥

**विश्वनाथः**—अथ सूर्यग्रहणे किञ्चित् स्थूलं ग्रासानयनमाह। अमान्तेति। अस्योदाहरणं सूर्यग्रहणे॥ १७॥

**सुधाकरः**—अत्रोपपत्तिः। 'वेदांशेन गृहादिनोनसहितः प्राक्पश्चिमेऽस्यापमः' इत्यादिभास्करोक्तपर्वसम्भवाधिकारविधिना व्यगोर्भुजलवाः स्फुटाः साधिताः। ततो मानैक्यार्धसमशरभवैर्व्यगुभुजांशैः सप्तसभैर्विशोधिताः शिष्टाश्छन्नांगुलसमशरभवा व्यगुभुजांशाः। ततस्तेऽशा निघ्नाः शङ्करैः शैलभक्ता' इत्यादिना शरः $= \frac{११}{७}\left(\text{स्पव्यभु} - ७\right) =$

$$\left(१+\frac{४}{७}\right)\left(\text{स्पव्यभु} - ७\right) = \left(१+\frac{१}{२}\right)\left(\text{स्पव्यभु} - ७\right)$$ स्वल्पान्तरात्। अयं शर एव छन्नांगुलसम इत्युपपन्नम्॥ १७॥

**व्यगुमध्यपर्ययगणो द्विगुणो वणिगादिगे व्यगुगृहे कुयुतः।**
**स्मृतचक्रसंज्ञकयुतो विधितो गतपर्वपो मुनिहृतोर्वरितः॥१८॥**

**मल्लारिः**—अथ पर्वेशानयनमाह। क्षेपचक्रघ्नध्रुवयुक्तस्य व्यगोर्मध्यो यः पर्ययगणः। मध्यग्रहानयने राशयो द्वादशभिर्भज्यन्ते फलं पर्ययाः। स पर्ययगणो द्विगुणः कार्यः। वणिगादिगे तुलादिषड्भस्थे व्यगुगृहे सति कुयुत एक-

युतस्ततोऽसौ स्मृतं यच्चक्रसंज्ञं तेन युतः । ततो मुनिहृतोऽवशिष्टः सप्ततष्टावशिष्टः सन् विधितो ब्रह्मणः सकाशात् शेषतुल्यो गतः पर्व, ग्रहणं पाति तथा. पर्वेशः स्यात् । पर्वेशाः सप्त ७ । उक्तं च वराहसंहितायाम् ।

षण्मासोत्तरवृद्ध्या पर्वेशाः सप्त देवताः क्रमशः ।
ब्रह्मशशीन्द्रकुबेरा वरुणाग्नियमाश्च विज्ञेयाः ।

अत्रोपपत्तिः। मासषट्केन एकः पर्वेशः। वर्षमध्ये द्वौ। वर्षमध्येतु व्यगुपर्ययोऽप्येकः। अतः स द्विगुणः पर्वेशः स्यादित्युपपन्नम् । स राशिषट्कस्थ एव यतो राशिषट्कानन्तरमेकवृद्धिः । अतस्तुलादिगे व्यगौ कुयुत इति । अत्रैकादशवर्षात्मकचक्रमध्ये द्वाविंशतिः पर्वेशाः । ते सप्ततष्टाः । एकश्चक्रतुल्य एव भवति । अतश्चक्रयुत इति । पर्वेशाः सप्त । अतः सप्ततष्ट इत्युपपन्नम् । नन्वत्र चक्रकोत्पन्नपर्वेशस्य योजितत्वात् । पूर्वं चक्रघ्नध्रुवयोगो नोपपद्यत इति चेत् । भ्रान्तोऽसि । नह्येकचक्रे निरवयवैकादश भगणा येन चक्रोत्थपर्वेशयोगे चक्रघ्नध्रुवयोगोऽनर्थकः स्यात् । किं त्वेतावान् भगणादिर्व्यगुः । ११।७।१।१२। तत्र राश्यादिरयं ध्रुवः ।७।१।१२ । चक्रघ्नः पूर्वयोजित इदानीं चक्रघ्नैकादश योज्याः। आचार्येण त्वेकादशोत्थपर्वेश एकश्चक्रघ्नः पर्वेश योजितस्तदपि युक्तमेव । नन्वेवं ग्रन्थादिजव्यगुभगणानां तदुत्पन्नपर्वेशस्य वा योजनैः प्रसज्येत । वाढम् । तदुत्थपर्वेश इति वराहोक्तेर्मासशब्दस्य चान्द्रे मुख्यत्वात् । चान्द्रवर्षे द्वौ पर्वेशाविति गम्यते न पुनरेकस्मिन् भगण इति । न चैकवर्षे व्यगुभगणोऽप्येक इति वाच्यं गणितनाधिक्यदर्शनात् । अत एकभगणे पर्वेशद्वयं न युक्तमिति चेत् । अत्र ब्रूमः ।

ब्रह्मेन्दुशक्रवित्तेशवरुणाग्नियमाः क्रमात्। फणीनभगणैक्यघ्नद्विभितग्रहणाऽधिपाः॥

इति ब्रह्मसिद्धान्तोक्तिश्रवणादेकभगणे द्वौ पर्वेशावित्येव युक्तम् । वराहोक्तिर्यथाकथंचिन्तयेति विस्तरभयाद्विरराम ॥ १८ ॥

**विश्वनाथः**—अथ पर्वेशानयनमाह । व्यगुमध्येति । मासगणात् मध्यमव्यगुसाधनं राशयस्ते द्वादशभक्ताः फलं पर्ययगणो भवति । व्यगुमध्यपर्ययगणः १० । द्विगुणः २० । वणिगादिगे तुलादिषट्के व्यगुगृहे सति एकयुक्तः कार्यः । चक्र-८ युतः २९ । सप्ततष्टः । शेषं विधितो ब्रह्मणः सकाशात् गतपर्वपो भवति । अत्र पर्वस्वामी ब्रह्मा ।

पर्वेशाः सप्त वराहेणोक्ताः ।
षण्मासोत्तरवृद्ध्या पर्वेशाः सप्तदेवताः क्रमशः ।

ब्रह्मशशीन्द्रकुबेरा वरुणाग्नियमाश्च विज्ञेयाः ॥

एतस्य प्रयोजनं शुभाशुभफलकथनाय ॥ १८ ॥

**सुधाकरः**—अत्रैकचक्रान्तर्गतमासगणजव्यग्वर्कवशेन यो मासस्तद्वशेन स्वल्पान्तरात् षण्मासोत्तरवृद्ध्या पर्वेशाः कल्पितास्तेनैकस्मिन् पर्यये द्वौ पर्वेशौ तदाऽभीष्टपर्ययेषु कियन्त इति द्विगुणव्यगुपर्ययसमा जाताः पर्वेशाः । तुलादौ व्यगौ षण्मासानां गतत्वादेकोऽन्यश्च पर्वेशो गतस्तेन कुयुतः कृतः । एकस्मिन् चक्रे चैकादश वर्षात्मके द्वाविंशतिः पर्वेशास्तत्र सप्ततष्टे चैकमवशिष्यते।ततोऽनुपातो यद्येकस्मिन् चक्रे एकः पर्वेशस्तदाऽभीष्टचक्रेषु कियन्तो लब्धाश्चक्रमिताः पर्वेशाः । ततस्सप्ततष्टे शिष्टाः पर्वेशा भवन्ति । ग्रन्थारम्भः कल्पतः १९-७२९४८६२१ सौरवर्षगणे द्विगुणे सप्ततष्टे च शून्यमवशिष्यते तेन तदा ब्रह्मा पर्वेश आसीत् तेन विधितो गणना कृता । कल्पादितः षण्मासोत्तरवृद्ध्या सप्त पर्वेशा भवन्ति । तथा च वराहमिहिरवचनम् ।

षण्मासोत्तरवृद्ध्या पर्वेशाः सप्त देवताः क्रमशः ।
ब्रह्मशशीन्द्रकुबेरा वरुणाग्नियमाश्च विज्ञेयाः ॥
( बृह सं० अ० ५ श्लो० १९ ) ॥ १८ ॥

**तिथिरविहतिरंशास्तद्युतोऽर्को विधुः स्या-**
**दथ जिन-२४ गुणहारो द्व्यङ्गयुक् तद्गतिः स्यात् ।**
**खचरशरकलाः स्यात् सूर्यभुक्तिस्ततः स्यु-**
**र्भयुतिजगतगम्या नाडिकास्तिथ्यपायात् ॥१९॥**

**मल्लारिः**—अथ सूर्याच्चन्द्रं साधयति । द्वादशगुणा तिथिसंख्या भागाः स्युः । तैर्भागैर्युक्तोऽर्को विधुश्चन्द्रः स्यात् । अथ जिनैश्चतुर्विंशत्या गुण्यते स तथा । एवम्भूतो हारो द्व्यंगैर्द्विषष्ट्या युक् तस्य चन्द्रस्य गतिः स्यात् । खचरशरा एकोनषष्टिकलाः सूर्यस्य भुक्तिर्गतिः स्यात् । सूर्यचन्द्राभ्यां भयुतिजा नक्षत्रयोगजा गतगम्या घटिकास्तिथेरपायादन्तात् स्युर्न सूर्योदयात् । यतो रविचन्द्रौ तिथ्यन्तकालीनौ ताः स्थितिघटीसंस्कृताः सूर्योदयान्नक्षत्रयोगघटिकाः स्युरित्यर्थः ।

अत्रोपपत्तिः । सूर्यचन्द्रान्तरे द्वादशभागतुल्ये एका तिथिर्भवति । अतो द्वादशगुणातिथिः सूर्यचन्द्रान्तरभागास्ते रवौ यावत् क्षिप्यन्ते तावच्चन्द्रो भवति । अत्र गत्यन्तरं चतुर्विंशतिभक्तं हारः कुतोऽस्ति । अतो जिनगुणो हारो गत्यन्तरम् । तत्र सूर्यगतिर्योज्या चन्द्रगतिः स्यादित्यत्र द्व्यंगामिता सूर्यगतिः प्रकल्पिता । अतो द्व्यंगयुगित्युपपन्नम् ॥ १९ ॥

दैवज्ञवर्यस्य दिवाकरस्य सुतेन मल्लारिसमाह्वयेन ।
वृत्तौ कृतायां ग्रहलाघवस्य मासौघतः पर्वयुगं समाप्तम् ।

इति श्रीगणेशदैवज्ञकृतग्रहलाघवस्य टीकायां मल्लारिदैवज्ञविरचितायां मासगणादेव ग्रहणद्वयसाधनाधिकारः समाप्तः ॥ ७ ॥

**विश्वनाथः**—अथ चन्द्रसावनं तद्गतिसाधनमाह । तिथीति । तिथिः १५ । द्वादशगुणिता जाता अंशाः १८० । अनेन रविः ६ । २८ ।३४।५२युक्तो जातश्चन्द्रः ० ।२८।३४। ५२।एवमिष्टतिथयो द्वादशगुणा भागा भवन्ति तैर्भागैर्युक्तोऽर्कौ विधुः स्यात् । हारः २८।५०। चतुर्विंशत्या२४ गुणितः ६९२।० । द्विषष्टि-६२ युक्तो जाता चन्द्रगतिः ७५४ ।०।खचरशरकलाः ५९ सूर्यभुक्तिः। ततः सूर्यचन्द्राभ्यां भयुतिजा नक्षत्रयोगजा गतगम्या घटिकाः साध्याः । तास्तिथेरपायात् अन्त्यात् स्युः । तिथ्यन्ते विद्यमानौ नक्षत्रयोगौ तयोगतष्या घटिकास्तिथ्यन्तात् स्युरित्यर्थः । न सूर्योदयात् । यतो रविचन्द्रौ तिथ्यन्तकालिको । तास्तिथिघटीमध्ये हीनयुक्ताः सत्यः सूर्योदयान्नक्षत्रयोगघटिकाः स्युरित्यर्थः । तिथ्यन्तात् ३२ । ४४ कृत्तिकानक्षत्रस्य गतघटी ९ । ८ एष्यघटी ५४ । ३१। वरीयसो योगस्य गतघटी ४६ । २८ । एष्यघटी १२ । ३३ ।

अथ मासगणात् सूर्यपर्वसाधनम् । संवत् १६६९ शाके १५३४ वैशाखकृष्ण ३० बुधे घटी २६ । ८ । रोहिणीनक्षत्रे घटी ३४ । ५७ । धृतियोगे घटी ४२ । २९ । चक्रम् ८ । मासगणः ५१ । द्विगुणः १०२ । नगषड्भक्तः फलं राश्यादि १ । १५ । ४० । १७ । अनेन मासगणो रहितः १। १४। १९ । ४३ चक्रनिघ्नध्रुवकेण ० । १३ । २० रहितः १ ।०। ५९ । ४३ क्षेपकयुक्तो ० । ४ । २१ । ० जातो रविः पौर्णिमास्यन्त १ । ५ । २० । ४३ । पक्षचालनेन ० । १४ । ३३ युतो जातोऽमान्ते रविः १ । १९ । ५३ ।४३ ।

अथ विराह्वर्कसाधनम् । उक्तवज्जातः पौर्णिमास्यन्ते ११ । २१ । ६ । ४५ । पक्षचालनेन० । १५ । २० युतो जातोऽमान्ते व्यगुः ० । ६। २६ ।४५। अथ वृत्तानयनम् । उक्तवज्जातं पूर्णिमान्त वृत्तम् ८ ।२०। १०।४३। पक्षचालनेन ६। १२ । ५४ युक्तं जातममान्ते वृत्तम् ३ । ३ ।४ । ४३ ।

अथ वाराद्यानयनम् । उक्तवज्जातं वाराद्यम् ३।९।७। पक्षचालनेन ०।४५। ५५। युक्तं जातममान्ते वाराद्यम् ३।५५।२। वृत्तफलं धनम् ७४।२२।२१। रवेः कन्द्रम् ० । २८ । ६ । १७ । रविफलं धनम् १४ । ४१ । ४० । फलद्वययोगो धनम् ८९ । ४ । १ वृत्तैष्यखण्डम् २ । हारः ३० । ४० । सूर्याच्चरमृणम् १०८। सायंलक्षणकमित्युक्तत्वाज्जातं धनम् । फलसंस्कृतिः ८९ । ४ । १ दशहता ८९० । ४० । १० । हारेण ३० । ४० भक्ता फलं नाड्यः २९ । २ ।

संस्कृतेर्धनत्वाद्धनम् । देशान्तरयोजनानि ६४ स्वांघ्र्यूनानि जातानि देशान्तर-पलानि ४८ रेखातः पूर्वत्वाद्धनानि । फलत्रयसंस्कृतिर्धननाड्यः ३१ । ३८ । तिथिः ३ । ५५ । २ फलत्रयसंस्कृता जाताः स्पष्टा बुधे स्यः २६ पलानि ४० । फलत्रयसंस्कारतुल्यघटिकाः ३१ । ३८ । एतत्संस्कृतो रविः १ । २० । २५ । २१ । व्यगुः ० । ६ । ५८ । २३ । तरणिफलम् १४ । ४१ । ४० । वेदघ्नम् ५८ । ४६ । ४० । स्वासिद्ध २४भागेन २ । २६ । ५६ युक्तं जाताः कलाः ६१ । १३ । ३६ । तरणिफलस्य धनत्वाद्धनकलाभिः संस्कृतो रविः स्पष्टः १ । २१ । २६ । ३४ । स्पष्टो व्यगुः ० । ७ । ५९ । ३६ । चन्द्रविम्बम् १० । ४६ ।

अथ सूर्यविम्बानयनम् । सूर्यस्य फलसाधने भोग्यखण्डम् १४ । खाब्ध्या-४० प्तम् ० । २१ । व्यारिलब्धभत्रा १० । ५० मकरादिकेन्द्रत्वाद्रहिता जातमंगु-लाद्यर्कविम्बम् १० । २९ ।

अथ सूर्यग्रासानयनमाह । अमान्तोऽयम् २६ । ४० । दिनार्धम् १६ । ४८ । नतं पश्चिमम् ९ । ५२ । अस्य चतुर्थांशो राश्यादिः २ । १४ । ० । पश्चिमन-तस्य विद्यमानत्वादंघ्रिणा युक्तो रविः ४ । ५ । २६ । ३४ । अस्य क्रान्तिरु-त्तरा १३ । ५२ । २२ । अक्षांशा दक्षिणाः २५ । २६ । ४२ । क्रांत्यक्षजसं-स्कारे जाता नतांशा दक्षिणाः ११ । ३४ । २० । अस्य षडंशो दक्षिणाः १ । ५५ । ४३ । व्यगुभुजभागा उत्तराः ७ । ५९ । ३६ । षडंशेन संस्कारिताः स्पष्टाः ६ । ३ । ५३ । सप्त-७ शुद्धाः ० । ५६ । ७ । स्वीयाधन ० । २८ । ३ । सहिता जातोऽगुलाद्यो ग्रासः १ । २४ । व्यगुमध्यपर्ययगणः ६ । पर्वस्वामी यमः । तिथि-३० द्वादशगुणा जाता अंशाः ३६० । एतत्सहितो रविर्जातश्चन्द्रः १ । २१ । २६ । ३४ । चन्द्रगतिः ७९८ । सूर्यगतिः ५९ । तिथ्यन्ताद्रोहिणीनक्षत्रस्य गतघ-टी ५१ । ३७ । एष्यघटी ८ । ३१ धृत्तियोगस्य गतघटी ४० । १० । एष्यघ-टी १५ । ५२ ॥ १९ ॥

इति मासगणात् सूर्यग्रहणं समाप्तम् ।

सुधाकरः—अत्रोपपत्तिः । हारसाधनवैपरीत्येन सुगमा । स्थूलव्यवहारार्थं च रविभुक्तिः-खचरशरकलामिता गृहीता । शेषोपपत्तिः स्फुटा ॥ १९ ॥

इति सुधाकरनिर्मितवासना सकलया कलया कलयासना ।
ग्रहणमासगणे परया गता भवलयावलया वलयाऽऽगता ॥

इति मासगणाधिकारः ॥

**अथ वाऽयं तिथिपत्त्रतोऽवगम्यः पर्वान्तश्च रविस्तमास्तिथेर्वा ।**
**भस्यैतैष्यघटीयुतिर्द्युमानं तेभ्योऽथ ग्रहणद्वयं प्रवच्मि ॥ १ ॥**

**मल्लारिः**--अथ केवलं पञ्चांगादेव लघुकर्मणा ग्रहणद्वयं साधयति । अथ वाऽयं पर्वान्तो दर्शान्तः पौर्णमास्यन्तश्च । रविः सूर्यः । तमो राहुस्तिथेर्वा भस्ये-तैष्यघटीयुतिः । गतैष्यघटीयोगश्च ज्ञेयः । तिथिपत्रस्थद्युमानमपि ज्ञेयम् । तेभ्यो ज्ञातेभ्यो ग्रहणद्वयं प्रवच्मीत्यर्थः ॥ १ ॥

**विश्वनाथः**--अथ पञ्चांगात् ग्रहणद्वयसाधनमाह अथेति । अथ वा प्रकारान्तरेणायं पर्वान्तो घटिकादिकस्तिथिपत्रतः पञ्चांगादवगम्यो ज्ञातव्यः । तत्र पर्वान्ते रविस्तमो राहुश्च ज्ञातव्यः । तिथिपत्रस्थौ रविराहू गतगम्यदिनाहते-त्यादिना पर्वान्ते तात्कालिकौ कार्यौ । तत्र पूर्णिमामान्तयोर्यातैष्यघटीनां युतिर्वा भस्य नक्षत्रस्य यातैष्यघटीयोगो ज्ञातव्यः । द्युमानं दिनमानमवगम्यम् । इदं सर्वं तिथिपत्राज्ज्ञात्वा तेभ्यो ग्रहणद्वयं प्रवच्मीत्यर्थः । संवत् १६६९ शके १५३४ वैशाखशुक्ल-१५ सोमे गतघटी २ । २३ । एष्यघटी ५४ । २० । गतैष्यघटी-योगः ५६ । ४३ । अनुराधागतघटी २० । ४ । एष्यघटी ३८ । ३२ । गतै-ष्यघटीयोगः ५८ । ३६ । दिनमानम् ३३ । ६ । पर्वान्तकालिको रविः । १ । ६ । ३४ । ३७ । राहुः । १ । १४ । १८ । ११ । विराह्वर्कः ११ । २२ । १६ । २६ ॥ १ ॥

अथ तिथिपत्त्रतो ग्रहणद्वयसाधनाधिकारः ।

**सुधाकरः**—स्पष्टार्थम् ॥ १ ॥

**ताराषड्व्यगतिथियातगम्यनाडी-**
**योगाप्ता व्यगुरविदोर्लवोनितास्ते ।**
**संयुक्ता निजदलभूपभागकाभ्यां**
**छन्नं वाऽङ्गुलवदनं भवेत् सुधांशोः ॥ २ ॥**

**मल्लारिः**-अथ छन्नसाधनमाह । सप्तविंशत्यधिकषट्शतमिता विगता अगाः सप्त यस्मात् स तथा । एवम्भूतो यस्तिथेर्यातगम्यनाडीयोगस्तेन आप्ता भक्ता लब्धं त्रिष्ठं ग्राह्यम् । ततस्ते लब्धांशा व्यगुरवेः विराह्वर्कस्य ये दोर्लवा भुज-भागास्तैरूनितास्ते निजेन स्वीयेन दलेन अर्धेन तथा स्वस्य भूपभागेन षोडशां-शेन च लब्धद्वयेन युक्ताः सन्तोऽगुलपूर्वकं विधोश्चन्द्रस्य छन्नं ग्रासो भवे-दित्यर्थः ।

अत्रोपपत्तिः। चन्द्रस्य मध्यममानैक्यखण्डमिदम् १८।५६। तिथिघटिका-५९।४ श्च मध्यमा मध्यमरविचन्द्रगत्यन्तरोत्पन्नाः । तत्र गतेराधिक्ये मानैक्यखण्डाधिक्यम् । तत्र तिथिघटीनामल्पत्वम् । तत्रानुपातः । यदि मध्यमतिथिघटीभिर्मध्यमं मानैक्यखण्डं तदेष्टस्पष्टतिथिघटीभिः किम् । अत्र व्यस्तत्रैराशिके स्पष्टतिथिघटिका हरः । मध्यमतिथिघटीमध्यममानैक्यखण्डघातो भाज्यः १११९ । ८। अत्रास्मिन् भाज्ये भागकरणार्थं सप्तगुणे भवभक्ते जाता भागाः ७१२ । ११ । एते तिथिगतैष्यघटीयोगेन भाज्या इत्यत्र तेषां सावयवत्वार्थं सप्तगुणनम् । यद्यासु घटीषु । ५९ । ४ । अयं भाज्यः ७१२ । ११ । तदा सप्तोनितास्वासु घटीषु ५२ । ४ । को भाज्य इति जाताः ६२७ । अत एते व्यगुतिथिगतैष्यघटीयोगेनभाज्या व्यगुभुजांशोनाः । ततः शरार्थं स्वदलयुक्ता भागाः स्थूलः शर इत्यतो भूपभागान्विताः कृताः । तच्छन्नं भवतीत्युपपन्नम् ॥ २ ॥

**विश्वनाथः**---अथ छन्नानयनमाह तारा इति । तारापट् ६२७ सप्तरहितेन तिथेर्गतैष्यघटीयोगेन ४९ । ४३ भक्ताः फलं भागाद्यम् १२ । ३६ ।४१ विराह्वर्कस्य भुजांशैः ७ । ४३ । ३४ ऊनाः ४ । ५३ । ७ । एते निजार्धेन २ । २६ । ३३ निजषोडशांशेन ० । १८ । १९ युक्ता जातोऽगुलाद्यो ग्रासः ७। ३७ । ५९ । यदा भुजांशा ऊनिता न स्युस्तदा ग्रहणस्य सम्भवो न स्यात् ॥ २ ॥

**सुधाकरः**—कल्प्यते सर्वतिथिभोगघटिकाः = तिभो । ततोऽनुपातः । तिथिभोगघटीभिर्द्वादशांशसमा रविचन्द्रान्तरभागास्तदा षष्टिघटिकाभिः किम्। जाता रविचन्द्रयोर्गत्यन्तरांशास्ते षष्टिगुणिता गत्यन्तरकलास्ताश्च जिनभक्ता जातो हरः$=\frac{\text{१२}\times\text{६०}\times\text{६०}}{\text{तिभो}\times\text{२४}}=\frac{\text{३०}\times\text{६०}}{\text{तिभो}}$ ।

ततः 'सत्र्यंशगुणोनितो हरोऽयं' इत्यादिना मानैक्यखण्डसमशरजनितव्यगुभुजभागाः

$$=\frac{\text{४}}{\text{९}}\left(\frac{\text{३०}\times\text{६०}-\frac{\text{१०}}{\text{३}}\text{ तिभो}}{\text{तिभो}}\right)$$

$$=\frac{\frac{\text{३०}\times\text{६०}\times\text{४}}{\text{९}}-\frac{\text{१०}\times\text{४}}{\text{९}\times\text{३}}\text{ तिभो}}{\text{तिभो}}=\frac{\text{८००}-\frac{\text{४०}}{\text{२७}}\text{ तिभो}}{\text{तिभो}}$$

$$=\frac{\left(\text{तिभो}-\text{७}\right)\left(\text{८००}-\frac{\text{४०}}{\text{२७}}\text{तिभो}\right)}{\text{तिभो}\left(\text{तिभो}-\text{७}\right)}=\frac{\left(\text{१}-\frac{\text{७}}{\text{तिभो}}\right)\left(\text{८००}-\frac{\text{४०}}{\text{२७}}\text{ तिभो}\right)}{\text{तिभो}-\text{७}}$$

$$=\frac{\text{८००}-\frac{\text{४०}}{\text{२७}}\text{ तिभो}-\frac{\text{७}\times\text{८००}}{\text{तिभो}}+\frac{\text{७}\times\text{४०}}{\text{२७}}}{\text{निभो}-\text{७}}$$

$$= \frac{८०० - \frac{४० \times ६०}{२७} - \frac{७ \times ८००}{६०} + \frac{७ \times ४०}{२७}}{तिभो - ७}$$

$$= \frac{८०० - \frac{४० \times २०}{९} - \frac{७ \times ४० \times ३}{९} + \frac{७ \times ४०}{२७}}{तिभो - ७}$$

$$= \frac{८०० - \frac{८००}{९} - \frac{८४०}{९} + \frac{२८०}{२७}}{तिभो - ७} = \frac{८०० - \frac{१६४०}{९} + \frac{२८०}{२७}}{तिभो - ७}$$

$$= \frac{८०० + १०\frac{१०}{२७} - १८२\frac{२}{९}}{तिभो - ७} = \frac{८०० - १७२ + \frac{१०}{२७} - \frac{२}{९}}{तिभो - ७}$$

$$= \frac{८०० - १७२ + \frac{४}{२७}}{तिभो - ७} = \frac{८०० - १७३ + १ + \frac{४}{२७}}{तिभो - ७}$$

$$= - \frac{६२७ + \frac{३१}{२७}}{तिभो - ७} = \frac{६२७}{तिभो - ७} - \frac{३१}{२७ ( तिभो - ७ )}$$

(तिभो–७ इति हरं विहाय सर्वत्र 'तिभो' स्थाने तदीयमध्यममानस्य षष्टिसमस्योत्थापनात् ।)

अथात्र यदि परमाल्पं तिथिभोगमानम् = ५४ तदा द्वितीयखण्डमानम् $= \frac{३१^{\circ}}{२७ ( तिभो - ७)}$

$= \frac{३१^{\circ}}{२७ \times ४७} = \frac{३१ \times ६०'}{२७ \times ४७} = \frac{३१ \times २०}{९ \times ४७} = \frac{६२०}{४२३} = १'$ स्वल्पान्तरात् । अतो

द्वितीयखण्डत्यागेन मानैक्यखण्डसमशरभक्ता व्यगुभुजभागाः $= \frac{६२७}{तिभो - ७}$ अत उपपन्नं

मानैक्यखण्डसमशरजव्यगुभुज्ञानयनम् । अथ चन्द्रग्रहणद्वितीयश्लोकोपपत्तौ यदि $\frac{३००}{१९१}$

= वाभि । तदा स्वल्पान्तरतस्तदासन्नमानतः

$$\left.\begin{array}{ll} वाभि = \frac{३}{२} & \therefore \; २ \; वाभि = ३ \\ वाभि = \frac{११}{७} = \frac{२२}{१४} & \therefore \; १४ \; वाभि = २२ \end{array}\right\} \text{द्वयोर्योगेन}$$

$$१६ \; वाभि = २५ \;\; \therefore \; वाभि = \frac{२५}{१६} = १ + \frac{९}{१६}$$

$$= १ + \frac{८}{१६} + \frac{१}{१६} = १ + \frac{१}{२} + \frac{१}{१६}$$

अतो जातानि पूर्ववच्छन्नांगुलानि $= \left( १ + \frac{१}{२} + \frac{१}{१६} \right)\left( \frac{६२७}{तिभो - ७} - \text{व्यशु} \right)$

अत उपपन्नं 'संयुक्ता निजदलभूपभागकाभ्याम्' इत्यादि ॥ २ ॥

**अङ्गयुक्तिथिघटीहृतबाणा-**
**ङ्कर्तवोऽगुलमुखं विधुबिम्बम् ।**
**दिग्वियुक्तिथिघटीहृतदृग्दृक्-**
**त्रीन्दवोऽगुलमुखा क्षितिभा स्यात् ॥ ३ ॥**

**मल्लारिः**----अथ चन्द्रबिम्बभूभाबिम्बे कथयति। षड्युक्ततिथिगतैष्यघटी-योगेन भक्ताः पञ्चोनशतशतमिताः सन्तोऽगुलमुखं बिम्बोऽश्चन्द्रस्य बिम्बं स्यात् । दिग्भिर्वियुजो हीना यास्तिथिघटिकास्ताभिर्हृता दृग्दृग्त्रीन्दवो द्वाविंशत्यधिक-त्रयोदशशतमिता अंगुलमुखा क्षितिभा भूछाया स्यादिति व्याख्या ।

अत्रोपपत्तिः । अत्र मध्यतिथ्याऽनया ५९ । ४ । मध्यमे चन्द्रबिम्बेऽस्मिन् १० । ४१ गुणिते भाज्यः ६३१ । २ । अयं सावयवोऽतः सञ्चारः । यद्यासु घटीषु ५९ । ४ । अयं ६३१ । २ तदा षड्युक्तघटीषु क इति जातो भाज्यः ६९५ । अयं तिथिघटीभिः षड्युक्ताभिर्भाज्यश्चन्द्रबिम्बं भवतीत्युपपन्नम् । अथ मध्यमं भूभाबिम्बमिदम् २६ । ५५ । अस्मिन् मध्यतिथिभिर्गुणिते जातो भाज्यः सावयवः १५९२ । ४९ । अत्र सञ्चारः । यद्याभिर्घटीभिः ५९ । ४ अयं भाज्यः १५९२ । ४९ । तदा दशहीनघटीनां ४९ । ४ को भाज्य इति जातः १३२२ । अतो दशहीनतिथिघटीभक्तो भाज्यो भूभा स्यादित्युपपन्नम् ॥ ३ ॥

**विश्वनाथः**---अथ चन्द्रबिम्बभूभासाधनमाह अंगेति । तिथिघटिकाः ५६ । ४३ षड्युक्ताः ६२ । ४३ । अनेन बाणाङ्कर्तवो ६९५ भक्ताः फलमंगुलाद्यं चन्द्रबिम्बम् ११ । ४ । तिथिनाड्यः ५६ । ४३ । दशहीनाः ४६ । ४३ । अनेन दृग्दृक्त्रीन्दवो १३२२ । भक्ताः फलमंगुलाद्या भूभा २८ । १७ ॥ ३ ॥

सुधाकरः-२ श्लोकोपपत्त्या हारः$= \frac{३० \times ६०}{तिभो}$ । ततो 'बिम्बंशद्वियुतहरः कृशानुभक्तः'

इत्याद्याचार्योक्तेन प्रकारेण चन्द्रबिम्बम् $= \frac{हा + \left( २ - \frac{१}{३} \right)}{३} = \frac{हा + \frac{५}{३}}{३}$

$$= \frac{३० \times ६० + \frac{५}{३} \text{ तिभो}}{३ \text{ तिभो}} = \frac{६०० + \frac{५}{९} \text{ तिभो}}{\text{तिभो}} = \frac{(\text{तिभो} + ६)(६०० + \frac{५}{९}\text{तिभो})}{\text{तिभो}(\text{तिभो} + ६)}$$

$$= \frac{\left(१ + \frac{६}{\text{तिभो}}\right)\left(६०० + \frac{५}{९} \text{ तिभो}\right)}{\text{तिभो} + ६}$$

उपारि सर्वत्र 'तिभो' स्थाने मध्यममानेन ६० उत्थापने कृते च विं

$$= \frac{\left(१ + \frac{६}{६०}\right)\left(६०० + \frac{५}{९} \times ६०\right)}{\text{तिभो} + ६} = \frac{\left(१ + \frac{१}{१०}\right)\left(६०० + \frac{१००}{३}\right)}{\text{तिभो} + ६}$$

$$= \frac{\left(६०० + \frac{१००}{३} + ६० + \frac{१०}{३}\right)}{\text{तिभो} + ६} = \frac{६६० + \frac{११०}{३}}{\text{तिभो} + ६} = \frac{६६० + ३६\frac{२}{३}}{\text{तिभो} + ६}$$

$$= \frac{६९५ + १\frac{२}{३}}{\text{तिभो} + ६} = \frac{६९५}{\text{तिभो} + ६} + \frac{\frac{५}{३}}{\text{तिभो} + ६}$$

। अत्र यदि परमाल्पास्तिथिभोग्यघटयः ५४ स्युस्तदा द्वितीयखण्डमानम् $= \frac{\frac{५}{३}}{\text{तिभो} + ६} = \frac{५}{६० \times ३}$ अ $= \frac{५}{३} = २$ व्यं स्वल्पान्तरात्। अतस्तत् त्यक्तमाचार्येण ततो जातं चन्द्रबिम्बम् $= \frac{६९५}{\text{तिभो} + ६}$ एतेन चन्द्रबिम्बानयनमुपपन्नम्।

अथानन्तरागतचन्द्रबिम्बम् $= \frac{\text{हा} + \frac{५}{३}}{?} = \frac{३० \times ६० + \frac{५}{३} \text{ तिभो}}{३ \text{ तिभो}}$ । ततः 'तदपि हिमगोर्बिम्बं त्रिघ्नं निजेशलवान्वितम्' इत्याद्याचार्योक्तविधिना भूभाबिम्बम् $\frac{१२}{११} \times \frac{३० \times ६० + \frac{५}{३}\text{तिभो}}{\text{तिभो}} - ८$

$$= \frac{\frac{१२ \times ३० \times ६०}{११} + \frac{२०}{११}\text{तिभो} - ८ \text{ तिभो}}{\text{तिभो}} = \frac{\frac{१२ \times ३० \times ६०}{११} - \frac{६८}{११}\text{तिभो}}{\text{तिभो}}$$

$$= \frac{(\text{तिभो} - १०)\left(\frac{१२ \times ३० \times ६०}{११} - \frac{६८}{११} \text{ तिभो}\right)}{\text{तिभो}(\text{तिभो} - १०)}$$

$$= \frac{\left(१ - \frac{१०}{\text{तिभो}}\right)\left(\frac{१२ \times ३० \times ६०}{११} - \frac{६८}{११} \text{ तिभो}\right)}{\text{तिभो} - १०}$$

अत्राप्युपरि सर्वत्र 'तिभो' स्थाने ६० एतदुत्थापनेन

$$\text{भूभाबिम्बम्} = \frac{\left(१-\frac{१०}{६०}\right)\left(\frac{१२\times३०\times६०}{११}-\frac{६८\times६०}{११}\right)}{\text{तिभो} - १०}$$

$$= \frac{\left(१-\frac{१}{६}\right)\left(\frac{१२\times३०\times६०}{११}-\frac{६८\times६०}{११}\right)}{\text{तिभो} - १०}$$

$$= \frac{\frac{१२\times३०\times६०}{११}-\frac{६८\times६०}{११}-\frac{१२\times३०\times६०}{६\times११}+\frac{६८\times६०}{११\times६}}{\text{तिभो} - १०}$$

$$= \frac{\frac{१२\times३०\times६०}{११}-\frac{६८\times६०}{११}-\frac{१२\times५\times६०}{११}+\frac{६८०}{११}}{\text{तिभो} - १०}$$

$$= \frac{\frac{२१६००}{११}+\frac{६८०}{११}-\left(\frac{४०८०}{११}+\frac{३६००}{११}\right)}{\text{तिभो} - १०}$$

$$= \frac{\frac{२२२८०}{११}-\frac{७६८०}{११}}{\text{तिभो} - १०} = \frac{\frac{१४६००}{११}}{\text{तिभो}-१०} = \frac{१३२७\frac{३}{११}}{\text{तिभो} - १०}$$

$$= \frac{१३२२}{\text{तिभो}-१०} + \frac{५\frac{३}{११}}{\text{तिभो}-१०} = \frac{१३२२}{\text{तिभो}-१०} + \frac{५८}{११(\text{तिभो}-१०)}$$

अत्र परमाल्पतिथिभोगमाने ५४ प्रमिते द्वितीयखण्डभवं फलम् $= \frac{५८}{११\times४४} = \frac{२९}{११\times२२}$

$= \frac{२९}{११\times११\times२}$ अं $= \frac{२९\times६०}{११\times११\times२}$ व्यं $= \frac{२९\times३०}{१२१} = ७$ व्यं स्वल्पा-

न्तरात् त्यक्तमाचार्येण ततो भूभाबिम्बम् $= \frac{१३२२}{\text{तिभो}-१०}$ एतेनोपपन्नं भूभानयनमिति ॥ ३ ॥

**विदशोडुघटीहताः खभूषड्**
**व्यगुभास्वङ्गुजभागवर्जितास्ते ।**
**शितिकण्ठहतास्तुरङ्गभक्ताः**
**स्थगितं चाङ्गुलपूर्वकं विधोः स्यात् ॥ ४ ॥**

**मल्लारिः**--अथ नक्षत्रघटीभ्यो ग्रासानयनमाह । विगता दश याभ्य एवं-विधा उडुघट्यो नक्षत्रगतैष्यघटीयोगः । ताभिर्हताः खभूषड् दशाधिकशतशत-

मितास्ते व्यगोर्विराहोर्भास्ततः सूर्यस्य ये भुजभागास्तैरूनिताः कार्याः । ततः शितिकण्ठरेकादशभिर्हता गुणितास्तुरंगैः सप्तभिर्भक्ताः । अंगुलपूर्वकं विधोः स्थगितं छन्नं प्रकारान्तरेण स्यादित्यर्थः ।

अत्रोपपत्तिः । मध्यमनक्षत्रघटीभिराभिः ६० । ५२ भाज्यादि कृत्वा तिथिवदङ्का उत्पादनीयाः । सुगममिदम् ॥ ४ ॥

**विश्वनाथः**--अथ नक्षत्रघटिकाभ्यश्छन्नानयनमाह । विदशेति । नक्षत्रगतैष्यघटीयोगः ५८ । ३६ । दशहीनः ४८ । ३६ । अनेन खभूखड्- ६१० भक्ताः फलमंशाद्यम् १२ । ३३ । ५ । एते व्यग्वर्कस्य भुजांशै-७ ।४३ । ३४ र्वजिताः ४ । ४९ । ३१ । एकादशभिर्गुणिताः ५३ । ४ । ४१ । सप्तभिर्भक्ताः फलमंगुलाद्यो ग्रासः ७ । ३४ ॥

अथ भूभायाः संस्कारमाह ' रुद्रभूपनखभूपरुद्रखैर्व्यंगुलैर्विरहिता युता क्रमात् । षड्गृहे सति रवौ घटात् क्रियात् नाडिकोद्भवकुभा स्फुटा भवेत्' इति । रुद्रभूप इत्यादिर्व्यंगुलैः ११ । १६ । २० । १६ । ११ । ० भूभा क्रमात् तुलादिषट्के विरहिता मेषादिषट्के युता कार्या सा नाडिकोद्भवकुभा स्फुटा भवेत् । सूर्यस्य वृषराशौ मेषादिषड्राशिमध्ये स्थितत्वात् षोडशव्यंगुलयुता स्पष्टा भूभा २८ । ३३ ॥ ४ ॥

सुधाकरः—सर्वर्क्षभोगमानं यदि नभो कल्प्यते तदा नक्षत्रभोगघटीसाधनवैपरीत्येन चन्द्रगतिः $= \frac{८०० \times ६०}{\text{नभो}}$ । ततो 'भुक्तिर्युगाचलभाजिता' इत्यनेन चन्द्रविम्बम् $= \frac{८०० \times ६०}{७४ \text{ नभो}}$ ।

अथ 'तदपि हिमगोर्विम्बं त्रिघ्नम्' इत्यादिना भूभाविम्बम् $= \frac{३ \times ८०० \times ६० \times १२}{७४ \times ११ \times \text{नभो}} - ८$ ।

$$\text{मानैक्यार्धम्} = \frac{४०० \times ६०}{७४ \times \text{नभो}} + \frac{३ \times ४०० \times ६० \times १२}{७४ \times ११ \times \text{नभो}} - ४$$

$$= \frac{११ \times ४०० \times ६० + ३ \times ४०० \times ६० \times १२}{७४ \times ११ \times \text{नभो}} - ४$$

$$= \frac{४७ \times ४०० \times ६०}{७४ \times ११ \times \text{नभो}} - ४ = \frac{४७ \times ४०० \times ६० - ७४ \times ११ \times \text{नभो} \times ४}{७४ \times ११ \times \text{नभो}} ।$$

यदि परमशरैर्नवत्यंगुलमितैर्व्यगुभुजज्या त्रिज्या १२० लभ्यते तदा मानैक्यखण्डमितेन शरेण का लब्धा मानैक्यखण्डसमशरजव्यगुभुजज्या सा दशभिर्गुण्या प्रकृत्या २१ हृता लब्धास्तदीया भुजभागाः

$$= \frac{१२०}{९०} \times \frac{१०}{२१} \times \frac{४७ \times ४०० \times ६० - ७४ \times ११ \times ४ \text{ नभो}}{७४ \times ११ \times \text{नभो}}$$

$$=\frac{४०}{३}\times\frac{१}{२१}\times\frac{४७\times४००\times६० - ७४\times११\times४\,\text{नभो}}{७४\times११\times\text{नभो}}$$

$$=\frac{\dfrac{४०\times४७\times४००\times६०}{३\times२१\times७४\times११}-\dfrac{७४\times११\times४\times४०\,\text{नभो}}{३\times२१\times७४\times११}}{\text{नभो}}$$

$$=\frac{\dfrac{४०\times४७\times४००\times२०}{२१\times७४\times११}-\dfrac{४\times४०}{३\times२१}\,\text{नभो}}{\text{नभो}}$$

$$=\frac{(\text{नभो}-१०)\left(\dfrac{४०\times४७\times४००\times१०}{२१\times३७\times११}-\dfrac{४\times४०}{३\times२१}\,\text{नभो}\right)}{\text{नभो}\,(\text{नभो}-१०)}$$

$$=\frac{\left(१-\dfrac{१०}{\text{नभो}}\right)\left(\dfrac{४०\times४७\times४००\times१०}{२१\times३७\times११}-\dfrac{४\times४०}{३\times२१}\,\text{नभो}\right)}{\text{नभो}-१०}$$

अत्राप्युपरि लवस्थाने सर्वत्र 'नभो' स्थाने मध्यममानेन ६० उत्थापने कृते जाता मानैक्यखण्डसमशरजनितव्यगुभुजभागाः

$$=\frac{\left(१-\dfrac{१०}{६०}\right)\left(\dfrac{४०\times४७\times४००\times१०}{२१\times३७\times११}-\dfrac{४\times४०\times६०}{३\times२१}\right)}{\text{नभो}-१०}$$

$$=\frac{\left(१-\dfrac{१}{६}\right)\left(\dfrac{४०\times४७\times४००\times१०}{२१\times३७\times११}-\dfrac{४\times४०\times६०}{३\times२१}\right)}{\text{नभो}-१०}$$

$$=\frac{\dfrac{५\times४०\times४७\times४००\times१०}{६\times२१\times३७\times११}-\dfrac{४\times४०\times६०\times५}{६\times३\times२१}}{\text{नभो}-१०}$$

$$=\frac{\dfrac{५\times२०\times४७\times४००\times१०}{३\times२१\times३७\times११}-\dfrac{४\times४०\times१०\times५}{३\times२१}}{\text{नभो}-१०}$$

$$=\frac{\dfrac{१८८०००००}{२५६४१}-\dfrac{८०००}{६३}}{\text{नभो}-१०}=\frac{७३३\dfrac{५१४७}{२५६४१}-१२६\dfrac{६२}{६३}}{\text{नभो}-१०}$$

$$=\frac{६०७-\left(\dfrac{६२}{६३}-\dfrac{५१४७}{२५६४१}\right)}{\text{नभो}-१०}=\frac{६०७-\left(\dfrac{२५२३४-५१४७}{२५६४१}\right)}{\text{नभो}-१०}$$

$$= \frac{६१० - \left( ३ \frac{२००८७}{२५६४१} \right)}{नभो - १०} = \frac{६१०}{नभो - १०} - \frac{४}{नभो - १०}$$ स्वल्पान्तरात् ।

अत्र यदि परमाल्पं नक्षत्रभोगमानं ५४ भवेत् तदा द्वितीयखण्डभवं परमं फलम् $= \frac{४}{४४}$ $= \frac{१^{\circ}}{११} = \frac{६०'}{११} = ५'$ स्वल्पान्तरादिदं त्यक्तम् ततोजाता मानैक्यखण्डसमशरजव्यगुभुजभागाः= $\frac{६१०}{नभो - १०}$ । तेभ्योऽभीष्टव्यगुभुजभागशोधनेन छन्नांगुलसमशरभवा व्यगुभुजभागा अवशिष्टास्ततः 'तेऽशा निघ्नाः शंकरैः शैलभक्ता' इत्यादिना छन्नांगुलानि स्फुटानीत्युपपन्नं सर्वम् ॥ ४ ॥

**भगतागतनाडिकैक्यभक्ता**
**नववेदर्त्तव इन्दुबिम्बमुक्तम् ।**
**विमनूडुघटीहृताः शराक्ष-**
**द्विभुवः स्यात् क्षितिभाऽङ्गुलादिका वा ॥ ५ ॥**

**मल्लारिः**--अथ नक्षत्रघटीभ्यश्चन्द्रबिम्बभूभाविम्बे कथयति । भस्य नक्षत्रस्य यो गतागतनाडीयोगो गतैष्यघटीयोगः । तेन भक्ता नववेदर्त्तव एकोनपञ्चाशदधिकषट्शतमिताः । यल्लब्धं तदंगुलाद्यं चन्द्रबिम्बमुक्तम् । तथैव विगता मनवश्चतुर्दश याभ्यस्तास्तथा एवंविधा या उडुनाड्यो नक्षत्रघटिकास्ताभिर्हृताः शराक्षद्विभुवः पञ्चपञ्चाशदधिकद्वादशशतमिताः । अंगुलमुखा क्षितिभा भूछाया स्यादिति ।

अत्रोपपत्तिस्तिथिवत् सुगमा ॥ ५ ॥

**विश्वनाथः**--अथ चन्द्रबिम्बभूभासाधनमाह भेति । नक्षत्रगतागतघटीयोगेन ५८ । ३६ नववेदर्त्तवो ६४९ भक्ताः फलमंगुलाद्यं चन्द्रबिम्बम् ११ । ४॥ विमनू-१४ डुघटयः ४४ ।३६। अनेन शराक्षद्विभुवो १२५५ भक्ताः फलमंगुलाद्या भूभा । २८ । ८ । षोडशव्यंगुलैर्युता जाता स्पष्टा २८ । २४ । अथ वा विनृपो-१६ डुघटयः ४२ ।३६ । अनेन खखार्का १२०० भक्ता जाता भूभा २८ । १० । षोडशव्यंगुलैर्युता जाता स्पष्टा भूभा २८ । २६ । इति चन्द्रग्रहणम् ।

अथ सूर्यग्रहणम् । शके १५३२ मार्गशीर्षकृष्णबुधे गतघटी-५१ । ५० एष्यघटी-१२ । ५९ योगः ६४।४९। मूलनक्षत्रस्य गतघटी १३।५४। एष्यघटी-५२ । २ । योगः ६५ । ५६ । दितमानम् २६ । ४ । तिथ्यन्ते रविः ८ । ५ ।

२६ । २० । राहुः २ । ११ । ४१ । १८ विराह्वर्कः ५ । २३ । ४५ । २ । अमान्ते नतं पूर्वम् ० । ३ अस्य चतुर्थांशो राश्यादिः । ० । ० । २२ । ३० । अनेन पूर्वनतस्य विद्यमानत्वाद्रहितो रविः ८ । ५ । ३ । ५० अस्य क्रान्ति-र्दक्षिणा २३ । ४३ । ४० । क्रान्त्यक्षजसंस्कारे जाता नतांशा दक्षिणाः ४९ । १० । २२ । अस्य षडंशः ८ । ११ । ४३ । दक्षिणः । व्यगुभुजभागा उत्तराः ६ । १४ । ५८ षडंशेन संस्कारिता जाताः स्पष्टा व्यगुभुजभागाः १ । ५६ । ४५ ॥ ५ ॥

सुधाकरः—४श्लोकोपपत्तिसाधने चन्द्रविम्बम् $= \frac{८०० \times ६०}{७४ \times \text{नभो}} = \frac{\frac{४८०००}{७४}}{\text{नभो}} = \frac{६४८\frac{२४}{३७}}{\text{नभो}}$

$= \frac{६४९ - (१ - \frac{२४}{३७})}{\text{नभो}} = \frac{६४९ - \frac{१३}{३७}}{\text{नभो}} = \frac{६४९}{\text{नभो}} - \frac{१३}{३७ \text{ नभो}}$ परमाल्पे न क्षत्र-भोगमाने५४ समाने द्वितीयखण्डभवं परमं फलम् $= \frac{१३}{३७ \times ५४}$ अं $= \frac{७८०}{३७ \times ५४}$ व्यं

$= \frac{१३०}{३७ \times ९} = \frac{१३०}{३३३} = ०$ स्वल्पान्तरात् तेन तत्खण्डं त्यक्तम् । ततो जातं चन्द्रविंबमानम्

$= \frac{६४९}{\text{नभो}}$ । एतेन चन्द्रविम्बानयनमुपपन्नम् । अथात्रैव लिखितादस्मात् $\frac{८००\times६०}{७४\times\text{नभो}}$ चन्द्रविंबात्

'तदपि हिमगोर्विम्बम् त्रिघ्नम्'इत्यादिना भूभाविम्बम् $= \frac{८००\times६०\times३\times१२}{११\times७४\times\text{नभो}} - ८$

$$= \frac{\frac{८००\times६०\times३\times१२}{११\times७४} - ८ \text{ नभो}}{\text{नभो}} = \frac{(\text{नभो}-१४)\left(\frac{८००\times६०\times३\times१२}{११\times७४} - ८\text{नभो}\right)}{\text{नभो}\,(\text{नभो}-१४)}$$

$$= \frac{\left(१ - \frac{१४}{\text{नभो}}\right)\left(\frac{८००\times३०\times३\times१२}{११\times३७} - ८\text{ नभो}\right)}{\text{नभो}-१४}$$

अत्रापि लवस्थाने सर्वत्र 'नभो' स्थाने ६० उत्थापनेन

$$\text{भूभाविम्बम्} = \frac{\left(१ - \frac{१४}{६०}\right)\left(\frac{८००\times३०\times३\times१२}{११\times३७} - ८\times६०\right)}{\text{नभो}-१४}$$

$$= \frac{\left(१ - \frac{७}{३०}\right)\left(\frac{८००\times३०\times३\times१२}{११\times३७} - ८\times६०\right)}{\text{नभो} - १४}$$

$$= \frac{\frac{८०० \times ३० \times ३ \times १२ \times २३}{११ \times ३७ \times ३०} - \frac{८ \times ६० \times २३}{३०}}{नभो - १४}$$

$$= \frac{\frac{८०० \times ३ \times १२ \times २३}{११ \times ३७} - ८ \times २ \times २३}{नभो - १४}$$

$$= \frac{\frac{६६२४००}{४०७} - ३६८}{नभो - १४} = \frac{१६२७\frac{२११}{४०७} - ३६८}{नभो - १४}$$

$$= \frac{१२५९\frac{२११}{४०७}}{नभो - १४} = \frac{१२५५}{नभो - १४} + \frac{४\frac{२११}{४०७}}{नभो - १४}$$

अत्र परमाल्पे नक्षत्रभोगमाने ५४ समाने द्वितीयखण्डभवं परमं फलम् $= \frac{४\frac{२११}{४०७}}{५४ - १४} = \frac{५}{४०}$

स्वल्पान्तरात् $= \frac{१}{८}$ अं $= \frac{६०'}{८} = ८$ व्यं स्वल्पान्तरात् त्यक्तम् । ततो जातं भूभाविम्बम्

$= \frac{१२५५}{नभो - १४}$ । एतेन भूभानयनमुपपन्नम् ॥ ५ ॥

**खात्यष्टयस्तिथिघटीविहृताः सवेदा**
**वाऽथोडुनाडिहृतदेवयमाः सरामाः ।**
**हीना व्यगुस्फुटलवैर्भवसंगुणास्ते**
**शैलोद्धृताः खररुचः स्थगितांगुलानि ॥ ६ ॥**

**मल्लारिः**—अथ सूर्यग्रहणे ग्रासं साधयति । सप्तत्यधिकशतमितास्तिथिघटीहृतास्ततस्ते सवेदाश्चतुर्भिर्युताः । ते व्यगुस्फुटलवैरमान्तनतनाडिकांघ्रिरहिताद्युतादित्यादिना कृतैर्हीनास्ततो भवगुणा एकादशगुणाःशैलैःसप्तभिर्हृताःखररुचः सूर्यस्य स्थगितांगुलानि ग्रासांगुलानि स्युः । अथ वा उडुनाडीभिर्नक्षत्रघटीभिर्हृता देवयमास्त्रयस्त्रिंशदधिकशतद्वयमितास्ते सरामास्त्रियुक्तास्ततो व्यगुस्फुटभुजभागहीनास्ते एकादशगुणाः सप्तभक्ता ग्रासः स्यादित्यर्थः ।

अत्रोपपत्तिः । अत्र सूर्यस्येदं मध्यमं मानैक्यखण्ड १० । ४७ । सप्तगुणमेकादशभक्तं जाता भागाः ६ । ५२ । एभ्यः सुखार्थं चत्वारस्त्यक्ताः शेषम् २।५२। इदं मध्यतिथिघटीगुणितं जातो भाज्यः १७० । अतः खात्यष्टयस्तिथि-

घटीविहृताः सवेदा इत्युपपन्नम् । तथैवैभ्यो भागेभ्यस्त्रीन् त्यक्त्वा शेषं मध्यनक्षत्रघटीभिः ६० । ४२ गुणितं जातो भाज्यः २३३ । अतो नक्षत्रघटीभक्तदेवयमाः सरामा इति । एवं जातो मानैक्यखण्डोत्थभागो व्यगुभुजांशहीनः। शेषेऽङ्गुलकरणार्थं भवगुणे शैलभक्ते ग्रासः स्यादिति सुगमम् ॥ ६ ॥

**विश्वनाथः**—अथ तिथिवद्दक्षघटीभ्यो रवेश्छन्नानयनमाह खात्यष्टेति । तिथिघटयः ६४ । ४९ । आभिः खात्यष्टयो १७० भक्ताः फलमंशाद्यम् २ । ३७ । २२ । चतुर्युक्ताः ६ । ३७ । २२ । व्यगुस्फुटलवैर्हीनाः ४ । ४० । ३५। भव- ११ संगुणाः । ५१।२६ । ४७ । शैलोद्धृताः फलं सूर्यस्य छन्नमंगुलाद्यम् ७ । २० । ५८ । नक्षत्रघटीभिः ६५ । ५६। देवयमा २३३ भक्ताः फलमंशाद्यम् । ३ । ३२ । १ । त्रिभिर्युक्ताः ६ । ३२ । १ । व्यगुस्फुटलवैर्हीनाः ४ । ३५ । १६ । भवगुणाः ५० । २७ । ५६ सप्तभिर्भक्ताः प्रकारान्तरेण जातो ग्रासः ७ । १२ । ॥ ६ ॥

**सुधाकरः**—अत्र स्वल्पांतराद्रविगतिः षष्टिमिता कल्पिता 'ततो भानोर्गतिः स्वदशभागयुताऽर्धिता वे' त्यादिभास्करोक्त्या कलात्मकं रविबिम्बमानीय त्रिभिर्हृतं जातमंगुलात्मकं रविबिम्बम् $= \frac{६०\times ११}{२०\times ३} = ११$ । अथ यदि तिथिभोगघटीभिर्द्वादशांशा वा ७२० कला रविचन्द्रान्तरकलास्तदा घटीषष्ट्या का लब्धा रविचन्द्रगत्यन्तरकलास्ता रविगतियुता जाता चन्द्रगतिः सा च युगाचलभाजिता जातमंगुलात्मकं चन्द्रबिम्बम् $= \frac{७२०\times ६०}{७४\ \text{तिभो}} + \frac{६०}{७४}$ ।

ततो रविचन्द्रबिम्बार्धयोगेन मानैक्यखण्डम् $= \frac{७२०\times ३०}{७४\ \text{तिभो}} + \frac{३०}{७४} + \frac{११}{२} = \frac{३६०\times ३०}{३७\ \text{तिभो}} + \frac{३० + ४०७}{७४} = \frac{३६०\times ३०}{३७\ \text{तिभो}} + \frac{४३७}{७४}$ । परमशरेण नवत्यंगुलमितेन व्यगुभुजज्या त्रिज्या १२० मिता लभ्यते तदा मानैक्यखण्डसमशरेण का । लब्धा भुजज्या दशभिर्गुणा प्रकृत्या २१ भक्ता जातास्तत्सम्बन्धिनो भुजभागाः

$$= \frac{१२०}{९०} \cdot \frac{१०}{२१}\left(\frac{३६०\times ३०}{३७\ \text{तिभो}} + \frac{४३७}{७४}\right) = \frac{४०\times ३६०\times ३०}{३\times २१\times ३७\ \text{तिभो}} + \frac{४०\times ४३७}{३\times २१\times ७४}$$

$$= \frac{४०\times १२०\times १०}{७\times ३७\ \text{तिभो}} + \frac{२०\times ४३७}{३\times २१\times ३७} = \frac{\frac{४८०००}{७\times ३७}}{\text{तिभो}} + \frac{८७४०}{६३\times ३७}$$

$$= \frac{\frac{४८०००}{२५९}}{\text{तिभो}} + \frac{८७४०}{२३३१} = \frac{१८५\frac{८५}{२५९}}{\text{तिभो}} + \frac{८७४०}{२३३१} = \frac{१७०}{\text{तिभो}} + \frac{१५\frac{८५}{२५९}}{\text{तिभो}} + \frac{८७४०}{२३३१} ।$$

अत्र द्वितीयखण्डे तिभोस्थाने ६० गृहीता मध्यममानेन तदा मानैक्यखण्डसमशरजव्यगु-भुजभागाः

$$= \frac{१७०}{तिभो} + \frac{१५\frac{८५}{२५९}}{६०} + \frac{८७४०}{२३३१} = \frac{१७०}{तिभो} + ०^\circ । १५' + ३^\circ । ४५' \text{ स्वल्पा०}$$

$\frac{१७०}{तिभो} + ४$ । अत उपपन्नं 'खात्यष्टयस्तिथिघटीविहृताः सवेदा' इति ।

अथ सर्वर्क्षघटिकाभिः पूर्ववदनुपातेन चन्द्रगतिः $= \frac{८०० \times ६०}{नभो}$ ।ततो 'युगाचलभाजिता'-इत्य-नेनांगुलात्मकं चन्द्रविम्बम् $= \frac{८०० \times ६०}{७४ \text{ नभो}} = \frac{४०० \times ६०}{३७ \text{ नभो}}$ । अंगुलात्मकं रविबिम्बं च = ११ ।

ततो मानैक्यार्धम् $= \frac{२०० \times ६०}{३७ \text{ नभो}} + \frac{११}{२}$ । पूर्ववदनुपातेन मानैक्यखण्डसमशरजा व्यग्व-र्कभुजभागाः

$$= \frac{१२०}{९०} \times \frac{१०}{२} \left( \frac{२०० \times ६०}{३७ \text{ नभो}} + \frac{११}{२} \right)$$

$$= \frac{४०}{३} \cdot \frac{१}{२१} \left( \frac{२०० \times ६०}{३७ \text{ नभो}} + \frac{११}{२} \right)$$

$$= \frac{४० \times २०० \times ६०}{३ \times २१ \times ३७ \text{ नभो}} + \frac{४० \times ११}{२ \times ३ \times २१}$$

$$= \frac{४० \times २०० \times २०}{२१ \times ३७ \times \text{नभो}} + \frac{२० \times ११}{३ \times २१} = \frac{\frac{१६००००}{२१ \times ३७}}{नभो} + \frac{२२०}{६३}$$

$$= \frac{\frac{१६००००}{७७७}}{नभो} + \frac{२२०}{६३} = \frac{२०५\frac{७१५}{७७७}}{नभो} + \frac{२२०}{६३} = \frac{२३३}{नभो} - \frac{२७\frac{६२}{७७७}}{नभो} + \frac{२२०}{६३}$$

अत्र द्वितीयखण्डे 'नभो' स्थाने ६० उत्थापनेन जाता मानैक्यखण्डसमशरभवा व्यगुभुजभागाः

$$= \frac{२३३}{नभो} + \frac{२२०}{६३} - \frac{२७\frac{६२}{७७७}}{६०} = \frac{२३३}{नभो} + ३^\circ । ३०' - २७' \text{ स्वल्पान्तरात्} = \frac{२३३}{नभो} + ३$$

स्वल्पान्तरात् । अनेन 'वाऽथोडुनाडिहृतदेवयमाः सरामा' इत्युपपद्यते । ततो व्यगुभुजलव-विशोधनेन शिष्टश्छन्नांगुलसमशरभवा व्यगुभुजभागाः । तेभ्यः 'तेंऽशा निघ्नाः शङ्करैः शैलभक्ताः' इत्यादिना शरमानं खरश्चरश्छन्नांगुलमानं भवेदिति सर्वमुपपन्नम् ॥ ६

रविलवयुतभानोर्दोर्लवत्र्यंशतुल्यै-
र्विरसलवमहेशा व्यंगुलैर्हीनयुक्ताः।
अजघटरसभेऽर्के बिम्बमस्यांगुलाद्यं
स्थितिमुखमवशिष्टं पूर्ववत् शेषमत्र ॥ ७ ॥

**मल्लारिः**---अथ सूर्यबिम्बसाधनमेकवृत्तेनाह । रविलवयुतभानोरिति । रविलवैर्द्वादशभागैर्युतो यो भानुस्तस्य ये दोर्लवा भुजभागास्तेषां यस्त्र्यंशस्तत्तुल्यानि यानि व्यंगुलानि तैर्विरसलवा विगतषडंशा महेशाः १० । ५० । हीनयुक्ताः कार्याः । कदेत्याह। अर्के सूर्ये अजघटरसभे सति । मेषादिषड्भे हीनास्तुलादिषड्भे युक्तास्तदाऽस्य सूर्यस्यांगुलाद्यं बिम्बं भवति । अत्र स्थितिमर्दस्पर्शकालादिकं यदवशिष्टमुक्तादुर्वरितं तदत्र पूर्ववत् ग्रहणोक्तवज्ज्ञेयमित्यर्थः ।

अत्रोपपत्तिः । रविबिम्बं मध्यममिदम् ।१०।५०। इदं मध्यमगतिवशात् स्पष्टगतेः साध्यम्।मध्यमस्पष्टगत्योरन्तरं गतिफलम् । तत् सूर्यमन्दकेन्द्रकोटिवशात् । अतो मन्दकेन्द्रं कार्यम् । तद्यथा । रवेर्मृदूच्चं राशिद्वयमष्टादशभागाधिकम् २ । १८ । ० । ० । ततो रविः शोध्यः केन्द्रं स्यात् । अस्माद्रविः शोध्यस्तस्य भुजस्त्रिभाच्छोध्यः कोटिः स्यादित्यत्र द्वादशभागयुक्तसूर्यस्य भुजो हि मन्दकेन्द्रकोटिर्भवतीति सिद्धम् । तस्य सत्रिभस्य भुज एव कोटिः । अतस्त्रिभस्य ३ । सूर्योच्चस्यान्तरं द्वादशभागास्ते रवौ योज्यास्ततो भुजः कार्य इति सिद्धम् । अत्र मध्यमस्पष्टसूर्यबिम्बान्तरमिदं परम—० । ३० । मंगुलाद्यम्। इदं परमाणां नवत्यंशानां त्र्यंशतुल्यम् । अतो द्वादशभागयुक्तसूर्यभुजभागत्र्यंशतुल्यम् । अतो द्वादशभागयुक्तसूर्यभुजभागत्र्यंशतुल्यव्यंगुलहीनयुक्तं मध्यबिम्बं स्पष्टं भवतीति।मेषादौ रवौ सति केन्द्रं मकरादौ भवति।तत्र गतिफलं ऋणमतो मेषादौ हीनः। तुलादौ रवौ केन्द्रं कर्क्यादौ तत्र गतिफलं धनमतस्तुलादौ युक्ताः कार्या इत्युपपन्नम् ॥ ७ ॥

दैवज्ञवर्यस्य दिवाकरस्य सुतेन मल्लारिसमाह्वयेन ।
वृत्तौ कृतायां ग्रहलाघवस्य पञ्चांगतः पर्वयुगं समाप्तम् ॥

इति श्रीगणेशदैवज्ञकृतग्रहलाघवस्य टीकायां मल्लारिदैवज्ञविरचितायां तिथिपत्रादेव ग्रहणद्वयसाधनाधिकारोऽष्टमः ॥ ८ ॥

**विश्वनाथः**—अथ सूर्यबिम्बानयनमाह रविलवेति । रविः ८ । ५ । २६ । २० । द्वादशभागैर्युक्तः ८ । १७ । २६ । २० । अस्य भुजांशाः ७७ । २६ । २० । एषां त्र्यंशो व्यंगुलात्मकः २५ । सूर्यस्य तुलादिषड्राशिस्थत्वादेतै-

व्यंगुलै-२५ विरसलवमहेशाः १० । ५० । युक्ता जातं सूर्यबिम्बम् ११ । १५ ।
एवं छन्नाद्यं ज्ञात्वा स्थितिमुखं यदवशिष्टं तत् पूर्ववज्ज्ञेयम् ॥ ७ ॥

इति ग्रहलाघवोदाहरणे पञ्चांगाद्ग्रहणद्वयसाधनम् ।

**सुधाकरः**—कल्प्यते रविः=र तदा 'मन्दोच्चं ग्रहवर्जितम्' इत्यादिना रविकेन्द्रम् =२रा । $१८^\circ - र = २^{रा}$ । $१८^\circ + १२^\circ - १२^\circ - र = ३^{रा} - (१२^\circ + र) = ३^{रा} - भा$, ( यदि $१२^\circ + र = भा$ ) अत्र यदि भा = ० तदा केन्द्रम् = $३^{रा}$ । यदि भा = $६^{रा}$ तदा केन्द्रम् = $३^{रा} - ६^{रा} = १५ - ६ = ९$ । अतो यावत् भा मेषादौ तावन्मकरादिषड्के केन्द्रम् । एवं तुलादौ षड्भे भासंज्ञके केन्द्रं कर्क्यादौ षड्भे भवति । गतिफलं तु कर्क्यादौ केन्द्रे धनं मकरादावृणं भवति । अतो भासंज्ञके मेषादौ गतिफलमृणं तुलादौ तु धनमिति स्थितिर्जाता । अथ पूर्वसाधितं रविकेन्द्रम् = $३^{रा}$ − भा । अस्य कोटिः = ३ − ( ३ − भा ) = भा । अतो भासंज्ञकस्य दोर्लवसमाः केन्द्रकोटिलवा भवन्तीत्यत्र तद्द्योतकश्चेत् 'भु' भवेत् तदा 'केन्द्रस्य कोटिलवखाश्विलवोननिघ्ना रुद्राः' इत्याद्याचार्योक्तप्रकारेण रविगतिफलम्

$$= \frac{\left(११ - \frac{भु}{२०}\right)\frac{भु}{२०}}{१३} = \frac{११\,भु}{१३\times२०} - \frac{भु^२}{१३\times४००}$$

। ततो मेषतुलादिषड्भस्थिते भासंज्ञके क्रमेण रविस्फुटगतिः=$५९' । ८'' \mp \left(\frac{११\,भु}{१३\times२०} - \frac{भु^२}{१३\times४००}\right)$ । अथ 'भानोर्गतिः स्वदशभागयुतार्धिता' इत्यादिना कलात्मकं बिम्बं रामैर्विहृतं जातमंगुलात्मक बिम्बम्

$$= \frac{११}{६०}\left\{ ५९' । ८'' \mp \left(\frac{११\,भु}{१३\times२०} - \frac{भु^२}{१३\times४००}\right)\right\}$$

$$= \frac{६५० । २८''}{६०} \mp \left(\frac{११\times११\,भु}{६०\times१३\times२०} - \frac{११भु^२}{६०\times१३\times४००}\right)$$

$$= १०\,\text{अं} + ५०\,\text{व्यं} \mp \frac{१२१\,भु}{१३\times२०}\,\text{व्यं} \pm \frac{११\,भु^२}{१३\times४००}\,\text{व्यं}$$, स्वल्पान्तरात् ।

अत्र यदा परमं भुजमानम्=$९०^\circ$ तदा तृतीयखण्डभवं परमं व्यंगुलमानम्= $\frac{११\times९०\times९०}{१३\times४००}$

$$= \frac{११\times९\times९}{१३\times४}\ \frac{८९१}{५२} = १७$$ इदं स्वल्पान्तरात् त्यक्तम् । ततो जातमंगुलाद्यं रविबिम्बम्

$$= १०\,\text{अं} + ५०\,\text{व्यं} \mp \frac{१२१भु}{२६०} = \left(११ - \frac{१}{६}\right)\text{अ} \mp \frac{\frac{भु}{१८}}{२+\frac{\quad}{१२१}}\,\text{व्यं}$$ । अत्रे $\frac{\frac{भु}{१८}}{२+\frac{\quad}{१२१}}$ दं

तृतीयखण्डोद्भवेन फलेन $\frac{११\,भु^२}{१३\times४००}$ अनेन हीनं सर्वदा स्वमानान्न्यूनमेवात आचार्येण तस्मा-

महासाय तारतम्याद्धर एव रूपेणाधिकः कृतस्ततो जातं रविबिंबम् = $\left(११- \frac{१}{६}\right)$ ÷ $\frac{भु}{३}$ व्यं। अत उपपन्नं सर्वम् ॥ ७ ॥

इति सुधाकरनिर्मितवासना सकलया कलया कलयासना।
तिथिपुटग्रहणे परया गता भव्यावलया वलयाऽऽगता ॥
इति तिथिपत्राद्ग्रहणद्वयसाधनाधिकारः।

**सार्कांशाविह कुरु पक्षतिक्षयेऽर्क-**
**व्यग्वर्कौ चरमथ केवलाद्व्यगोर्यत्।**
**षड्बाणैर्विहृतमिदं क्रमाल्लवाद्यं**
**स्वर्णं स्याद्व्यगुरविगोलयोः पृथक् तत् ॥ १ ॥**

**मल्लारिः**---अथोदयास्ताधिकारो व्याख्यायते तत्रादौ शुक्लप्रतिपदि चन्द्रदर्शनं भविष्यति न वेत्युच्यते वृत्तत्रयेण। इह पक्षतेः प्रतिपदः क्षयेऽन्ते अर्कव्यग्वर्कौ सूर्यविराह्वर्कौ सार्कांशौ द्वादशभागयुक्तौ कुरु। अथ केवलात्। अदत्तायनांशाद्व्यगोश्चरं साध्यम्। तत् षड्बाणैः षट्पञ्चाशता विहृतं भक्तं सल्लवाद्यं फलं ग्राह्यं तत् स्वर्णं धनर्णं स्यात्। कदेत्याह। व्यगुरवाविराह्वर्कस्य यौ गोलौ तद्वशात्। उत्तरगोले धनम्। दक्षिणगोले ऋणमिति। तत्फलं पृथक्। एकान्ते स्थापयेत् ॥ १ ॥

**विश्वनाथः**----अथोदयास्ताधिकारोदाहरणम्। तत्र तावत् शुक्लप्रतिपदि चन्द्रोदयज्ञानं त्रिभिः श्लोकैराह सार्कांशाविति। शके १५३२ माघशुक्ल-१ शनौ घटी ७। श्रवणनक्षत्रं घटी २८। २५। सिद्धियोगघटी ४०। ८। चक्रम् ८। अहर्गणः १०३६। प्रातर्मध्यमो रविः ९।६।१२।३८। चन्द्रः ९। १९।३८।३३। उच्चम् ८।२०।५४।२८। राहुः २।१०।३।२५। पञ्चाङ्गस्थतिथिघटीभि-७ श्चालिताः। रविः ९।६।१९।३१। चन्द्रः ९।२१। १०।४७। उच्चम् ८।२०।५५।१४। राहुः २।१०।३।३। रवेर्मन्दकेन्द्रम् ५।११।४०।२९। मन्दफलं धनम् ०।४१।२७। संस्कृतो रविः ९।७।०।५८। अयनांशाः १८।८ चरं धनम् १०६। चरसंस्कृतो जातः स्पष्टोऽर्कः ९।७।२।४४। स्पष्टा गतिः ६१।१०। फलत्रयसंस्कृतश्चन्द्रः ९।२१।१५।१२ मन्दकेन्द्रम् १०।२९।३०। २ मन्दफलमृणम् २।३३।०। संस्कृतः स्पष्टश्चन्द्रः ९।१८।५२।१२। स्पष्टा गतिः ७३५।१। आभ्यां तिथि-१ घटी ०।५६। आभिः पञ्चाङ्गस्थघटिका ७

युक्ता जातः प्रतिपदन्तः ७ । ५६ । आभिर्घटीभि- ० । ५६ श्चालितौ जातौ तिथ्यन्तकालीनौ रवि- ९ । ७ । ३ । ४१ राहू २ । १८ । ३ । १ । विराह्वर्कः ६ । २७ । ० । ४० अर्कव्यग्वर्कौ द्वादशभागैः सहितौ रविः ६ । १९ । ३ । ४१ । विराह्वर्कः ७ । ९ । ० । ४० । इह पक्षतेः प्रतिपदः क्षयेऽन्ते तात्कालिकार्कव्यग्वर्कौ सार्कांशौ कुरु । अथ केवलाद्व्यगोर्यचरम् । व्यगुः ७ । ९ । ० । ४० । अस्माच्चरं ७० षड्बाणै५६ र्भक्तं फलं १ । १५ । ० व्यगोर्दक्षिणगोलस्थत्वादृणम् । इदमेकं फलम् ॥ १ ॥

अथोदयास्ताधिकारः ।

**सुधाकरः**—प्रतिपदन्ते चेत् स्पष्टो रविः = र, व्यग्वर्कश्च = व्य । तदा प्रतिपदि रविचन्द्रान्तरद्वादशभागसमन्वितेन प्रतिपदन्ते पक्षति-क्षये, ( पक्षस्य मूलं पक्षतिः, 'पक्षात् तिः' इति पाणिनिसूत्रात्, मूलमत्रादिः । ) स्पष्टश्चन्द्रः $=$ र $+$ १२° । सपातश्चन्द्रः $=$ व्य$+$ १२°, राहोश्चक्रशुद्धत्वात् । एवमत्र द्वादशांशाधिको रवी रविर्द्वादशांशाधिको व्यग्वर्कश्च व्यग्वर्कः कल्पनीयः । अथ प्रतिपदन्ते यत्र क्षितिजादुपरि चन्द्रबिम्बं तत् स्थिरं प्रकल्प्य भगोलं परिभ्राम्यास्तक्षितिजे चानीयायनाक्षजदृक्कर्मणी साध्येते । तत्र लघुज्यया व्यगोर्भुजज्या $=$ ज्याव्य । ततश्चन्द्रस्य कलात्मकः शरः $= \dfrac{२७० \times \text{ज्याव्य}}{१२०} = \dfrac{९\ \text{ज्याव्य}}{४}$ ।

यष्टिः $= \dfrac{\text{पद्यु} \times \text{त्रि}}{\text{द्यु}}$ । 'यष्ट्या द्युवरविशिखस्ताडित' इत्यादिभास्करोक्तेन विधिना

स्पष्टशरकला $= \dfrac{९\ \text{ज्याव्य} \times \text{पद्यु}}{४\ \text{द्यु}}$ । 'रविहृतोऽक्षभया हतो वा लब्धं हतं त्रिभगुणेन भजेद्द्युमौर्व्या' इत्यादिभास्करोक्तेन प्रकारेणाक्षजदृक्कर्मासवः

$$= \frac{९\ \text{ज्याव्य} \times \text{पद्यु} \times \text{वि} \times \text{त्रि}}{४\ \text{द्यु} \times १२ \times \text{द्यु}} = \frac{९\ \text{जिज्या} \times \text{ज्याव्य} \times \text{व} \times \text{त्रि}\cdot \text{पद्यु} \times \text{त्रि}}{\text{जिज्या} \times ४ \times \text{त्रि} \times \text{द्यु} \times १२ \times \text{द्यु}}$$

अत्र $\dfrac{\text{जिज्या} \times \text{ज्याव्य}}{\text{त्रि}}$ $=$ व्यगोः क्रान्तिज्या सा विषुवतीगुणा द्वादशहृता तत्कुज्या सा च त्रिज्यागुणा द्युज्याहृता व्यगुचरज्या $=$ ज्याच $= \dfrac{२१\ \text{च}}{१० \times १०}$ (यदि पलात्मकं चरं भवेत्तथाऽऽचार्येण 'स्यात् सायनोष्णांशुभुजर्क्षसंख्या' इत्यादिविधिना साधितम् )

एतदुत्थापनेनाक्षजदृक्कर्मकलाः $= \dfrac{९\ \text{ज्याच} \times \text{पद्यु} \times \text{त्रि}}{४\ \text{जिज्या} \times \text{द्यु}}$ । एते षष्टिभक्ता जाता अक्षजदृक्कर्मांशाः $= \dfrac{९\ \text{ज्याच} \times \text{पद्यु} \times \text{त्रि}}{६० \times ४\ \text{जिज्या} \times \text{द्यु}}$

$$= \frac{९ \times २१\ \text{च} \times ११० \times १२०}{१०० \times ६० \times ४ (४९ - \frac{\text{प}}{४}) \times \text{द्यु}} = \frac{९ \times २१\ \text{च} \times ११०}{१०० \times २ (४९ - \frac{\text{प}}{४})\text{द्यु}}$$

$$=\frac{९\times२१\text{ च}\times११०}{१००\times२(४८'।४५'')\text{ द्यु}}=\frac{२१\text{ च}\times११०}{१००\times२(५'।२५'')\text{ द्यु}}=\frac{२१\text{ च}\times११}{१०\times२(५'।२५'')\text{ द्यु}}$$

लघुज्याभिः सर्वा द्युज्याः स्वल्पान्तरान्मिथस्तुल्या इति पूर्वं चन्द्रग्रहणाधिकारे 'त्वथ मध्यनताच्च यद्विषयलब्धग्रहादित उक्तवत्' इत्याद्युपपत्तौ प्रतिपादितं तेनात्र हरे द्युज्यास्थाने १२० गृहीता तदाऽक्षजदृक्कर्मांशाः $=\frac{२१\text{ च}\times११\cdots}{२०(५'।२५'')\times१२०}=\frac{७\times११\times\text{च}}{२०\times४०(५'।२५'')}$

$$=\frac{७७\text{ च}}{८००\left(५\frac{२५}{६०}\right)}=\frac{७७\text{ च}}{४०००+\frac{२५\times८००}{६०}}=\frac{७७\text{ च}}{४०००+\frac{१०००}{३}}=\frac{७७\text{ च}}{४०००+३३३\frac{१}{३}}$$

$$=\frac{७७\text{ च}}{४३३३\frac{१}{३}}=\frac{\text{च}}{५६+\frac{२१}{७७}+\frac{१}{७७\times३}}=\frac{\text{च}}{५६}$$, अर्धाल्पे त्याज्यमिति नियमेन । अत उपपन्नमक्षजदृक्कर्मांशानयनम् । क्रमोत्क्रमलग्नाभ्यां 'स्फुटास्फुटक्रान्तिजयोश्चरार्धयोः' इत्यादिभास्करोक्तेन प्रकारेण धनर्णोपपत्तिरतिस्फुटा । तत् पृथगित्यस्याग्रेसम्बन्धः ॥ १ ॥

**त्रिभायनलवान्वितारुणचराहृतं द्व्यक्षभा-**
**हृतेः कृतिहृतं धनर्णमसमैकगोले व्यगोः ।**
**खखानलविशेषितः सरसभायनार्कोदयः**
**शराद्रिकहृतो धनाधनमनल्पकाल्पोदये ॥ २ ॥**
**द्युमितिप्रतिपद्गमान्तरं यच्छरभक्तं स्वमृणं दिनेऽधिकोने ।**
**धनमत्र चतुष्कसंस्कृतिश्चेत् तपनास्ते विधुरीक्ष्यतेऽन्यथा न ३**

**मल्लारिः**–त्रिभेण राशित्रयेण । अयनलवैरयनांशैः । अन्वितो युक्तो योऽरुणः सूर्यस्तस्य यच्चरं तेन पृथक्स्थं फलमाहृतं गुणितम् । ततो द्व्यक्षभाहृतेर्द्विगुणितपलभायाः कृत्या वर्गेण हृतं तत् द्वितीयं फलमेकान्ते स्थाप्यम् । तद्व्यगोरसमैकगोले धनर्णं स्यात् । रविव्यगू यदि भिन्नगोले तदा धनम् । एकगोले तदा ऋणमिति । अथ सरसभायनार्कोदयः षड्राश्ययनांशयुक्तार्कोदयः खखानलविशेषितः शतत्रयान्तरितः सन् शराद्रिकैः पञ्चविंशत्या हृतः फलमनल्पकाल्पेऽर्कोदये सति धनाधनं स्यात् । शतत्रयात् उदये अधिके धनमूने ऋणम् । इदं तृतीयमप्येकान्ते स्थाप्यम् ।

अथ चतुर्थं फलं साधयति । द्युमितिर्दिनमानम् । प्रतिपद्गमः प्रतिपदन्तः । अनयोर्यदन्तरं तत् शरभक्तं फलं दिनेऽधिकोने स्वमृणं स्यात् । दिनमाने तिथेर-

धिके धनमूने ऋणमिति चतुर्थं फलं भवति । अत्र चतुष्कसंस्कृतिः फलचतुष्टय-संस्कारश्चेद्धनं तदा तपनस्य सूर्यस्यास्ते विधुश्चन्द्र ईक्ष्यते दृश्यते । अन्यथा फलसंस्कारे ऋणे सति न दृश्यत इति भावः । संस्कारस्तु धनयोर्योगः । ऋणयोरपि योगः । धनर्णयोरन्तरमिति प्रसिद्धः ।

अत्रोपपत्तिः । चन्द्रस्य कालांशा द्वादश यदा स्युस्तदा चन्द्रोदयः । चेदल्पस्तदा नेति । अतश्चन्द्रे दृक्कर्मादि दत्त्वा कालांशाः साध्याः । तत्राचार्येण लाघवार्थं शिष्यक्लेशभयार्थं फलानि साधितानि तेषां योगो यदा धनं तदा कालांशा द्वादशाधिकाः । अत उदयो भविष्यत्येव । यदा ऋणं तदा कालांशा द्वादशकाल्पा अतो न दर्शनम् । सूर्यचन्द्रान्तरं प्रतिपदन्ते द्वादशभागास्ते तु क्षेत्रांशा नित्यांशा नित्या एव । कालांशा देशविशेषेण कालवशेन शराद्यन्तरवशेन चान्तरिता भवन्ति । तत्र प्रतिपदन्ते चन्द्रः कार्यः । अतो रविः सार्काशश्चन्द्रो जातः । तथा शरार्थं व्यगुचन्द्रः कार्यः । अतो व्यगुरविरेव सार्काशो व्यगुचन्द्रः स्यात् । अतः सार्काशावित्युपपन्नम् । अथाक्ष दृक्कर्म साध्यम् । तत्रादौ व्यगोः शरः साध्यः । ततो द्वादशकोटौ पलभा भुजस्तदा शरकोटौ क इति । जातं दृक्कर्म । तत्र लाघवार्थं प्रतिराशित्रयमध्ये शराः साधिताः । ते यथा । १३५ । २३४ । २७० एते द्वादशभक्ता जाताः ११ । १९ । ( २२ । ३० ) । एषां पलभा गुणोऽस्ति । एते एकांगुलपलभोत्थचरखण्डैरेभिरासन्नाः सन्ति । १० । १८ । ( २१ । २० ) एतानि चरखण्डानि यावत् पलभया गुण्यन्ते तावत् स्वदेशीयान्येव भवन्ति । तैश्चरखण्डैर्व्यगोः साधितं यच्चरं तत्पलभागुणितं शरासन्नं स्यादेव द्वादशभिस्तु पूर्वमेव भक्तमस्ति । अतो व्यगोश्चरदृक्कर्मकलाः । तासां भागकरणार्थं षष्टिर्हरः ६० । परमिदं सान्तरं तदन्तरं साध्यते यद्यनेन परमचरखण्डकेन । २१ । २० एताः परमदृक्कर्मखण्डकलाः २२ । ३० । तदेष्टेन चरेण का इति एवं हरघातो हरः १२८० । गुणहरौ गुणेनापवर्त्य जातो हरः । ५६ । अतो व्यगोश्चरं षड्बाणैर्हृतं भागाद्यमाक्षं दृक्कर्म भवतीत्युपपन्नम् । धनर्णोपपत्तिः । उत्तरगोले ग्रहः क्षितिजादुन्नाम्यते अतस्तदुदयः पूर्वमेव । अतस्तत्र धनम् । दक्षिणे नाम्यतेऽतस्तदुदयः पश्चात् । अतस्तत्र ऋणमेकं फलम् । अथायनदृक्कर्म साधयति । त्रिज्याकर्णे आयनवलनज्या भुजस्तदा शरकर्णे क इति । द्युज्यावृत्ते इदं तदा त्रिज्यावृत्ते किं त्रिज्ययोस्तुल्यत्वान्नाशे कृते द्युज्याहरः शरो गुणः । तत्र सायनसात्रिभग्रहक्रान्तिरेवायनवलनम् । तत्प्रतिराशिसाधितम् । ११ । २० । २४ । एतदप्येकांगुलपलभोत्थचराधासन्नम् । भागार्थं षष्ट्या भाज्यम् ६० । यदाऽस्य १० इदं वलनम् ११ । ४३ तदयकस्ष्टमिति । हरघातो हरः ६०० । मध्यस्थद्युज्या

११२। ३० इयमपि हरः। अतो हरघातो जातो हरः ६७५००। जीवाथ द्वौ २ गुणः। पूर्वगुणश्च । ११ । ४३। एवं सत्रिभायनार्कस्यैकांगुलपलभोत्थचरं ग्राह्यम्। तदिष्टपलभावशेन गृहीतम्। अतस्तस्याक्षभाऽपि हरः शरो गुणोऽस्ति तदर्थं शरः साध्यः। तदाऽऽक्षदृक्कर्मतो विलोमेन शरः। तत् षष्टिद्वादशघात-७२० गुणं पलभाभक्तं शरः स्यात्। उभयोर्घाते पलभावर्गो हरः।अयं च हरः ६७५००। सत्रिभायनार्कच राक्षदृक्कर्मघातस्य गुणघातो गुणः१६८७२। गुणहरौ गुणेनापवर्त्य जातो हरः ४। चतुर्भिः पलभावर्गोऽपि हरः। एवं हरघातो द्व्यक्षभाहतेः कृतिर्हरः। रूपगुणस्याविकृतान्नाशः। धनर्णोपपत्तिः प्रत्यक्षं गोले दृश्यते। इदं द्वितीयफलम्। अथ क्षेत्रांशकालांशान्तरं साध्यम्। तत्र राशिकलोदयास्वन्तरं कार्यम्। अत्रोदयपलान्यतो राशिकलाः षड्भक्ताः ३०० एतदन्तरं तत्र सूर्यास्ते चन्द्रोदयोऽतः सूर्यः सषड्भायनः कार्यः। तदुदयः खखानलविशेषितः कलास्वन्तरस्य त्रिंशदंशैरिदमन्तरं तदा द्वादशभिः क्षेत्रांशैः किमिति हरः ३० । गुणः १२। षष्टिभक्तं घटिकाः। ताः षड्भो भागाः। एवं हरघातो हरः १८६ । गुणघातो गणः ७२ । गुणहरौ गुणेनापवर्त्य हरः २५। अतः शराद्रिकहृत इति। धनर्णोपपत्तिः। शतत्रयादधिके उदयकलाभ्यः असवोऽधिकाः ततस्तत्र धनमूने ऋणमिति। इदं तृतीयं फलम्। प्रतिपदन्ते सूर्यास्ते चन्द्रोदयः।अतो द्युमानतुल्ये प्रतिपदन्ते चन्द्रोदयः।ऊनाधिकात् फलं साध्यते। षष्टिघटिकाभिर्द्वादशभागास्तदेष्टदिनमानप्रातिपदन्तरघटीभिः किमिति गुणहरौ गुणेनापवर्त्य हरः ५। अतः शरभक्तमिति। धनर्णोपपत्तिः। प्रतिपदधिके दिने चन्द्रोदयः स्यादेव अतस्तत्र धनम्। ऊने ऋणमित्यर्थत एव सिद्धम्। एवं चतुर्णां फलानां संस्कारे धनभूते कालांशा द्वादशाधिकाः स्युः। तदा तत्र चन्द्रोदयः स्यादित्युपपन्नम्। अन्यथा नैवेति। अथ झटिति सभायां गुरुशुक्रोदयास्तज्ञानं यथा भवति तथोच्यते ॥ २-- ३ ॥

**विश्वनाथः**—अथ द्वितीयं फलम्। इद पृथक्स्थम् १ । १५ । ०। त्रिभायनेति। राशित्रयेण अयनलवैरयनांशैर्युक्तोऽरुणः सूर्यः १। ७। ११।४१ अस्माच्चरम् ६८। अनेन पृथक्स्थम् १। १५। ० । गुणितम् ८५। ०। ० अक्षभा ५। ४५ द्विगुणिता ११ । ३०। अस्याः कृतिः १३२ । १५। अनया पृथक्स्थं गुणितं भक्तं फलम्। ०। ३८। ३३। व्यगोः सकाशात् त्रिभायनांलवान्वितसूर्यस्य भिन्नगोलत्वाद्धनम्। अथ तृतीयं फलम्। सरसायनांशयुक्तोऽर्कः ४। ७। ११। ४१। अस्योदयः ३४५। खखानल-३०० विशेषितः ४५। शरद्विक-२५ हृतः फलम् १। ४८। ०। खखानलेभ्यः सरसभायनार्कोदय-

स्याधिकत्वाद्धनम् । अथ चतुर्थं फलम् । द्युमितीति । द्युमितिः२६ । २८ । प्रतिपदन्तः ७ । ५६ । अनयोरन्तरम् १८ । ३२ । शरभक्तं फलम् ३ । ४२।१४ । दिनमानस्य प्रतिपदन्तापेक्षयाऽधिकत्वाद्धनम् । तेषां चतुर्णां फलानां संस्कृतिः । धनयोर्योगः ऋणयोर्योगः । धनर्णयोरन्तरमिति । फलचतुष्कसंस्कृतिर्धनम् ४। ५३ । ५७ । अतस्तपनास्ते चन्द्रो दृश्यः। अथ वा चतुर्णां फलानामृणसंस्कारेणादृश्य इति । इति चन्द्रदर्शनम् ।। २--३ ॥

**सुधाकरः**—पूर्वागतमक्षजं दृक्कर्म $= \dfrac{\text{च}}{५६} = \text{फ}$ । तथा सायनसत्रिभचन्द्रक्रान्तिः $= \text{क्रा}_1$, तद् द्युज्या च $= \text{द्यु}_1$ । चन्द्रद्युज्या $= \text{द्यु}$ । तदीयो मध्यमोऽस्फुटः शरः कलात्मकः $= \text{श}$ । तदा 'सत्रिराशिग्रहद्युज्यानिघ्नस्त्रिज्योद्धृतः शरः' इत्यादिना स्पष्टशरः कलात्मकः $= \dfrac{\text{श} \times \text{द्यु}_1}{\text{त्रि}}$ ।

अयं पलभागुणो द्वादशहृतस्ततस्त्रिज्यागुणश्चन्द्रद्युज्याहृतस्ततःषष्टिभक्तो जाता अक्षजदृक्कर्मांशाः

$$= \frac{\text{च}}{५६} = \frac{\text{वि} \times \text{द्यु}_1 \times \text{श} \times \text{त्रि}}{१२\ \text{त्रि} \times \text{द्यु} \times ६०} = \text{फ}$$

। अनेन समीकरणेन समच्छेदादिना $\text{श} = \dfrac{\text{फ} \times १२ \times \text{त्रि} \times \text{द्यु} \times ६०}{\text{वि} \times \text{द्यु}_1 \times \text{त्रि}}$

तथा चन्द्रायनवलनज्या $= \dfrac{\text{ज्याक्रा}_1 .\ \text{त्रि}}{\text{द्यु}}$, यष्टिश्च $= \dfrac{\text{पद्यु}.\ \text{त्रि}}{\text{द्यु}}$, ततो 'ऽस्फुटेषुवलनाहतिस्तु वा' इत्यादि भास्करप्रकारेणायनाः कलाः षष्टिभक्ता जाता आयनदृक्कर्मांशाः

$$= \frac{\text{श}.\ \text{ज्याआव}}{६०\ \text{य}} = \frac{\text{फ}.\ १२.\ \text{त्रि}.\text{द्यु}\ ६०.\ \text{ज्या क्रा}_1.\ \text{त्रि}.\ \text{द्यु}}{\text{वि}.\ \text{द्यु}_1 .\ \text{त्रि}.\ \text{द्यु}.\ \text{पद्य}.\ \text{त्रि}.\ ६०}$$

$$= \frac{\text{फ}.\ १२.\ \text{त्रि}.\ \text{ज्या क्रा}_1 .\ \text{द्यु}.}{\text{वि त्रि द्यु}_1 .\ \text{पद्यु}} = \frac{\text{फ}.\ १२^2 .\text{त्रि}.\text{वि ज्या क्रा}_1 .\text{द्यु}}{\text{वि}^2 .\ १२०.\ \text{द्यु}_1 .\ १२.\ \text{पद्यु}}$$

अत्र यदि सायनत्रिभचन्द्रस्य चरं पलात्मकम् $= \text{च}_1$ तदा

$$= \frac{\text{त्रि}.\text{वि}.\text{ज्या क्रा}_1}{\text{द्यु}_1 .\ १२} = \text{ज्या च}_1 = \frac{२१\ \text{च}_1}{१००}$$

। एतदुत्थापनेनायनदृक्कर्मांशाः

$$= \frac{१२^2 .\ \text{फ}.\ \text{द्यु}.\ २१.\ \text{च}_1}{१०^2 .\ \text{वि}^2 .\ १२०.\ \text{पद्यु}} = \frac{१२.\ २१.\ \text{च}_1 .\ \text{फ}.\ \text{द्यु}}{१०० \times १०\ \text{वि}^2 .\ \text{पद्यु}} = \frac{३.\ २१.\ \text{च}_1 .\ \text{फ},\ \text{द्यु}}{२५०.\ \text{वि}^2 .\ \text{पद्यु}}$$

$$= \frac{६३.\ \text{च}_1 .\ \text{फ}.\text{द्यु}}{२५०\ \text{वि}^2 .\ \text{पद्यु}}$$

। अत्रापि चन्द्रग्रहणीयाक्षजवलनसाधनोपपत्तिवत् यदि $\text{द्यु} = \text{पद्यु}$

तदायनदृक्कर्मांशाः $= \dfrac{६३\ \text{च}_1 .\ \text{फ}}{२५०\ \text{वि}^2} = \dfrac{\text{च}_1 .\ \text{फ}}{\frac{२५०}{६३}\text{त्रि}^2} = \dfrac{\text{फ}.\ \text{च}_1}{४\ \text{वि}^2} = \dfrac{\text{फ च}_1}{(२\text{वि})^2}$ । अत उपपन्नमायनदृक्कर्मांशानयनम् । सत्रिभग्रहस्य यद्युत्तरगोलस्तदा ग्रहो मकरादिकेन्द्रत्वादुत्तरेऽयने । यदि सत्रिभग्रहस्य दक्षिणगोलस्तदा ग्रहो दक्षिणेऽयने । अतः 'ता ग्रहेऽयनपृषत्कयोः क्रमादेकभिन्नककुभोर्ऋणं धनम्' इत्यनेन भास्करविधिना धनर्णवासना सुगमेति ।

अथ प्रतिपदन्ते चेद्रवेरस्तकालस्तदा सूर्यास्तानन्तरं यावता कालेन चन्द्रस्थानं रवितो द्वादशभागाधिकमस्तमेष्यति तावता कालेन सरसरविभोदयस्य द्वादशभागा उदेष्यन्ति ततो भुक्तभोग्यकालानयनवदनुपातः। यदि भागत्रिंशता सरसरविभोदयमानं पानीयपलात्मकं लभ्यते तदा द्वादशभागैः किम्। लब्धः पलात्मकः कालो दशभिर्हृतो जाता अंशाः = $\frac{\text{सरस. भोद. १२}}{\text{३० × १०}}$ = $\frac{\text{स. भोद}}{\text{२५}}$ एषामंशानां द्वादशकालांशानामन्तरं च भागात्मकम् = १२ − $\frac{\text{स. भोद}}{\text{२५}}$ = $\frac{\text{३०० − स. भोद}}{\text{२५}}$ अत्र यदि ३०० > स भोद तदा धनमन्यथा ऋणं भवतीत्यस्य कारणमग्रे वक्ष्ये ॥ २ – ३ ॥

**चक्राढ्यो मधुवक्रमासनिचयो विश्वाप्तचक्रोनितो**
**द्विघ्नो युक् दशमासधूर्जटिदिनैर्भैः शेषितो भच्युतः।**
**द्व्याप्तः स्याद्भमुखः पृथक् तिथिलवैरूनोऽस्य बाह्वंशकार्काप्तांशोनयुतो घटाजरसभे मासादिकः स्यान्मधोः॥४॥**
**तिथिदिनरहिताढ्योऽसौ द्विधा तैश्च मासैः**
**क्रमश इह भवेतां मन्त्रिणोऽस्तोदयौ च।**

**मल्लारिः**—तत्रादौ गुरोरुदयास्तौ सार्धश्लोकेन कथयति।

मधुवक्रे चैत्रादौ यो मासगणो भवति स तद्वर्षीयचक्रेण आढ्यो युक्तः कार्यः स एव विश्वाप्तेन त्रयोदशभक्तेन चक्रेण ऊनितः। ततोऽसौ द्वाभ्यां हन्यते गुण्यते स तथा। ततो दशभिर्मासैर्धूर्जटिभिरेकादशादिनैर्युक् युक्तः सन् ऊर्ध्वस्थाने भैः सप्तविंशत्या शेषितो भक्तोर्वरितः। ततो भच्युतः सप्तविंशतेः शोध्यः सन् नक्षत्रात्मको द्व्याप्तः सन् भमुखो राश्यादिः स्यात्। राश्यादिः पृथक् अन्यस्थले स्थाप्यः। तत्र तिथिलवैः पञ्चदशभागैरूनोऽस्य पञ्चदशभागोनितस्य यो बाहुर्भुजस्तस्य येऽशका भागास्तेभ्योऽर्कैर्द्वादशभिराप्तांशा लब्धा भागास्तैर्भागैः पृथक्स्थो राश्यादिक ऊनयुतः कार्यः। क्वेत्यत आह। घटाजरसभे सति तुलादिषड्भस्थे राश्यादिके सति फलं तत्रैव ऋणं कार्यम्। मेषादिषड्भस्थे धनं कार्यं स राश्यादिरेव मधोश्चैत्रमारभ्य मासादिकः स्यात्। यावन्तो राशयस्तावन्तो मासाः। भागा दिनानि। कला घटिकाः। विकलाः पलानीति। तिथिदिनरहिताढ्य इति। अयं मासादिको द्विधा स्थानद्वये स्थाप्यः। तत एकस्थाने प्रथमं तिथिदिनैः पञ्चदशादिवसै रहितः कार्यः। तत्र तैः सावयवैर्मासैश्चैत्राद्गुरोरस्तः स्यात्। तथा द्वितीयस्थाने पञ्चदशयुक्तैस्तैर्मासैश्चैत्रादेव गुरोरुदयः स्यात्।

अत्रोपपत्तिः । वर्षादौ गुरुः साध्यः । स स्पष्टः कार्यः । तथा रविस्तत्र वर्षादौ शून्यमतो गुरुरेव शीघ्रकेन्द्रम् । यो हि गुरू राश्यादिः स मासादिकः कृतः । स यथा । चैत्रादौ मासगणस्ततो गुरुः । सार्धविश्वमासैर्गुरोरुदयास्तकालः शुद्धो भवति । अतो मासगणः सार्धविश्वभाज्यः । अत एव द्विघ्नो मासगणो यैः शेषित इति । अत्र चक्रोत्थमासगणे सार्धविश्वभक्ते यच्छेषं तदप्यत्र योज्यम्। एवमेकचक्रे मासगणः १३६ अयं सार्धविश्वभक्तः शेषं रूपम् । एकचक्रे इदं तदेष्टचक्रैः किमिति चक्रस्य गुणः १ । गुणगुणितचक्रं सार्धविश्वभक्तमासगणे योज्यमित्यत्र मासगणं प्रथममेव योजितं तत्तु चक्रतुल्यमेव । अतश्चक्राढ्य इति इदं सान्तरम् । यतः सार्धविश्वे संपूर्णो न भवति । अतो विश्वाप्तचक्रोनित इति। ग्रन्थारम्भे गुरोर्मासादिक्षेपः १०। ११ । अत उक्तं दशमासधूर्जटिदिनैर्युगिति । अग्रे कदोदयास्तः स्यात् । अतो भोग्यर्थि भच्युतो द्विगुणत्वाद्‌द्व्याप्त इति । अस्य कालांशान्तरे सूर्यान्तः पञ्चदशभागोनः कृतस्तस्मात् फलं साध्यम् । अतस्तद्भुजभागार्कलवोनयुक्तः कार्य इति । यतः परमभुजांशानां ९० द्वादशांशः ७।३०। सूर्यमन्दफलगुरुमन्दफलयोः परमयोर्योगस्सन्नो भवति । स मासादिको यावत् पञ्चदशादिनैरूनाधिकः क्रियते तावद्‌गुरूदयास्तयोरन्तरं त्रिंशद्दिनात्मकमेव भवति । अतस्तैर्मासैश्चैत्राद्‌गुरोरस्तोदयौ भवत इति शोभनमुक्तम्॥४ऽऽ

**विश्वनाथः**—अथ मासगणाद्‌गुरोरुदयास्तसाधनमाह चक्राढ्य इति । शके १५३२ चैत्रशुक्लप्रतिपद्यब्दाः ९० । चक्रम् ८। मासगणः २५ । चक्राढ्यः ३३ । चक्रं ८ विश्वाप्तं फलं मासाद्यम् ०।१८।२७।४१। अनेनोनितः ३२ । ११ ।३२।१९। द्विगुणितः ६४।२३।४।३८। दश–१० मासधूर्जटि–११ दिनैर्युक्तः ७५।४।४।३८। सप्तविंशत्या तष्टः २१।४।४।३८। अयं भ–२७ च्युतः ५।२५। ५५।२२। द्व्याप्तो भमुखो राश्यादिः २।२७।५७।४१। पृथक् २।२७।५७।४१ । पञ्चदशभिरंशैरूनः २।१२।५७।४१। अस्य भुजांशाः ७२।५७।४१। एषां द्वादशांशः ६।४।४८। तिथिभागोनराश्यादिकस्य मेषादिषड्राशिस्थितत्वादर्कांशेन पृथक्स्थो युक्तः जातश्चैत्रान्मासादिकः ३।४।२।२९ । अस्माद्‌गुरोरुदयास्तौ श्लोकार्धेनाह तिथिदिनेति । मासादिको द्विधा ३।४।२।२९। एकत्र तिथिदिनरहितः २। १९।२। २९। अपरत्र युक्तः ३।१९।२।२९ । एवं तैर्मासैर्मन्त्रिणो गुरोः क्रमेणास्तोदयौ स्तः । तद्यथा । तिथिदिनरहितेन मासाद्येन मासदिनघटिकाद्यनावयवेन चैत्राद्‌गुरोरस्तः स्यात् । अन्यत्रोदय इत्यर्थः ॥ ४ऽऽ ॥

**सुधाकरः**—यदि प्रतिपदन्ते रवेरस्तकालो न तदा प्रतिपदन्तात् सूर्यास्तकालावधि यदन्तरतो रविचन्द्रान्तरज्ञानार्थं स्थूलास्तिथिभोगघटिकाः षष्टिमिताः प्रकल्प्यानुपातः । यदि

घटीवृष्टया द्वादशभागान्तरं तदा दिनमानप्रतिपन्मानान्तरघटिकाभिः कियन्तोऽशाः। लब्धा अन्तरांशाः $= \frac{(\text{दि} \backsim \text{प्रति})१२}{६०} = \frac{\text{दिमा} \backsim \text{प्रतिम}}{५}$। अत्र यदि दिमा > प्रमा तदा फल धनमन्यथा ऋणमित्यस्य कारणमग्रे वक्ष्ये। अत उपपन्नं संस्कारचतुष्टयानयनम्।

आचार्येणायनाक्षजदृक्कर्मणोः संस्कारसममेव चन्द्रस्थानचन्द्रास्तलग्नयोरस्तकालान्तरं स्वल्पान्तरतः प्रकल्पितम्। तत्र सूर्यास्तानन्तरं चन्द्रस्थानास्तकालघटिकांशाः $= \frac{\text{स० भोद}}{२५}$ संस्कृता जाताः सूर्यास्तानन्तरं चन्द्रविम्बास्तकालघटिकांशास्तत्र यदि दिमा > प्रमा तदा चतुर्थफलं धनमन्यथा ऋणं कार्यमेवं सूर्यास्तानन्तरं चन्द्रविम्बास्तकालघटिकांशाः स्फुटाः। एते यदि चन्द्रस्य द्वादशकालांशेभ्योऽधिकास्तदा कालांशतो बहिःस्थितत्वाच्चन्द्रदर्शनं स्यादेवान्यथा न। अतः स्फुटांशाः $> १२^\circ$ वा स्फुटअं $- १२^\circ$। इदं धनात्मकं यदि तदा चन्द्रदर्शनम्। तत्र लाघवादाचार्येण $\frac{\text{स० भोद}}{२५}$ अस्मात् संस्कारादेव द्वादश शोधिताः अतो यदि $\frac{\text{स० भोद}}{२५} > १२$ अर्थात् स० भोद > ३०० तदा तत्संस्कारमानं धनमन्यथा ऋणम्। एवं फलचतुष्कसंस्कृतिर्धनं तदा चन्द्रविम्बस्य कालांशतो वहिःस्थितत्वाद्दर्शनं भविष्यत्यन्यथा नेति सर्वं निरवद्यम्। इति ३ श्लोकावशिष्टटीका॥

अथ 'गुरुस्त्वार्यजः' इत्याचार्योक्तत्वेन 'युगरविभगणाः ख्युघ्ट' इत्याद्यार्यभटवाक्यैनैकस्मिन् युगे रविभगणाः = ४३२००००। चन्द्रभगणाः = ५७७५३३३६।

द्वयोरन्तरेण चन्द्रमासाः = ५३४३३३३६। गुरुभगणाः = ३६४२२४। रविगुरुभगणानामन्तरे जाता एकस्मिन् युगे रविगुर्वोर्योगाः = ३९५५७७६। ततोऽनुपातो यद्येतैर्योगैर्युगचन्द्रमासा लभ्यन्ते तदैकेन योगेन कियन्तश्चन्द्रमासाः। लब्धा एकस्मिन् योगे चन्द्रमासाः

$$= \frac{५३४३३३३६}{३९५५७७६} = \frac{५३४३३३३६ \div २६४}{३९५५७७६ \div २६४} = \frac{२०२३९९}{१४९८४}$$

$$= १३\frac{७६०७}{१४९८४} = १३ \cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{३२+\cfrac{१}{१३+\cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{८}}}}}}}$$

तत एकस्य युतिकालस्यासन्नमानानि

$$१३\frac{१४}{१},\ १३\frac{१}{२},\ १३\frac{३३}{६५},\ १३\frac{४३०}{८४७},\ १३\frac{४६३}{९१२},\ १३\frac{८९३}{१७५९},$$

अथ चक्राल्पे मधुवक्रचन्द्रमासगणे कियन्तो रविगुर्वोर्योगा गतास्तदर्थं तृतीयासन्नमानम् $१३\frac{१}{२}$ $=\frac{२७}{२}$ इदं गृहीतम् । तथैकस्मिन् चक्रे षट्त्रिंशदधिकैकशतचन्द्रमाससमे कियन्तो योगा गतास्तदर्थं चतुर्थमासन्नमानम् $१३\frac{३३}{६५}=\frac{८७८}{६५}$ इदं गृहीतम् । ततः $\frac{८७८}{६५}$ एतैश्चन्द्रमासैरेको योगस्तदैकस्मिन् चक्रे कियन्तो लब्धाः

$$=\frac{१३६}{\frac{८७८}{६५}}=\frac{\frac{१३६\times६५}{६५}}{\frac{८७८\times६५}{६५}}=\frac{८८४०}{८७८}=१०+\frac{६०}{८७८}=१०+\frac{\frac{६०}{६५}}{\frac{८७८}{६५}}$$

अत्र योगानां प्रयोजनाभावात् त्यागे लब्धो योगशेषः $=\frac{६०}{६५}=\frac{१२}{१३}=\frac{१३-१}{१३}=१-\frac{१}{१३}$।

अथैकस्मिन् चक्रेऽयं योगशेषस्तदाऽभीष्टचक्रेषु किं लब्धा अभीष्टचक्रेषु योगशेषाः $=च-\frac{च}{१३}$ ते मासगणे क्षिप्तास्तद्युतितोऽग्रे चन्द्रमासा जातास्ते च तृतीयासन्नमानेन $\frac{२७}{२}$ अनेन तष्टाः शेषोऽन्तिमयोगतो गतचान्द्रमासास्ते चैकयुतिकालेभ्यः $\frac{२७}{२}$ एभ्यः शोध्या जाता मध्यममानेन मधुवक्रतोऽग्रे युतिसमयस्यैष्यचान्द्रमासाः । अथ 'चक्राढ्यो मधुवक्रमासनिचयो विश्वाप्तचक्रोनित' इत्यनेन यो जातस्तस्य द्योतको यदि 'मा' भवेत् तदा $\frac{मा}{\frac{२७}{२}}=\frac{\frac{मा\times२}{२}}{\frac{२७\times२}{२}}=\frac{२मा}{२७}$, अत्र यदि

लब्धिः $=ल$, शेषम् $=शे$ तदा $\frac{२मा}{२७}=ल+\frac{शे}{२७}=ल+\frac{\frac{शे}{२}}{\frac{२७}{२}}$ । अतः शिष्टम् $=\frac{शे}{२}$ । इदं युतिकालतो $\frac{२७}{२}$ ऽस्माच्छोधितं जाता मध्यममानेन मधुवक्रादनन्तरं युतेरेष्यचान्द्रमासाः $=\frac{२७}{२}-\frac{शे}{२}$ $=\frac{२७-शे}{२}$ । 'दशमासधूर्जटिदिनानि' ग्रन्थारम्भकालिको द्विगुणक्षेपस्तदर्थमग्रे गणना भविष्यति । एवं 'व्यासः स्याद्गमुखः' इत्यन्तमुपपन्नम् । 'मासौघतो द्विगुणितान्नगषड्भिराप्तरा-द्यादिना रहितमासगणो रविः स्यात्' इत्याचार्योक्तेन शेषसममासगणाद्रविः $=शे-\frac{२शे}{६७}$

$= \frac{६५ शे}{६७} = \frac{शे}{\frac{६७}{६५}} = \frac{शे}{१+\frac{२}{६५}}$ =शे, स्वल्पान्तरात्। अतश्चैत्रादेरनन्तरं युतिपर्यन्तं रविराशयः =शे जाताः। तेभ्यश्चैत्रादिमध्यममीनान्तमध्यवर्त्तिनः सौरलवाः शोध्यास्तदा युतौ राश्यादिको रविस्तावानेव च तत्र गुरुरपि स्यात्। अथ कदाचित् मध्यममेषादिश्चैत्रादौ कदाचिच्चामान्ते वैशाखादौ। अतश्चैत्रादिमध्यममेषादिमध्यवर्त्तिनः सौरलवाः कदाचिच्छून्यं कदाचिच्च त्रिंशत्। आचार्येण तन्मध्यमितिसमानाः पञ्चदशलवाः शोध्या गृहीताः। अतः पृथक्तिथिलःवैरूनः कृतस्ततो जातो युतिकालिको मध्यमगुरुः=शे−१२°। अत्र वास्तवावास्तवमध्यमगुर्वोरन्तरं परमं पञ्चदशभागसमं भवति तदुद्भवं गुरुमन्दफलं च स्वल्पान्तरत एकांशमितम्। गुरुपरममन्दफलस्यांशकपञ्चकत्वात् यतस्तन्मानम् $= \frac{५ \times ज्या\ १५^\circ}{त्रि} = \frac{५\times ३१}{१२०}$

$= \frac{३१}{२४} = १^\circ$। अथ 'शुद्धोऽब्ध्यद्रिषडग्निनागगृहतः स्यान्मन्दकेन्द्रं कुजात्' इत्यनेन गुरुमन्दकेन्द्रम् = ६ − ( शे−१५° )। अस्य स एव गोलो यश्च ( शे−१५° ) अस्य।

यतो—यदि शे− १५° = ० तदा केन्द्रम् =६− ( शे − १५° ) = ६।

यदि शे− १५° = ६ तदा के = ६ − (शे− १५° ) = ०।

यदि शे − १५° = ७ तदा के = ६ − ( शे − १५° ) = ११।

यदि शे − १५° = ११ तदा के = ६ − ( शे − १५° ) = ७।

अथ ज्याके = ज्या $\left\{ ६ − ( शे − १५^\circ ) \right\}$ = ज्या ( शे − १५°

ज्योत्पत्तिविधिना। अथ ज्यार्थं कल्प्यते शे − १५° अस्य भुजांशाः=भु तदा

'भुजांशत्रिंशांशविहीननिघ्ना रुद्राः समुद्रैर्गुणितास्ततश्च।
खार्कैर्मिते व्यासदले भुजज्या स्वल्पान्तराज्ज्यौतिषपण्डितानाम्'॥

इति मदुक्तेन सूत्रेण मन्दकेन्द्रज्या $= \left(११ − \frac{भु}{२०}\right) \frac{भु}{२०} \times ४ = \left(११ − \frac{भु}{२०}\right) \frac{भु}{५}$

$= \frac{११ भु}{५} − \frac{भु^२}{१००}$। ततो यदि त्रिज्यया १२० गुरोः परमं मन्दफलं पञ्चभागसमं तदेष्टमन्दकेन्द्रभुजज्यया किं लब्धं मन्दफलम् $= \frac{५ \times ज्याभु}{१२०} = \frac{ज्याभु}{२४} = \frac{११\times भु}{२४\times ५} − \frac{भु^२}{२४\times १००}$

$= \frac{११ भु}{१२०} − \frac{भु^२}{२४००} = \frac{भु}{११} − \frac{भु^२}{२४००}$ स्वल्पान्तरात्।। अत्राचार्येण ऋणात्मकं द्वितीयखण्डं त्यक्तं ततः प्रथमखण्डफलस्याल्पीकरणाय तस्य हरः [illegible] ाधिकः कृतस्ततो जातं गुरुमन्दफलं भागात्मकम् $= \frac{भु}{१२}$। अथ शे −१५° अस्योत्तरगोले इदं फलं धनं दक्षिणे ऋणम् तेन धनमन्दफले मन्दस्पष्टो गुरू रवितोऽग्रे ऋणे च फले पृष्ठतस्तत्र च स्वल्पान्तरादेकांशमित-

रविगतिकल्पनेन फलमितैरेव दिनैः स्पष्टगुरुमध्यमरव्योर्युतिरेष्या गता वा । तेन पृथक्स्थित-शेषमाने गुरुमन्दफलसंस्कारेण स्वल्पान्तरान्मध्यरविसमस्पष्टरविकल्पनया । शीघ्रोच्चसमे गुरौ-शीघ्रफलस्याभावाज्जातश्चैत्रादेरनन्तरं रविगुर्वोर्युतिकालो मासादिकः = शे + मफ भागाः अनेन 'मासादिकःस्यान्मधोः' इत्यन्तमुपपन्नम् । अथ 'जीवस्योर्व्या' इत्याचार्योक्तस्पष्टाधिकारान्त-वचनेन गुरोरुदयास्तयोर्मध्ये दिवसाः = ३० । तदर्धेन कालेन युतिकालात् प्रागस्तः परत्रो-दयः । अतस्तिथिदिनरहिताढ्य इत्याद्युपपद्यते । एवं वास्तवावास्तवमध्यमगुर्वोर्भेदेनैकदिनं मध्यस्पष्टरविभेदेन च दिनद्वयमिति दिनत्रयस्यान्तरं भवतीति सुधीभिर्विभाव्यम् ।। ४ऽऽ ॥

अथ मधुमुखमासाः सप्तभूनिघ्नचक्रैः
स्वशरयुग- ४५ लवाढ्यैः संयुता मार्गणघ्नाः ॥ ५ ॥
उदधिरससमेताश्छिद्रखेगामितष्टा
नवनवपरिशुद्धाः पञ्चभक्ताः पृथक्स्थाः ।
रसगुणदिनहीनाढ्या द्विधा चैत्रतस्तै-
र्भृगुजहरिदिगस्ताम्बूद्गमौ स्तः क्रमेण ॥ ६ ॥
नवमासभवस्ततोऽल्पपुष्टाः
पृथगास्थाः क्रमशस्तु तैर्युतोनाः ।
द्विधा युगवासरोनयुक्ता-
स्तोयास्तैन्द्र्युदयौ क्रमाद्भृगोः स्तः ॥७॥

**मल्लारिः**—अथ शुक्रोदयास्तौ कथयति सार्धवृत्तद्वयेन । अथ गुरूदयास्त-कथनानन्तरं शुक्रास्तोदयौ कथयति । मधुमुखमासाश्चैत्रादौ यो मासगणः । ते मासाः । सप्तभूमिर्निघ्नानि गुणितानि यानि चक्राणि ततस्तानि स्वशरयुगलवेन पञ्चचत्वारिंशदंशेन आढ्यानि युक्तानि । तैः संयुतास्ततो मार्गणघ्नाः पञ्च गुणाः । तत उदधिरसः चतुःषष्ट्या समेताः । ततश्छिद्राणि नव । खगामिनो ग्रहा नव । एवं नवनवतितष्टाःशेषा नवनवभ्यः परिशुद्धाः । तच्छेषाःपञ्चभक्ताः पृथक्-स्थाः कार्याः । ये पृथक्स्थास्तेऽपि स्थानद्वये स्थाप्याः । एकत्र रसगुणदिनैः षट्-त्रिंशद्दिनैर्हीना अन्यत्र युक्ताः । चैत्रतस्तैर्मासैर्यथाक्रम भृगुजस्य शुक्रस्य हरि-दिशि पूर्वस्यामस्तोऽम्बुनि पश्चिमायामुदयो भवेत् । ततो ये पृथगास्थास्ते नव-मासभवस्ततः सप्तविंशतिदिनाधिकनवमासेभ्यश्चेदल्पाःपुष्टा वा स्युस्तदा क्रमशः तैर्नवमासभवैस्त्रयुतोनाः कार्याः । ततस्ते द्विधा युगवासरैश्चतुर्भिर्दिनैरूनयुक्ताः क्रमाद् भृगोः शुक्रस्य तोयास्तः पश्चिमास्त ऐन्द्र्युदयः पूर्वोदयः । एतौ चैत्रात्तैर्मासैः स्त इत्यर्थः ।

अत्रोपपत्तिर्गुरूदयास्तवत् सुगमा ॥ ४८-६ ॥

**विश्वनाथः**—अथ शुक्रास्तोदयसाधनं सार्धवृत्तेनाह अथ मधुमुखेति । मधुमुखमासाः २५ । चक्रं ८ सप्तदशगुणितम् १३६ । अस्य शरयुग-४५ लवो मासाद्यः ३ । ० । ४० । ० अनेन सप्तदशगुणिता युक्ताः १३९ । ० । ४० । ० । एतैर्मधुमुखमासाः २५ संयुताः १६४ । ० । ४० । ० । मार्गण-५ घ्नाः ८२० । ३ । २० । ० उदधिरस-६४ समेताः ८८४ । ३ । २० । ० छिद्रखेगामि९९तष्टाः ९२।३।२०।०। नवनवभ्यः ९९शुद्धाः ६। २६।४०।०। पञ्च-५ भक्ताः १।११। २०।०। पृथक्स्थाः १।११।२०।०। एकत्र रसगुणदिन-३६ हीनाः ।०।२।२०। ०। अन्यत्र युताः २।१७।२०।०। तैर्मासैः क्रमेण चैत्राद्भृगुजस्य हरिदिगस्तः पूर्वास्तोऽम्बूदयः पाश्चिमोदयः स्यात् । यत्र हीनस्तत्र शुक्रस्य पूर्वास्तः । यत्र युक्तस्तत्र पाश्चिमोदयः । अथ शुक्रस्य पश्चिमास्तपूर्वोदयसाधनमाह नवमासेति । ये पृथक्स्थास्ते नवमासभघस्रैः सप्तविंशतिदिनाधिकनवमासेभ्यश्चेदल्पाः पुष्टा वा स्युस्तदा क्रमशस्तैर्नवमासभघस्रैर्युतोनाः कार्याः । पृथक्स्थाः १।११।२०।० नवमासभघस्र-९।२७ तोऽल्पा अतो नवमासभघस्रैर्युताः ११।८।२०।० द्वेधा ११।८।२०।० युग-४ वासरोनाः ११।४।२०।० अन्यत्र युक्ताः ११।१२।२०। ०। यत्र हीनास्तत्र भृगोः शुक्रस्य तोयास्तः पश्चिमास्तः । यत्र युक्तास्तत्रैन्द्र्युदयः पूर्वोदयः । एतौ चैत्रात्तैर्मासैः स्त इत्यर्थः ॥४८-७ ॥

**सुधाकरः**—आर्यभटानुसारेण युगे शुक्रशीघ्रोच्चभगणाः = ७०२२३८८

मध्यमशुक्रभगणाः = ४३२००००

---

शुक्रकेन्द्रभगणाः = २७०२२३८८

सहस्रगुणिताः कल्पे शुक्रकेन्द्रभगणाः = २७०२२३८८०००

ब्रह्मसिद्धान्तीयसिद्धान्तशिरोमणितः कल्पे शु. उं. भ. = ७०२२३८९४९२

म. शु. भ. = ४३२००००००

---

शु. के. भ. = २७०२२३८९४९२

'शौक्रं केन्द्रमजार्यमध्यगमिति' इत्याचार्योक्तेन द्वयोर्योगार्धं जाता वास्तवाः शुक्रकेन्द्रभगणाः

$$= \frac{२७०२२३८९४९२ + २७०२२३८८०००}{२} = \frac{५४०४७७७४९२}{२} = २७०२२३८८७४६ ।$$

एतैः कल्पचान्द्रमासा भक्ता लब्ध एककेन्द्रभगणकालः स एव शीघ्रोच्चमध्यमशुक्रयुतिकालश्च

$$= \frac{५३४३३३३६०००}{२७०२२३८८७४६} = \frac{२६७११६६६८०००}{१३५११९४३७३}$$

$$=१९\frac{१०४३९७४९१३}{१३५११९४३७३}=१९+\cfrac{१}{१+\cfrac{१}{३+\cfrac{१}{२+\cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{२०+\frac{२६०५३९}{२८५६२५५}}}}}}}$$

एतस्यासन्नमानानि $१९\frac{१}{१}$, $१९\frac{३}{४}$, $१९\frac{७}{९}$, $१९\frac{१०}{१३}$, $\frac{२०७}{२६९}$ । एतानि स्वल्पान्तरतो मिथः समानानि यतः सर्वाणि पूर्वभिन्नसमानि । अथ यदि $\frac{१०४३९७४९१३}{१३५११९४३७३}=$ वा तदा

वा $=\frac{३}{४}$ $\therefore$ ४ वा = ३ ⎫ द्वयोरन्तरेण ५ वा = ४
वा $=\frac{७}{९}$ $\therefore$ ९ वा = ७ ⎭ $\therefore$ वा $=\frac{४}{५}$ । ततो युतिकालः $=१९\frac{४}{५}=\frac{९९}{५}$ । अयं च चक्रमासाल्पस्य चैत्रचक्रमासगणस्य तक्षणार्थं गृहीतः ।

एवं वा $=\frac{१}{१}$ $\therefore$ वा = १ ⎫ द्वयोर्योगेन २७० वा = २०८
वा $=\frac{२०७}{२६९}$ $\therefore$ २६९ वा = २०७ ⎭ $\therefore$ वा $=\frac{२०८}{२७०}=\frac{१०४}{१३५}$ । अतो जातमासन्नमानम् $=१९\frac{१०४}{१३५}=\frac{२६६९}{१३५}$ । इदमेकचक्रमासगणस्य तक्षणार्थं गृहीतम् । तथाकृते

$$\frac{१३६}{\frac{२६६९}{१३५}}=\frac{१३६\times१३५}{\frac{२६६९}{१३५}\times१३५}=\frac{१८३६०}{२६६९}=६\frac{२३४६}{२६६९}=६\frac{\frac{२३४६}{१३५}}{\frac{२६६९}{१३५}}।$$

अतस्तक्षणे शेषम् $=\frac{२३४६}{१३५}=१७\frac{५१}{१३५}=१७\frac{१७}{४५}$ । ततोऽनुपातो यदि एकस्मिन् चक्रे इदं शेषमानं तदाऽभीष्टचक्रेषु किम् । लब्धमभीष्टचक्रसम्बन्धि शेषमानम् $=$ च $\left(१७+\frac{१७}{४५}\right)$ मासगणे सशेषे जाताश्चक्रसम्बन्धियुतितश्चैत्रवक्त्रपर्यन्तं चान्द्रमासास्ते च पुनः $\frac{९९}{५}$ एभि-स्तष्टाः । तत्र पञ्चगुणे सशेषे मासगणे पञ्चगुणितग्रन्थारम्भक्षेपं क्षिप्त्वा सर्वयोगः पूर्ववत् नक्-

नवतिमितेन तष्टः शेषं यदि शे तदाऽन्तिमयुतितश्चत्रवक्त्रपर्यन्तं चान्द्रमासाः = $\frac{शे}{५}$ एते युतिकालतो—$\frac{९९}{५}$ऽस्माच्छोध्याः। शेषं चैत्रादितोऽग्रिमयुतिपर्यन्तं चान्द्रमासाः = $\frac{९९}{५}$— $\frac{शे}{५}$ = $\frac{९९—शे}{५}$ = शे$_१$। चैत्रादित एतैश्चान्द्रमासैरेष्या शीघ्रोच्चशुक्रयोर्युतिः। अथ तत्र यावान् मध्यमो रविस्तावानेव मध्यमः शुक्रः। रविमन्दोच्चम् = २ रा। १८° = ३ रा स्वल्पान्तरादर्धाधिके रूप ग्राह्यमिति नियमाच्च। शुक्रमन्दोच्चं च = ३ रा। तथा स्व-ल्पान्तरतो द्वयोः परममन्दफलसाम्यं च। अतो द्वयोर्मन्दोच्चसाम्ये मध्यग्रहसाम्ये परम-मन्दफलसाम्ये च मन्दफलयोरपि सर्वभावेन साम्यम्। तत्र स्वल्पांतरतः शीघ्रोच्चसमे च मन्दस्पष्टशुक्रे शीघ्रफलाभावात्तदैव स्पष्टरविशुक्रयोश्च युतिर्जाता। अथ पञ्चतारास्पष्टाधिकारेण पश्चिमोदयशुक्रकेन्द्रांशाः = २४°। पश्चिमास्तकेन्द्रांशाः = १७७°। पूर्वोदयकेन्द्रांशाः = १८३°। पूर्वास्तकेन्द्रांशाः = ३३६°। पूर्वास्तपश्चिमोदयकेन्द्रांशान्तरांशाः = २४°—३३६° = ३८४° — ३३६° = ४८° शुक्रकेन्द्रगत्या भक्ता लब्धानि पूर्वास्तपश्चिमो-दययोरन्तरदिनानि ७८। तत्राचार्येण पञ्चतारास्पष्टीकरणे 'पूर्वास्तादुदयः परेऽनृजुगति' इत्यादिना ७५ दिनानि स्वल्पान्तरतो गृहीतानि। अत्र च ७२ दिनान्येव कल्पितानि मन्द-स्पष्टकेन्द्रगतितारतम्यात् 'द्वाभ्यां भृगोश्चोनिताः' इति स्वयमुपलक्षितत्वात्। अतस्तदर्ध-दिनेषु युतिकालात्प्रागस्तः परत उदय इत्युपपन्नं सर्वम्॥ ४ऽऽ-६॥

अथ शीघ्रोच्चशुक्रयुतितः प्राक् परतश्च युतिकालदलसमाने काले भार्धसमकेन्द्रलव नीचशुक्रयुतिः $\frac{९९}{५ \times २}$ = $\frac{९९}{१०}$ = ९ मा. + २७ दि.। एतैः सावयवैर्मासैर्भवति। अतः पृथक्स्थापितशीघ्रोच्चशुक्रयुतिकालेऽल्पपुष्टे क्रमशः ९ मा. + २७ दि.। एतैर्युतरहिते नीच-शुक्रयुतिस्ततः प्राक्केन्द्रलवत्रये शुक्रस्य पश्चिमास्तः परतश्च तावत्येव केन्द्रलवत्रये पूर्वोदयः। केन्द्रलवत्रयसंबन्धिनो दिवसाश्च यद्यपि अंशत्रयं केन्द्रगत्या विहृतमित्यादिना $\frac{३ \times ६०}{३७}$ = $\frac{१८०}{३७}$ = ५ स्वल्पान्तरात्तथाप्यत्राचार्येण ४ दिनानि कल्पितानि मन्दस्पष्टकेन्द्रगतितार-तम्यात्। तेन द्वेधा युगवासरोनयुक्ता इत्याद्युपपन्नम्॥ ७॥

**मासैर्नखैर्व्यरिदिनैरुदयास्तकालः**
**शुक्रस्य शुध्यति गुरोर्यदि सार्धविश्वैः।**
**सोऽन्यो भवेन्मधुमुखादथ तैर्युतश्चेत्**
**स्यात् तत्परोऽथ पुरतोऽपि विलोमशुद्ध्या॥८॥**

**मल्लारिः**----अथ गुरुशुक्रयोरुदयास्तकालपरिवर्तमाह। शुक्रस्योदयास्त-कालः पूर्वास्तपूर्वोदयपश्चिमास्तपश्चिमोदयपरिवर्त्तो व्यरिदिनैः षड्दिनरहितैर्नखै-

विंशतिमासैः शुध्यति सम्पूर्णो भवति । गुरोः सार्धविश्वैर्मासैः शुध्यति । मधुमुखाच्चैत्रादेस्तैर्युतश्चेत् तदाऽन्यः स्यात् । विलोमशुद्धया पुरतोऽपि पूर्वमेव तैः स्वमासैरुदयास्तः स्यात् । एतदुक्तं भवति । यस्योदयास्तयोर्मासादिकश्चैत्रादितः कालः स एभिः परिवर्त्तमासैर्युक्तस्तैरेव मासैश्चैत्रादेः स एवोदयास्तः स्यात् । चेन्न्यूनीकृतस्तदा तैर्मासैश्चैत्रादेः पूर्वमुदयास्तः स्यादित्यर्थः ।

अत्रोपपत्तिः । प्रत्यक्षसिद्धा सुगमा च ॥ ८ ॥

**विश्वनाथः**----अथ शुक्रगुर्वोरुदयास्तकालपरिवर्त्तमाह मासैरिति । शुक्रस्य पूर्वोक्तो य उदयास्तकालः स व्यरिदिनैः षड्दिनरहितैर्नखैर्विंशतिमासैः १९।२४ शुध्यति निःशेषो भवति । शुक्रस्य पूर्वोदयात् पूर्वोदयः परोदयात् परोदयोऽनेन १९। २४ कालेन भवतीत्यर्थः । एवमस्तोऽपि स्पष्टाधिकारप[illegible]ठितानां द्विमासस्येत्यादीनां मासानां योग एतत्तुल्यः १९।२४ इति सुगमा वासना । एवं गुरोर्यदि उदयास्तकालः स सार्धविश्वैर्मासैः १३।१५ शुध्यति । तैर्मासैः पूर्वोक्तैः स उदयास्तकालो युतश्चेत् तदा मधुमुखादन्यो भवति । सोऽपि चेद्युतस्तदा-तत्परो भवति । तैर्मासैस्तस्मादुदयास्तादग्रेऽन्योदयास्तकालः स्यादित्यर्थः । विलोमशुद्धया पुरतोऽपि पूर्वमेव तैर्मासैरुदयास्तकालः स्यात् ॥ ८ ॥

**सुधाकरः**—पूर्वसाधितेन मासात्मकेन युतिकालेनात्र वासना सुगमा ॥ ८ ॥

**प्रथमे व्यगुचन्द्रदोर्गृहेंऽशाः**
**स्वदलाढ्यास्त्वपरे नगाब्धियुक्ताः ।**
**चरमे दलिता नगाद्रियुक्ता**
**व्यगुविधुदिग् विशिखोऽङ्गुलादिकः स्यात् ॥९॥**

**मल्लारिः**----अथ चन्द्रशरं साधयति । व्यगुचन्द्रस्य विराहुचन्द्रस्य दोर्गृहे भुजराशौ प्रथमे सति अंशा भागाः स्वदलेन स्वार्धेन आढ्या युक्ताः कार्याः सोऽङ्गुलादिकःशरः स्यात् । अपरे द्वितीयराशौ ये भागास्ते नगाब्धिभिः सप्तचत्वारिंशता युक्ताः कार्याः स शरः स्यात् । चरमे तृतीयराशौ ये भागास्ते दलितास्ततो नगाद्रिभिः सप्तसप्तत्या युक्ता व्यगुविधुदिक् विराहुचन्द्रो यस्मिन् गोले तद्दिक् शरो भवतीत्यर्थः । अत्र शरानयने राशीनामंशा न कार्याः । अधस्तना यथावस्थिता एव भागा ग्राह्याः ।

अत्रोपपत्तिः । प्रथमराशौ भागाः स्वार्धयुक्ताः शरो भवतीति पूर्वमेव ग्रहण युक्तिः प्रतिपादितास्ति । द्वितीयराश्यन्ते शरः ७७ । अत्र प्रथमराश्यन्ते शरः ४७ । अतो द्वितीयराश्यादितो ये भागास्तैर्युक्ताः ४७ एते शरो भवत्येव । तथैव

तृतीयराश्यादेर्भागा दलिता द्वितीयराश्यन्तशरेणानेन ७७ युक्ताः शरः स्यादेवेति युक्तमुक्तम्। पूर्वं ग्रहणे चन्द्रशर उक्तः स त्रिंशदल्पभुजभागमध्यस्थ एव। अन्यत्र बहुषु भुजभागेषु बह्वन्तरितः स्यात्। अत उदयास्तशृङ्गोन्नतिमहयोगादिविधावनेन प्रकारेण शरः कार्यो न पूर्वेणेति ॥ ९ ॥

**विश्वनाथः**—अथ चन्द्रस्य शरसाधनमाह प्रथमेति। विराहुचन्द्रस्य दोर्गृहे भुजराशौ प्रथमे सति अंशाः स्वदलेन स्वार्धेन युक्ताः कार्याः सोऽङ्गुलादिकशरः स्यात्। अपरे द्वितीये राशौ ये भागास्ते नगाब्धिभिः ४७ युक्ताः कार्याः स शरः। चरमे तृतीये राशौ भागा दलितास्ततो नगाद्रिभिः ७७ युक्ता व्यगुविधुदिक् विराहुचन्द्रो यस्मिन् गोले तद्दिक् शरोऽङ्गुलादिकः स्यात्। अत्र शरानयने राशीनामंशा न कार्या अधस्तना यथावस्थिता एव भागा ग्राह्याः। चन्द्रस्य शरसाधनार्थं सूर्यग्रहणे कृतौ तिथ्यन्तकालीनौ चन्द्रराहू तावेव स्थापितौ। चन्द्रः ८। ५। २६। २०। राहुः। २। ११। ४१। १८। व्यगुविधुः ५। २३। ४५। २। अस्य भुजः ०। ६। १४। ५८। भुजस्य प्रथमराशौ विद्यमानत्वादंशाः ६। १४। ५८ स्वार्धेन ३। ७। २९। युक्ता जातः शरः ९। २२। २७। व्यगुविधोरुत्तरगोलत्वादुत्तरः ॥ ९ ॥

**सुधाकरः**—१० श्लोकेन ०, ३०°, ६०°, ९०° व्यगुचन्द्रभुजांशेषु क्रमेण शरांगुलानि

भुजांशाः = ०। ३०। ६०। ९०

शरांगुलानि = ०। ४५। ७८। ९०

तत्र प्रथमं त्रिंशदंशपर्यन्तं यदि त्रिंशदंशैः ४५ शरांगुलानि लभ्यन्ते तदेष्टभुजांशैः किम्। जातानि प्रथमराशौ शरांगुलानि $= \frac{\text{इ अं} \times ४५}{३०} = \frac{३}{२}\,\text{इ अं} = \left(१ + \frac{१}{२}\right)$ इ अं। द्वितीयराशौ स्वल्पान्तरतः ४५ स्थाने ४७ गृहीतानि तथा ७८ स्थाने च ७७ गृहीतानि। त्रिंशदंशैस्तयोरन्तरं त्रिंशत्समं तदा द्वितीयराशिभुक्तांशैः किम्। लब्धान्तरं $= \frac{३० - \text{भु अं}}{३०} = \text{भु अं}$, सप्तचत्वारिंशता युतं शरमानं भवेत्। एवं तृतीयराश्यादौ शरः = ७७ ; तदन्ते च शरः = ९०। ततो यदि त्रिंशदंशैस्तयोरन्तरं १३ लभ्यते तदा तृतीयराशिगतांशैः किम्। लब्धमन्तरम् $= \frac{१३\,\text{ग अं}}{३०} = \frac{\text{ग अं}}{२ + \frac{४}{१३}} = \frac{\text{ग अं}}{२}$ स्वल्पान्तरतः। इदं ७७ सप्तसप्ततिमिते युक्तं जातं स्वल्पान्तरात् शरमानमिति सर्वमुपपन्नम् ॥ ९ ॥

**नृपतिथिमनुविश्वरुद्रगोद्रि-**
**श्रुतिवसुधा१६।१५।१४।१३।११।९।७।४।१।शरखण्डकानि तैर्यत्।**

**व्यगुविधुभुजतोऽपमोक्तिवद्वा**
**व्यगुविधुदिग् वाशिखोऽगुलादिकः स्यात् ॥ १० ॥**

**मल्लारिः**—इदानीं खण्डकैःसूक्ष्ममप्याह । व्यगुचन्द्रभुजांशदशांशमित-खण्डकं शेषं भोग्यखण्डाहतिदशांशयुक्तं सदंगुलादिकः शरः स्यादित्यर्थः । उपपत्तिरत्रातिस्फुटा ॥ १० ॥

**विश्वनाथः**—अथ प्रकारान्तरेण शरानयनमाह नृपेति । व्यगुविधुः ५ । २३ । ४५ । २ । अस्य भुजांशाः ६ । १४ । ५८ । दशभिर्भक्ता लब्धखण्डं शून्यं० शेषं ६ । १४ । ५८ एष्यखण्डेन १६ गुणितं ९९ । ५९ । २८ दशभिर्भक्तं फलम् । ९ । ५९ ॥ अनेन गतखण्डयोगो युक्तो जातोऽगुलादिः शर उत्तरः ९ । ५९ ॥ १० ॥

**सुधाकरः**—अत्रलघुज्यया दशदशभागोत्तरतोव्यगुचन्द्रभुजांशानामंगुलात्मकं शरमानं त्रिज्यया १२० परमं शरमानं नवत्यंगुलमितं लभ्यते तदा व्यगुचन्द्रभुजज्यया किमित्यनुपातेनानीय शरखण्डकानि पठितानि। तद्यथा—अंगुलात्मकं शरमानम् = $\frac{\text{९० ज्याव्यच}}{\text{१२०}} = \frac{\text{३ ज्याव्य}}{\text{४}}$ ।

| सपातचन्द्राः = | १०° | २०° | ३०° | ४०° | ५०° | ६०° | ७०° | ८०° | ९०° |
|---|---|---|---|---|---|---|---|---|---|
| ज्याः = | २१ | ४१ | ६० | ७७ | ९२ | १०४ | ११३ | ११८ | १२० |
| शरांगुलानि = | १६ | ३१ | ४५ | ५८ | ६९ | ७८ | ८५ | ८९ | ९० |
| शरखण्डानि = | १६ | १५ | १४ | १३ | ११ | ९ | ७ | ४ | १ |

अत उपपन्नम् शेषमन्यत् सुगमम् ॥ १० ॥

**लघुगोऽल्प इनादुदेति पूर्वे भूयान् भूरिगतिर्ग्रहः प्रतीच्याम् ।**
**भूयाँल्लघुगः परत्र चास्तं प्राच्यां भूरिजवो लघुः प्रयाति ॥ ११ ॥**

**मल्लारिः**—अथ ग्रहाणां पूर्वपश्चिमदिशोरुदयास्तकारणमाह लघुगोऽल्प इति । यो ग्रह इनात् सूर्यात् लघुगोऽल्पगतिः । अल्पश्च भागैरपि न्यूनः स पूर्वस्यामुदयं प्राप्नोति । यो ग्रहो भूयान् सूर्यापेक्षया भागैरधिकः । भूरिगतिः सूर्याधिकगतिश्च स प्रतीच्यां पश्चिमायामुदेति उदयं प्राप्नोति । योभूयान् सूर्यादधिकभागो लघुगः सूर्यादल्पगतिः स परत्र पश्चिमदिशि अस्तं गच्छति । यो भूरिजवःसूर्याधिकगतिःलघुः सूर्याद् भागैरल्पः स प्राच्यां पूर्वदिशि अस्तं याति। इदं सूर्यकृतोदयास्तलक्षणं दैनंदिनोदयास्तौ ग्रहाणां प्रवहानिलवशेन पूर्वपश्चिमयोर्वर्त्तेते एवेति ।

अत्रोपपत्तिः । सूर्यादल्पोऽल्पगतिश्च ग्रहः सूर्यात्पूर्वे राश्यंशे स्थितोऽतः सूर्योदयात् पूर्वमेव तस्योदयः । अतः कालांशतुल्यान्तरेण तस्य पूर्वोदयःस्यात् । यःसूर्या-

दधिकः। अधिकगतिश्च ग्रहः। स पश्चिमायामुदेति, विलोमत्वात्। यः सूर्यादधिकः। अल्पगतिस्तं ग्रहं त्यक्त्वा सूर्योऽग्रतो याति। अतः पश्चिमायामस्तः। यो भागैरल्पो गत्याधिकः स सूर्यं प्रति गच्छति। अतोऽल्पत्वात् पूर्वस्यामस्तो भवतीत्युपपन्नम् ॥ ११ ॥

**विश्वनाथः**—अथोदयास्तयोर्दिग्ज्ञानमाह। लघुगोऽल्प इति। यो ग्रह इनात्सूर्याल्लघुगोऽल्पगतिरल्पो भागैर्न्यूनश्चेत्तदा स ग्रहः पूर्वे पूर्वस्यां उदेति उदयं प्राप्नोति। यो ग्रहो भूयान् सूर्यापेक्षयात्राधिकः। भूरिगतिरधिकगतिश्च तदा प्रतीच्यां पश्चिमायां दिशि उदेति। यो भूयान् सूर्यादधिकभागो लघुगः सूर्यादल्पगतिः स ग्रहः परत्र पश्चिमदिश्यस्तं याति। यो ग्रहो भूरिजवः सूर्याधिकगतिः। लघुः सूर्यात् भागैरल्पः स ग्रहः प्राच्यां पूर्वदिशि अस्तं याति। एतद्बुधशुक्रयोः। अन्येषां न घटते स्वल्पगतित्वात् ॥ ११ ॥

**सुधाकरः**— 'रवेरूनभुक्तिर्ग्रहः प्रागुदेति' इति भास्करप्रकारेणोपपत्तिः स्फुटा ॥ ११ ॥

**भास्करा नगभुवो गुणचन्द्रा**
**भूभुवो दिविसदास्तिथयोऽब्जात्।**
**प्राक्तनैर्निगदिताः समयांशा**
**वक्रिणोर्भृगुविदोः क्षितिहीनाः ॥ १२ ॥**

**मल्लारिः**—अथोदयास्तनिमित्तं कालांशानाह। अब्जात् चन्द्रमारभ्य ग्रहाणामेते कालांशाः स्युः। भास्करा द्वादशभागाश्चन्द्रस्य। नगभुवः सप्तदश भौमस्य। गुणचन्द्रास्त्रयोदश बुधस्य। भूभुव एकादश गुरोः। दिविसदो नव शुक्रस्य। तिथयः पञ्चदश मन्दस्य। प्राक्तनैः पूर्वाचार्यैरेते कालांशा निगदिताः। भृगुविदोः शुक्रबुधयोः। वक्रिणोः सतोस्ते कालांशाः क्षित्या एकेन हीनाः।

अत्रोपपत्तिः। अत्रोदयोऽस्तो वा तुल्यैरेव कालांशैः लक्षणोपायैर्भवति। कालांशा यथा। यद्दिने ग्रहस्योदयोऽस्तो वा आकाशे ज्ञातस्तद्दिने सूर्यग्रहयोरन्तरे लग्नसूर्यान्तरवत् लङ्कोदयैः कालः साध्यः। ता घटिकाः षड्गुणा भागाः स्युः। ते कालस्यांशाः। अतः कालांशा इत्यन्वर्थं नाम। अत्र बुधशुक्रयोर्वक्रिणोः सतो निरेकैस्तैः कालांशैस्तयोरुदयास्तौ भवत इत्युपपन्नम् ॥ १२ ॥

**विश्वनाथः**—इदं सूर्यकृतोदयास्तलक्षणम्। अथोदयास्तज्ञानार्थं कालांशानाह भास्करा इति। भास्करा इत्यादयोऽब्जात् चन्द्रात् प्राक्तनैः पूर्वाचार्यैः समयांशाः कालांशा निगदिताः। चन्द्रस्य द्वादश १२। भौमस्य नगभुवः १७। बुधस्य गुणचन्द्राः १३। गुरोर्भूभुवः ११। शुक्रस्य दिविसदः ९। शनेस्तिथयः १५।

भृगुविदोः शुक्रबुधयोर्वक्रिणोर्विक्रगत्योः सतोस्तदा तदुक्तकालांशाः क्षितिहीना एकोनाः कार्याः ॥ १२ ॥

**सुधाकरः**— अत्रोपलब्धिरेव वासना भास्करादिभिरपि तथैवोक्तत्वात् ॥ १२ ॥

**खाम्बुधयः खयमाः खभुजङ्गाः**
**खाङ्गमिताः खदश क्रमशः स्युः ।**
**पातलवाः कुसुताद्बुधभृग्वो-**
**र्मध्यमचञ्चलकेन्द्रविहीनाः ॥ १३ ॥**

**मल्लारिः**----अथ भौमादीनां पातानाह । कुसुताद्भौममारभ्य ग्रहाणामेते पातस्य लवा भागाः स्युः। खाम्बुधयश्चत्वारिंशद्भागा भौमस्य । खयमा विंशतिर्भागा बुधस्य । खभुजंगा अशीतिभागा गुरोः । खांगमिताः षष्टिभागाः शुक्रस्य । खदश शतमिता भागाः शनेः । बुधभृग्वोः पातांशा मध्यमेनाहर्गणोत्पन्नेन चञ्चलकेन्द्रेण शीघ्रकेन्द्रेण विहीनाः कार्याः ॥

अत्रोपपत्तिः । मन्दस्फुटो ग्रहः शीघ्रप्रतिमण्डले भ्रमति विमण्डलाश्रितः सन्निति। तस्मान्मन्दस्फुटादेव शरः साध्यते इत्युपपत्तौ ग्रहः सपातः कार्यः। अत्र विमण्डलक्रान्तिमण्डलयोः सम्पातस्तत्र ग्रहस्य शराभावः।एवमत्र सम्पाते विक्षेपपाते क्रान्तिमण्डले यो राश्याद्यवयवः स एव पातः । एवं ग्रहाणां पातलवाः सिद्धाः पाठपठिताः। एवं पातात् षड्भान्तरेऽपि शराभावः। एवं बुधशुक्रयोः पातलवाः शीघ्रप्रतिमण्डलस्था एव पठिताः सन्ति स्वशीघ्रकेन्द्रभागैरधिकाः कृत्वा पठिताः। अतः शीघ्रकेन्द्रविहीना एते पाताः । मन्दस्फुटग्रहयुक्तपातात् शरः साध्य इत्यग्रेऽपि वक्ष्यतीत्युपपन्नम् ॥ १३ ॥

**विश्वनाथः**—अथ भौमादीनां पातभागानाह खाम्बुधय इति । खाम्बुधय इत्यादयः कुसुताद्भौममारभ्य पातलवाः स्युः । खाम्बुधयो ४० भौमस्य । खयमा २० बुधस्य । खभुजंगा ८० गुरोः । खांगमिताः ६० शुक्रस्य । खदश १०० शनेः । बुधभृग्वोः पातांशा मध्यमेनाहर्गणोत्पन्नेन चलकेन्द्रेण विहीनाः कार्याः ॥ १३ ॥

**सुधाकरः**—यथा सूर्यचन्द्रस्पष्टाधिकारेऽत्यल्पगतित्वाद्रविमन्दोच्चं स्थिरं बस्वद्रिभागमितं पठितं तथाऽत्रापि भौमादिपातानां चिरस्थिरत्वात् स्थिरभागान् चक्रशुद्धान् विधाय शेषाः पातलवाः पठिताः । बुधशुक्रयोस्तु 'ये चात्र पातभगणाः पठिता ज्ञभृग्वो' रित्यादिभास्करविधिना गणितागतः पातो मध्यमशीघ्रकेन्द्रेणाधिको वास्तवः । स च चक्रतो विशोध्यः एवं गणितागतपातस्य चक्रशुद्धत्वात् तत्र मध्यमचञ्चलकेन्द्रविहीनं कार्यमिति ॥ १३ ॥

**कुद्वित्र्यब्धियुगाश्विनो दलचयश्चेत् षड्भपुष्टं चलं**
**केन्द्रं चक्रविशुद्धमस्य भमितांशैक्यं लवघ्नागतात्।**
**त्रिंशल्लब्धयुतं कुजात्कुयमलाब्धीन्दुद्रिभक्तं क्रमा-**
**त्तद्धीना धृतिरिष्विला गुणभुवो गोऽब्जा इनाद्राक्श्रुतिः॥१४॥**

**मल्लारिः**—अथ ग्रहाणां शीघ्रकर्णानयनमेकवृत्तेनाह। अयं दलानां खण्डानां चयः स्यात्। कुरेकः। द्वौ। त्रयः। अब्धयश्चत्वारः। युगानि चत्वारि। अश्विनौ द्वौ। एतानि षट् खण्डानि स्युः। चलकेन्द्रं चेत् षड्भपुष्टं षड्राश्यधिकं तदा चक्रात् द्वादशराशिभ्यः शुद्धम्। अस्य चलकेन्द्रस्य यानि भानि राशयः। तन्मितांशानामैक्यं कार्यम्। लवघ्नागतात् भागगुणितभोग्यखण्डात् त्रिंशता यल्लब्धं तेन तदैक्यं युतं कार्यम्। ततः कुजात् मंगलमारभ्य कुयमलाब्धीन्दुद्रिभक्तम्। भौमस्यैकभक्तम्। बुधस्य द्विभक्तम्। गुरोश्चतुर्भक्तम्। शुक्रस्यैकभक्तम्। शनेः सप्तभक्तम्। क्रमात् तत्फलेन एतेऽङ्का ऊनाः कार्याः। धृतिः अष्टादश भौमस्य फलेन हीना भौमस्य शीघ्रकर्णः। इष्विलाः पञ्चदश बुधस्य। गुणभुवस्त्रयोदश गुरोः। गोऽब्जा एकोनविंशतिः शुक्रस्य। इना द्वादश शनेरेतेऽङ्काः फलेन हीनाः सन्तो यच्छेषं तद्ग्रहाणां द्राक्श्रुतिः शीघ्रकर्णः स्यात्।

अत्रोपपत्तिः। अत्र कोटिज्यान्त्यफलज्ययोर्मृगकर्क्यादिशीघ्रकेन्द्रे योगान्तरं कोटिः। शीघ्रकेन्द्रदोर्ज्या भुजः। अनयोर्वर्गैक्यपदं कर्णः। शीघ्रप्रतिमण्डले व्यासार्धमत्र तु दोर्ज्याकोटिज्यादिविधिनास्ति। अतः प्रतिराशिशीघ्रकर्णः साधितः। शीघ्रफलयुतराशित्रयं प्रथमं पदम्। शीघ्रफलोनं राशित्रयं द्वितीयम्। अतः षड्राशिमध्ये पदद्वयमस्त्येव। अतः षट् खण्डान्येव कर्णार्थं शीघ्रकेन्द्रात् साधितानि। तानि भवमितां त्रिज्यां परिकल्प्य भौमशीघ्रफलान्त्यज्यातः साधितानि। ग्रहाणां परमशीघ्रफलज्या भिन्ना भिन्ना। अतो हि भौमशीघ्रपरमफलज्या—८१ यामस्यां यद्येतानि खण्डानि तदेष्टग्रहपरमशीघ्रफलज्यासु कान्यतो बुधादीनां यमलाब्धीन्दुद्रिभक्तमुक्तं भौमस्य यथास्थितत्वात् कुभक्तमिति। अनेन फलेन परमशीघ्रकर्णा यावदूनीक्रियन्ते तावदिष्टशीघ्रकर्णा भवन्ति। परमशीघ्रकर्णास्तु त्रिज्यान्त्यफलज्यायोगतुल्याः। यथा भौमस्यान्त्यफलज्या ८१। इयं त्रिज्यायुता २०१। यदि त्रिज्यायामस्यां १२० परमभौमशीघ्रकर्णोऽयं २०१ तदेष्टायां भवतुल्यायां किमिति जाताः १८। अत्र भवमितित्रिज्यायां सप्तमितान्त्यफलज्या। ७। अतस्त्रिज्यान्त्यफलज्यायोगे परमशीघ्रकर्णोऽयं १८ युक्तः। एवं त्रिज्यान्त्यफलज्यान्तरेण परमाल्पशीघ्रकर्णः। अत्र भौमस्य कुभक्तमिति यदुक्तं तेन सर्वखण्डयोगे १६। धृतिशुद्धं द्वयं परमाल्पः शीघ्रकर्णः

चायुक्तः । तत्साधितोऽग्रे यः शरः स च त्रिज्याल्प-११ शीघ्रकर्णे पुनार्द्विभक्तः कार्य इति युक्तः । अन्यत्र महदन्तरं स्यात् । त्रिज्याधिकशीघ्रकर्णे नान्तरं तत्र स्वांऽल्पून इत्येव । अथवा तत्रापि चेत् द्विभक्तस्तदा किञ्चिदन्तरः शरः स स्वल्पान्तरत्वादंगीकर्तव्यः । अतो न शोषायेति । एवमन्येषामपीति । अत एव तद्धीना धृतिरित्युपपन्नम् ॥ १४ ॥

**विश्वनाथः**—अथ शरसाधनार्थं शीघ्रकर्णसाधनमाह कुद्वीति । शके १५३४ वैशाखशुक्लपूर्णिमायां भौमादीनां स्पष्टक्रान्तिसाधनं क्रियते तत्र भौमादीनामन्तिमशीघ्रकेन्द्राणि । भौमस्यशीघ्रकेन्द्रम् । ३ । १ । ४ । ५७ । बुधस्य शीघ्रकेन्द्रम् । १ ।१३ । २५ । १७ । गुरोः शीघ्रकेन्द्रम् ८ । २१ । २०।५८। शुक्रस्य शीघ्रकेन्द्रम् ३ । ४ । ५९। ५२ । शनेः शीघ्रकेन्द्रम् २। २ । ५०।०। अथ भौमस्य शीघ्रकर्णः साध्यते । भौमस्य शीघ्रकेन्द्रम् ३ । १ । ४ । ५७ । अस्य राशितुल्यगतखण्डकत्रययोगः ६ । शेषेण १ । ४ । ५७ एष्यखण्डम् । ४ । गुणितं ४ । १९ । ४८ । त्रिंशद्भक्तं फलम् ० । ८ । ३९ । अनेन खण्डयोगो ६ युक्तः ६ । ८ । ३९ । एकभक्तः ६ । ८ । ३९ । एतेनाष्टादश १८-रहिता जातो भौमस्य शीघ्रकर्णः ११ । ५१ । २१॥ बुधस्य शीघ्रकेन्द्रात्फलम् २ । ५।४१। द्विभक्तम् । १ ।२। ५० । पञ्चदश १५ मध्ये रहितं जातो बुधस्य शीघ्रकर्णः १३। ५७ । १० ॥ गुरोः शीघ्रकेन्द्रात्फलम् ७ । ९ । १२ । चतुर्भक्तम् । १ । ४७ । १८ । इदं त्रयोदशमध्ये रहितं जातो गुरोः शीघ्रकर्णः ११ । १२ । ४२ ॥ शुक्रस्य केन्द्रात्फलम् ६ । ३९ । ५८ । एकभक्तम् ६ । ३९।५८। इदमेकोनविंशति-१९ मध्ये रहितं जातः शुक्रस्य शीघ्रकर्णः १२ । २० । २ ॥ शनेः केन्द्रात्फलम् । ३ । १७ । ० । सप्तभक्तं फलम् । ० । २८ । ८ । इदं द्वादशमध्ये रहितं जातः शनेः शीघ्रकर्णः । ११ । ३१ । ५२ ॥ १४ ॥

**सुधाकरः**—अत्रैकादशमितां त्रिज्यां प्रकल्प्य कुजादीनां शीघ्रश्रुतयः साधिताः । तद्यथा। रुद्रत्रिज्यायां भौमादीनामन्त्यशीघ्रफलज्या, भौ=७ । बु=४ । बृ=२ । शु = ८ । श = १ । अन्त्यफलज्याधिकत्वात् शुक्रस्यैव केन्द्रेषु षड्राशिषु प्रतिराशिकर्णाः साध्यन्ते । तत्र 'वान्त्यफलत्रिमौर्व्योर्वैक्यराशेः' इत्यादिभास्करविधिना

| | | | | | | |
|---|---|---|---|---|---|---|
| केन्द्रम् = | १ रा | २ रा | ३ रा | ४ रा | ५ रा | ६ रा |
| एतद्भुजः = | १ | २ | ३ | २ | १ | ० |
| कोटिः = | २ | १ | ० | १ | २ | ३ |
| कोटिज्या×अंफ = | १५३ | ८८ | ० | ८८ | १५३ | १७६ |
| त्रि$^{२}$+अंफ$^{२}$ = | १८५ | १८५ | १८५ | १८५ | १८५ | १८५ |
| शीघ्रकर्णवर्ग = | ३३८ | २७३ | १८५ | ९७ | ३२ | ९ |

आसन्नमूलेन शीक = $१८\frac{४}{१०}$ । $१६\frac{५}{१०}$ । $१३\frac{६}{१०}$ । $९\frac{८}{१०}$ । $५\frac{७}{१०}$ । ३

उच्चकर्णशीघ्रकर्णान्तरम्

अं = $\frac{६}{१०}$ । $२\frac{५}{१०}$ । $५\frac{४}{१०}$ । $९\frac{२}{१०}$ । $१३\frac{३}{१०}$ । १६

अन्तरखण्डानि = $\frac{६}{१०}$ । $१\frac{९}{१०}$ । $२\frac{९}{१०}$ । $३\frac{८}{१०}$ । $४\frac{१}{१०}$ । $२\frac{७}{१०}$

अर्धाधिके रूपग्रहणेन

अन्तरखण्डानि = १ । २ । ३ । ४ । ४ । २

अत्र खण्डानां योगस्य षोडशसमत्वादन्तिमखण्डेऽर्धाधिके रूपं ग्राह्यमिति नियमो न स्वीकृतः। एवमुच्चकर्णशीघ्रकर्णान्तरभवानि शुक्रस्य खण्डानि सिद्धानि। अथ त्रिज्यान्त्यफलज्यायोगेन कुजादीनामुच्चकर्णाः। कु = १८ । बु = १५ । गु = १३ । शु = १९ । श=१२। अत्र शुक्रोच्चकर्णेनान्येषामुच्चकर्णा यदि विभज्यन्ते तदार्धाधिके रूपं ग्राह्यमिति नियमेन रूपाण्येव लब्धयो भवन्तीति मनसि सम्प्रधार्यम्।

यदि शुक्रान्त्यफलज्यामपहायान्यग्रहान्त्यफलज्यामानम् = अ।

तदा पूर्वविधिना ग्रशीक$^२$ = त्रि$^२$ + अ$^२$ + २ अ . कोज्याके

= त्रि$^२$ + अ$^२$ + २ अ . त्रि − २ अ . उज्याके

= ( त्रि + अ )$^२$ − २ अ . उज्याके

स्वल्पान्तरत आसन्नमूलग्रहणेन

$$\text{ग्रक} = (\text{त्रि} + \text{अ}) - \frac{\text{अ. उज्याके}}{\text{त्रि} + \text{अ}} = \text{उक} - \frac{\text{अ. उज्याके}}{\text{उक}}$$

$\therefore$ ग्रउक − ग्रक = $\frac{\text{अ. उज्याके}}{\text{उक}}$ ............ (१)। इदं शुक्रोच्चकर्णान्त्यफलज्याभ्यां गुणितं हृतं चाविकृतमेव। अतः

$$\text{ग्रउक} - \text{ग्रक} = \frac{\text{अ शुअ. उज्याके. शुउक}}{\text{शुअ. शुउक. उक}} \ldots\ldots\ldots\ldots\ldots (२)$$

अथ (१) समीकरणे शुक्रोच्चकर्णान्त्यफलज्ययोरुत्थापनेन शुउक − शुक = $\frac{\text{शुअ. उज्याके}}{\text{शुउक}}$ = अन्तरम्।

( २ ) समीकरणेऽस्यान्तरस्योत्थापने

$$\text{ग्रउक} - \text{ग्रक} = \frac{\text{अ} \times \text{अन्तरम्} \times \text{शुउक}}{\text{शुअ} \times \text{उक}} = \frac{\text{अ}}{\text{शुअ}} \times \frac{\text{अन्तरम्}}{\frac{\text{उक}}{\text{शुउक}}} = \frac{\text{अ} \times \text{अन्तरम्}}{\text{शुअ}}$$ ।

अतः शुक्रान्तरखण्डभवं शुक्रोच्चशीघ्रकर्णयोरन्तरं ग्रहान्त्यफलज्यागुणं शुक्रान्त्यफलज्याहृतं ग्रहोच्चेष्टकर्णयोरन्तरं भवेत्। तदून उच्चकर्ण इष्टकर्णो भवेदिति। तद्यथा। कुजस्यान्तफल-

ज्यया कुजसंबन्ध्यन्तरम् $= \frac{\text{कुअ} \times \text{अन्तरम्}}{\text{शुअ}} = \frac{७ \times \text{अन्तरम्}}{८} = \frac{\text{अन्तरम्}}{१}$ स्वल्पान्तरतः ।

एवं बुधस्यान्तरम् $= \frac{\text{बुअ} \times \text{अन्तरम्}}{\text{शुअ}} = \frac{४ \times \text{अन्तरम्}}{८} = \frac{\text{अन्त}}{२}$ ।

गुरोः $= \frac{\text{गुअ} \times \text{अन्तरम्}}{\text{शुअ}} = \frac{२ \times \text{अन्तरम्}}{८} = \frac{\text{अन्त}}{४}$ ।

शुक्रस्य $= \frac{\text{शुअ} \times \text{अन्तरम्}}{\text{शुअ}} = \quad = \frac{\text{अन्त}}{१}$ ।

शनेः $= \frac{\text{शअ} \times \text{अन्तरम्}}{\text{शुअ}} = \frac{\text{अन्तरं}}{८} = \frac{७ \text{ अन्त}}{८ \times ७}$

$= \frac{\text{अन्त}}{८ \times ७} = \frac{\text{अन्त}}{७(१ + \frac{१}{७})} = \frac{\text{अन्त}}{७}$ स्वल्पान्तरात् ।

इत्युपपन्नं सर्वम् ।

अत्र भौमशनिकर्णयोरधिका स्थूलतेति बुद्धिमद्भिर्विचिन्त्यम् ॥ १४ ॥

**मन्दस्पष्टखगात् स्वपातरहितात् क्रान्त्यंशकाः केवलात्**
**कर्णाप्तास्त्रियमाहता अथ गुरोश्चेल्लोचनाप्ताः पुनः ।**
**स्वाङ्घ्यूना असृजोऽङ्गुलादिकशरः पातोनदिक् स्यादसौ**
**त्रिघ्नः स्यात् कलिकादिकः स्फुटतरस्तत्संस्कृतश्चापमः ॥१५॥**

**मल्लारिः**--एवं शीघ्रकर्णं प्रसाध्येदानीं ग्रहाणां शरं साधयति । स्वपातरहितात् मन्दस्पष्टग्रहात् । केवलादित्ययदत्तायनांशात् क्रान्तिभागाः साध्याः । ते त्रियमैस्त्रयोविंशत्या आहताः । ततः कर्णेन आप्ता भक्ताः । अथ गुरोर्बृहस्पतेस्तर्हि लोचनाभ्यां द्वाभ्यां भक्ताःकार्याः। असृजो भौमस्य चेत् तर्हि द्व्याप्ताः पुनः स्वांघ्रिणा ऊनाः सन्तः पातोनग्रहो यस्मिन् गोले तद्दिगंगुलादिकशरः स्यात् । त्रिगुणः कलादिकः स्यात् । तेन कलादिना बाणेन अपमो ग्रहक्रान्तिः संस्कृता एकान्यदिशोर्युक्तोना स्फुटतरा भवतीत्यर्थः ।

अत्रोपपत्तिः । अत्र ग्रहाणां पठिताः शरकलाः शीघ्रकर्णाग्रस्थानीयाः । शीघ्रप्रतिमण्डले हि शीघ्रकर्णो व्यासार्धम् । एवं शीघ्रप्रतिमण्डले मन्दस्पष्ट एव ग्रहो भ्रमति तत्रैवास्य पातः । अतो मन्दस्पष्टात् पातयुतात् शरः साध्य इति युक्तमुक्तम् ।

उक्तं च सिद्धान्तशिरोमणौ

मन्दस्फुटो द्राक्प्रतिमण्डले हि ग्रहो भ्रमत्यत्र च तस्य पातः ।
पातेन युक्ताद् गणितागतेन मन्दस्फुटात् खेचरतः शरोऽस्मात् ॥ इति

अत्राचार्येण पाताश्चक्रशुद्धाः कृताः । अतः पातरहितादित्युक्तम् । अत्रानुपातः । यदि चतुर्विंशतिमितायां क्रान्तौ एताः पठितशरकलांस्तदेष्टायां ग्रहक्रान्तौ का इति । अत्र लाघवार्थं स्वल्पान्तरत्वात् अंगुलादिकशरस्योपयोगित्वात् सर्वेषां शरः पञ्चाशदंगुलो गृहीतः । एवमिष्टग्रहक्रान्त्यंशानां पञ्चाशद्गुणः । चतुर्विंशतिर्हरः । यदि कर्णाग्रे अयं तदा चतुर्विंशतित्रिज्याग्रे कः । एवं चतुर्विंशतितुल्ययोर्गुणहरयोर्नाशे कृते क्रान्तेः पञ्चाशद्गुणः । कर्णो हरः । अत्र कर्णो हि भवमितात्रिज्यां प्रकल्प्य कृतोऽस्ति । अतोऽन्योऽनुपातः । यदि चतुर्विंशतिज्या सार्धेऽयं तदा भवमिते क इति । एवं भवपञ्चाशद्घातो गुणः ५५० । चतुर्विंशतिर्हरः । कर्णोऽपि हरः । अत्र सिद्धौ गुणहरौ हरेणापवर्त्तितौ जातौ गुणस्त्रयोविंशतिः । अतः क्रान्त्यंशकास्त्रियमाहताः कर्णाप्ता इति । अत्र बुधशुक्रशनीनां स्वल्पान्तरत्वात् सम एव गृहीतः । गुरोः पठितशरः पञ्चविंशतिः । पञ्चाशन्मितः कृतोऽस्त्यतो लोचनाप्ता इति । एवं भौमस्य सप्तत्रिंशत् । अतस्ते स्वाङ्घ्र्यूना इति । परमाल्पशीघ्रकर्णोऽत्रमतो द्व्याप्तोऽपि । कलात्रयेणैकमंगुलमतस्त्रिघ्नः कलाद्यः स्यात् । एवमत्र नाडीमण्डलात् क्रान्तिमण्डलपर्यन्तं दाक्षिणोत्तरमन्तरं क्रान्तिः । क्रान्तिमण्डलाद्ग्रहपर्यन्तं शरः । एवमुभयोः संस्कारे स्पष्टा क्रान्तिर्नाडिकामण्डलग्रहयोरन्तरे भवतीत्युपपन्नम् ॥ १५ ॥

**विश्वनाथः**—अथ भौमादीनां शरसाधनमाह मन्दस्पष्टेति । मन्दस्पष्टो भौमः १० । ३ । ८ । ४५ स्वपातेन राश्यादिना १ । १० रहितः ८ । २३ । ८ । ४५ । अस्मात् केवलादयनांशसंस्कारं विना स्युः खण्डानीत्यादिना क्रान्तिः २३ । ४३ । ३३ । त्रयोविंशत्या २३ गुणिता ५४५ । ४१ । ३९ । शीघ्रकर्णेन ११ । ५१ । २१ । भक्ता फलम् ४६ । १ । ३८ । स्वांघ्र्यूनाअसृजः इत्युक्तत्वात् स्वचतुर्थांशेन ११ । ३० । २४ । रहितं पातोनमन्दस्पष्टस्य दक्षिणगोलस्थत्वाज्जातोऽगुलादिको दक्षिणः शरः ३४ । ३१ । १४ । अत्र एतावान् विशेषः । यदा भौमस्य शीघ्रकर्ण एकादशाल्पस्तदा महदन्तरं पतति इति कारणात् शीघ्रकर्णेन भक्ताद्यत्फलं प्राप्तं तत् द्वाभ्यां भक्तं पश्चात् स्वचतुर्थांशेन रहितं कार्यं स भौमस्य शरो भवति । एकादशाधिके शीघ्रकर्णेनान्तरं तत्र स्वांघ्र्यूना इत्येव । मन्दस्पष्टो बुधः १ । ५ । ३ । १५ । राश्यादिपातः । ० । २० । ० । ० । अयमहर्गणोत्पन्नशीघ्रकेन्द्रेण १ । १७ । १४ । ५० रहितः ११ । २ । ४३ । १० । अनेन मन्दस्पष्टो रहितः २ । २ । १८ । ५ । अस्य क्रान्तिः २१ । ० । ५१ । त्रियमा—२३ हता ४८३ । १९ । ३३ शीघ्रकर्णेन १३ । ५७ । १० भक्ता फलं जातः शरः ३४ । ३८ । २४ । पातोनस्योत्तरगोलस्थत्वादुत्तरः ॥

मन्दस्पष्टो गुरुः ४ । १२ । ५२ । ४४ । स्वपातेन राश्यादिना २ । २० रहितः १ । २२ । ५२ । ४४ । अस्य क्रान्तिः १८ । ४९ । ११ । त्रयोविंशतिगुणा ४३२। ५१ । १३ शीघ्रकर्णेन ११ । १२ । ४२ भक्ता ३८ । ३६ । २६ गुरोः पुनद्व्याप्ता फलं जातः शरः १९ । १८। १३। पातोनस्योत्तरगोलस्थत्वादुत्तरः ॥ शुक्रस्य पातो राश्यादिः २ । ० । अहर्गणोत्पन्नशीघ्रकेन्द्रेण ३। ५ । ४१ ।३५। रहितः १० । २४ । १८ । २५ । अनेन मन्दस्पष्टः शुक्रो १ । ५ । २५ । २५ रहितः २ । ११ । ७ । ० । अस्य क्रान्तिः २२ । ३२ । २ । त्रयोविंशत्या गुणिता ५१८ । १६ । ४६ शीघ्रकर्णेन १२ । २४ । २ भक्ता फलं जातः शरः ४१ । ४७ । ४१ । पातोनस्योत्तरगोलस्थत्वादुत्तरः ॥ मन्दस्पष्टः शनिः १० । २१ । २३ । ४२ । स्वपातेन राश्यादिना ३ । १० । राहतः ७ । ११ । २३। ४२ । अस्य क्रान्तिः १५ । ३१ । ६ । त्रयोविंशत्या २३ गुणिता ३५६। ५५। १८ शीघ्रकर्णेन ११ । २३ । १८ । भक्ता फलं जातः शरः ३१ । २० । २७ । पातोनस्य दक्षिणगोलस्थत्वाद्दक्षिणः ॥ भौमादीनामेते अंगुलात्मकशरास्त्रिगुणिता जाता भौमादीनां कलात्मकशराः । भौमस्य १०३ । ३३ । ४२ । बुधस्य १०३ । ५५ । १२ । गुरोः ५७ । ५४ । ३९ शुक्रस्य १२५ । २३ । ३ । शनेः ९४ । १ । २१ । एते षष्टिभक्ता जाता अंशाद्याः । भौमस्य अंशाद्यः शरो दक्षिणः १ । ४३ । ३३ । बुधस्योत्तरः १ । ४३ । ५५ । गुरोरुत्तरः ० । ५७ । ५४ । शुक्रस्योत्तरः २ । ५ । २३। शनेर्दक्षिणः १ । ३४ । १ । स्पष्टा भौमादयः । भौमः ११ । ५ । ५६ । ४ बुधः १ । १७ । ४ । ० । गुरुः ४ । २ । ९ । ४९ । शुक्रः २ । १२ । १५ । ४६ । शनिः १० । २६ । ४२ । ३० । अयनांशाः १८ । १० । भौमादीनां क्रान्तयः । भौमस्य क्रान्तिर्दक्षिणा २ । २१ । ३४ । बुधस्योत्तरा २१ । ३२ । ३१ । गुरोरुत्तरा १४ । ५९ । १५ । शुक्रस्योत्तरा २३ । ५८ । ५८ । शनेर्दक्षिणा । ६।३। ०।एताः स्वस्वशरेण संस्कृता जाता भौमादीनां स्पष्टाः क्रान्तयः। भौमस्य दक्षिणा ४ । ५ । ७ । ज्ञस्योत्तरा २३ । १६ । २६ । गुरोरुत्तरा १५ । ५७ । ९ । शुक्रस्योत्तरा २६ । ४ । २१ । शनेर्दक्षिणा ७ । ३७ । १ ॥ १५ ॥

सुधाकरः—'मन्दस्फुटात् खेचरतः स्वपातयुक्तात्' इत्यादिभास्करोक्तेनात्र पातस्य चक्रशुद्धत्वात्

$$\text{ग्रहशरकला}=\frac{\text{पश. ज्याविपा}}{\text{शीक}}\ ।\ \text{ग्रहशरांगुलानि}=\frac{\text{पश. ज्याविपा}}{\text{३ शीक}}=\frac{\text{पश. जिज्या. ज्याविपा त्रि.}}{\text{३ जिज्या. शीक. त्रि}}$$

$$=\frac{\text{पश}\times\text{विपातक्रान्तिज्या. त्रि}}{\text{३ जिनज्या. शीक}}=\frac{\text{पश. ज्याका}_1\text{. त्रि}}{\text{३ जिनज्या. शीक}}\ \ldots\ldots(1)$$ यदि विपातक्रान्तिज्या

= ज्याका$_१$, आचार्येण भौमादीनां शरकालाः क्रमात् ११०′ । १५″ ॥ १४७′ ॥ ७३′ । ३०′ ॥ १४७′ ॥ १४७′ ॥ एता गृहीताः। त्रिज्या च रुद्र ११ मिता पूर्वमेव शीघ्रकर्णानयने प्रतिपादिता।

रुद्रत्रिज्यायां जिनज्या = $\frac{(४८।४५)\times ११}{१२०}$ । ज्याका$_१$ = $\frac{२१ \text{ का}_१ \times ११}{१०\times १२०}$

( १ ) समीकरणे एतेषामुत्थापनेन शरांगुलमानम्

$$= \frac{\text{पश}}{३} \cdot \frac{२१ \text{ का}_१}{(४८।४५)१०} \cdot \frac{११}{\text{शीक}} = \frac{\text{पश}}{३} \cdot \frac{७ \text{ का}_१}{१०(१६।१५)} \cdot \frac{११}{\text{शीक}}$$

$$= \frac{\text{पश}}{३} \cdot \frac{७ \text{ का}_१}{१०\left(\frac{६५}{४}\right)} \cdot \frac{११}{\text{शीक}} = \frac{\text{पश}}{३} \cdot \frac{१४ \text{ का}_१}{५ \cdot ६५} \cdot \frac{११}{\text{शीक}} \ldots\ldots\ldots\ldots (२)$$

( २ ) अत्र पश स्थाने १४७ एतदुत्थापनेन जातानि बुधशुक्रशनिशरांगुलमानानि

$$= \frac{१४७}{३} \cdot \frac{१४ \text{ का}_१}{५ \cdot ६५} \cdot \frac{११}{\text{शीक}} = \frac{४९ \times ११ \times १४ \times \text{का}_१}{५ \cdot ६५ \cdot \text{शीक}} = \frac{७५४६ \text{ का}_१}{३२५ \text{ शीक}}$$

$$= \frac{\frac{७५४६}{३२५}\text{का}_१}{\text{शीक}} = \frac{\left(२३\frac{७१}{३२५}\right)\text{का}_१}{\text{शीक}} = \frac{२३ \text{ का}_१}{\text{शीक}} ।$$

अथ $\frac{\text{कुजपरमशरः}}{१४७'} = \frac{११०' । १५''}{१४७'} = \frac{३}{४}$ ।

$\frac{\text{गुरुपरमशरः}}{१४७'} = \frac{७३' । ३०''}{१४७'} = \frac{१}{२}$ ।

अतो बुधशुक्रशनिवद्यच्छरांगुलमानं तत् स्वपादोनं कुजस्य तदर्धं च गुरोः शरांगुलमानमिति। स्वल्पान्तरेण सूर्यसिद्धान्तोक्तिवत् कदम्बप्रोतीयः शर एव ध्रुवप्रोतीयः कल्पितस्ततस्तत्संस्कारेण मध्यमोऽपमः स्फुटो भवति। शरांगुलमानात् कलाकरणोपपत्तिरतिसुगमेति सर्वं निरवद्यम् ॥ १५ ॥

**वक्रास्ताद्यं तिथिपटगतं तद्दिनेऽस्योक्तकेन्द्रं**
**स्यात् तच्चाल्यं त्वभिमतदिने स्वाशुकेन्द्रोक्तगत्या।**
**तस्मात् प्राग्वच्चलफलमिदं चालितस्पष्टखेटे**
**व्यस्तं देयं मृदुजफलभाक् स्यात् ततो वा शराद्यम् १६**

**मल्लारिः**----अथ पञ्चांगीयस्फुटग्रहज्ञाने वक्रादिदिनज्ञाने, चेष्टादिनस्थमन्दस्पष्टग्रहसाधनं करोति। तिथिपटे पञ्चांगे गतं वर्त्तमानं यद्वक्रास्ताद्यं तद्दिने तस्य ग्रहस्य उक्तकेन्द्रं त्रिनृपेरित्योदकं स्यात्। तदभिमते इष्टे दिने। स्वशीघ्रकेन्द्रोक्तगत्या गतगम्यदिनाहतशुभुक्तेरित्यादिविधिना चालनीयं तस्मात् शीघ्र-

केन्द्रात् पूर्वोक्तरीत्या शीघ्रफलं साध्यम् । इदं चालितस्पष्टग्रहे व्यस्तम् । धनं चेत् तदा ऋणं ऋणं चेत् तदा धनं देयं स ग्रहो मन्दस्पष्टो भवति । तस्माद्वा शराद्यं साध्यमिति ।

अत्रोपपत्तिः–प्रत्यक्षविलोमविधिनैव सुगमा ॥ १६ ॥

**विश्वनाथः**–अथ पञ्चांगात् शरसाधनार्थं मन्दस्पष्टग्रहसाधनमाह वक्रास्ताद्यमिति । तिथिपटगतं पञ्चांगस्थितं वक्रास्ताद्यं ज्ञेयम् । आदिशब्दादुदयमार्गौ । यस्य ग्रहस्य शरसाधनं क्रियते तस्यपञ्चांगस्थितं यत्र कुत्रापि वक्रोदयादि ज्ञेयं तद्दिवसे तस्य ग्रहस्य वक्रोदयादेः स्पष्टाधिकारोक्तं शीघ्रकेन्द्रं स्यात् । तद्यथा । वक्रास्ताद्यभागास्त्रिंशद्भक्ता राश्यादिकं शीघ्रकेन्द्रं स्यादित्यर्थः । तदभिमतदिने इष्टदिवसे स्वाशुकेन्द्रस्योक्तगत्या गतगम्यदिनाहतद्युभुक्तैरित्यादिना चाल्यं तस्माच्चालितशीघ्रकेन्द्रात् प्राग्वत् पूर्वोक्तप्रकारेण चलफलं शीघ्रफलं कार्यं तच्चालितस्पष्टखेटे व्यस्तं विपरीतं देयं धनं तदा ऋणम् । ऋणं तदा धनं स ग्रहो मृदुजफलभाक् मन्दस्पष्टो भवति। वेत्यथ वा तस्मात् शराद्यं स्यात्।आदिःशब्दाद्दृक्कर्मादि । संवत् १६६७ शके १५३२ चैत्रशुक्ल-८ गुरौ तद्दिने शुक्रास्तज्ञानार्थं अहर्गणादि क्रियते। चक्रम् ८। अहर्गणः ७४७ । सूर्यः११।२१।२२। १७। शुक्रस्य शीघ्रकेन्द्रम् ११ । ८ । ३१ । ५२ । रवेर्मन्दकेन्द्रम् २।२६।३७। ४३। मन्दफलं धनम् २ । १० । ३१ । संस्कृतः सूर्यः ११ । २३ । ३२ ।४८। चरमृणम् २२ । संस्कृतः स्पष्टो रविः ११ । २३ । ३२ । २६ । स्पष्टा गतिः ५९ । ० । शुक्रस्य शीघ्रकेन्द्रम् ११ । ८ । ३१ । ५२ । शीघ्रफलार्धमृणम् ४ । ३० । ३० ।संस्कृतः. शुक्रः ११ । १६ । ५१ । ४७ । मन्दकेन्द्रम् ३ । १३ । ८ । १३ । मन्दफलं धनम् १ । ३० । ० । मन्दस्पष्टः शुक्रः ११ । २२ । ५२ । १७ ।शीघ्रकेन्द्रम् ११ । ७ । १५२ । शीघ्रफलमृणम् ९ । ३७ । ४८ । स्पष्टः शुक्रः ११ । १३ । १४ । २९ । स्पष्टगतिः ७४ । ५३ । मन्दस्पष्टखगात् इत्यादिना क्रान्तिरुत्तरा २३ । ५६। ३८। शीघ्रकर्णः १८ । १४ । ४ अंगुलाद्यः शरो दक्षिणः ३० । १२ । ५ ॥ १६ ॥

सुधाकरः—अत्रोपपत्तिरतिसुगमा फलादिसाधनेन व्यस्तविधिना च ॥ १६ ॥

**प्राक् त्रिभेण वर्जितात् संयुतात् तु पश्चिमे ।**
**खेटतोऽपमाक्षयोः संस्कृतिर्नता लवाः॥१७ ॥**

**मल्लारिः**–अथ नतांशान् साधयति । प्राक् पूर्वोदयास्तसाधने राशित्रयेण हीनात् । पश्चिमोदयास्तसाधने राशित्रयेण युक्तात् स्पष्टात् ग्रहात् क्रान्तिः साध्याः साक्षांशैः संस्कृता नतांशाः स्युरित्यर्थः ॥ १७ ॥

**विश्वनाथः**----अथ दृक्कर्मसाधनार्थं नतांशसाधनमाह प्रागिति। प्राक् पूर्वोदयास्तसाधने त्रिभेण राशित्रयेण वर्जितात् स्पष्टखेटात् क्रान्तिः साध्या पश्चिमोदयास्तसाधने राशित्रयेण संयुतात्। क्रान्तिः साध्या। अक्षांशैः संस्कृता नतांशाः स्युरित्यर्थः। स्पष्टः शुक्रः ११। १३। १४। २९। पूर्वास्तस्य साध्यत्वात् त्रिभेण रहितः ८। १३। १४। २९। अस्य क्रान्तिर्दक्षिणा २३। ५६। ४२। अक्षांशैः संस्कृता जाता नतांशा दक्षिणाः ४९। २३। २४॥ १७॥

**सुधाकरः**—प्राक्क्षितिजे ग्रहस्थाने तदा तदेव लग्नं तत् त्रिभोनं वित्रिभमानम्। पश्चिमक्षितिजे ग्रहस्थाने सषड्भे तदा प्राक्क्षितिजे लग्नमानम् = ६ + ग्रस्था। एतत् त्रिभोनं वित्रिभमानम् = ३ + ग्रस्था। अथ स्वल्पान्तरतो याम्योत्तरमण्डलस्थं वित्रिभ स्वीकृत्याल्पाक्षे देशे खमध्यनतांशसाधनोक्तिवद्वित्रिभनतांशाः साधिताः इति वासना सुगमैव॥ १७॥

**षट्शैलाष्टनवार्कधृत्यदितिजाः खण्डानि कार्यं नतां-**
**शाशांशप्रमखण्डकैक्यमगतोच्छिष्टांशघाताद्युतम्।**
**आशाप्त्या रविहृच्छरांगुलहतं लिप्ता ग्रहे ता नतां-**
**शेष्वोः स्वर्णमभिन्नभिन्नदिशि स व्यस्तं परे दृग्ग्रहः॥१८॥**

**मल्लारिः**--अथ दृक्कर्म साधयति। षट्शैलाष्टनवार्कधृत्यदितिजाः। एतानि खण्डानि। नतांशानां यो दशमांशस्तत्तुल्यखण्डानामैक्यं कार्यम्। ततस्तत् अगतखण्डशेषभागघ्नाद्दशमांशेन युतम्। शरांगुलगुणितं द्वादशभक्तं लिप्ता दृक्कर्मकला भवन्ति। ताः कलाः स्पष्टे ग्रहे धनं वा ऋणं देयाः। शरनतांशयोरेकदिक्त्वे धनं भिन्नदिक्त्वे ऋणम्। पश्चिमादयास्तसाधने व्यस्तमिदम्। दृग्ग्रहो दृक्कर्मदत्तो ग्रह आकाशे दृग्गोचरो भवतीत्यर्थः।

अत्रोपपत्तिः। ग्रहो यस्मिन् राश्याद्यवयवे वर्तते स क्रान्तिमण्डलस्थो राश्याद्यवयवो यदा क्षितिजे उदेति तदैव ग्रहस्य नोदयः। ग्रहस्य विमण्डलेऽवस्थितत्वात्। शरतुल्येनान्तरेण ग्रहः क्षितिजादुन्नमितो नामितो वा भवति। तदन्तरस्य दृक्कर्मसंज्ञा। यतोऽन्वर्थं नाम दृशःकर्म दृक्कर्म। तावताऽन्तरेण ग्रहो दृग्गोचरो भवति। तदपि दृक्कर्म द्विविधम्। आयनमाक्षजं चेति। यतः शरः क्षितिज एव नास्ति कदम्बाभिमुखत्वात्। उक्तं च सिद्धान्तशिरोमणौ

क्रान्तिवृत्तग्रहस्थानचिह्नं यदा स्यात् कुजे नो तदा खेचरोऽयं यतः।
स्वेषुणोत्क्षिप्यते नाम्यते वा कुजात् तेन दृक्कर्मखेटोदयास्ते कृतम्॥
नैव बाणः कुजेऽसौ कदम्बोन्मुखस्तत्समुत्क्षेपणं नामनं च द्विधा।
आयनं चाक्षजं तेन कर्मद्वयं तत्प्रपञ्चः पुनः संविविच्योच्यते॥

एवमत्र च ग्रहादग्रतस्त्रिभेऽन्तरे दृक्कर्मणः परमत्वात् पूर्वस्यां त्रिभहीनः पश्चिमायां त्रिभयुक्त इति तद्ग्रहस्य नतांशज्यातोऽनुपातः । यदि उन्नतज्याकोटौ नतज्या भुजस्तदा शरकोटौ क इति दशभागोत्तरान् नतांशान् प्रकल्प्य तज्जीवाः स्वस्वोन्नतांशज्याभक्ताः सावयवा अतो द्वादशभिः सवर्णिताः । अनुपाते शरः कलात्मकः । अत्रांगुलाद्यो गृहीतोऽतः पुनस्त्रिसवर्णिताः कृत्वा खण्डानि पठितानि । तत्र प्रथमं खण्डं प्रतीत्यर्थं साध्यते । दशतुल्यनतांशानां ज्या २१ । इयमेव षट्त्रिंशता सवर्णिता ७५६ उन्नतांशज्ययाऽनया ११८ भक्ता जातमाद्यखण्डम् ६ । एवमन्यान्यपि । मध्येऽनुपातः । यदि दशभागैरेकं खण्डं तदेष्टभागैः किमिति । फलयुक्तं गतखण्डैक्यं कार्यं तस्य शरो गुणो वर्तते । खण्डानि द्वादशगुणान्यतो द्वादश हरः । अतो रविहृत् शरांगुलहतमिति । धनर्णोपपत्तिर्यथा । उन्नामिते ऋणं नमिते धनम् । यतः खस्वस्तिकात् क्रान्तिवृत्तस्य यत्रोन्नमनं तद्दिग्ग्रहस्यापि क्षितिजान्नमनं भवति । तस्माद्धनम् । अन्यदिक्त्वे ऋणमित्युपपन्नम् ॥ १८ ॥

**विश्वनाथः**----अथ दृक्कर्मसाधनमाह षट्शैलेति । नतांशाः ४९ । २३ । २४ । अस्य दशमांशः ४ । एतन्मितखण्डयोगः ३० । उच्छिष्टम् ९। २३।२४। अनेन १२ हतम् ११२ । ४० । ४८ । अस्य दशमांशेन ११ । १६ । ४ । गतखण्डैक्यं ३० युतम् ४१।१६।४।शरांगुल-३० । १२ । ५ हतम् १२४६ । २०। २९ । द्वादशभक्तं फलं कलादि दृक्कर्म १०३ । ५१ । नतांशेष्वोरेकादिक्त्वाद्धनम् । नतांशशरयोरेकादिशि धनं भिन्नदिशि ऋणम् । परे पश्चिमास्वोदये साध्यमाने व्यस्तं विपरीतं देयम् । भिन्नदिशि धनम् । एकदिशि ऋणमित्यर्थः । स दृग्ग्रहः दृक्कर्मदत्तग्रहो भवति । स्पष्टः शुक्रः दृक्कर्मसंस्कृतः ११ । १४ ।५८। २० ॥ १८ ॥




सुधाकरः—कल्प्यते स्थादृवि क्रान्तिवृत्तखण्डम् शदृविं क्षितिजखण्डम्। <विदृश=वित्रिभोन्नतांशाः =<स्थादृविं=विशं।स्था=ग्रहस्थानम् । स्थाविं=शरकला=इश । स्थादृ = संस्कारकलाः । दृ=दृग्ग्रहः । तदा स्थादृ-मानस्याल्पत्वात् स्थानवशेन यद्वित्रिभं तदेव दृग्ग्रहवशेन । स्थादृविं-चापजात्यं स्वल्पान्तरं दृजुजात्यं प्रकल्प्य < स्थादृविं = विशं = वित्रिभनतांश-

कोटिं तत्कोटिं च ८ स्थाविद = विज्ञिभनतांशमानं ' न ' प्रकल्प्य त्रिकोणमित्या स्याद =

$$\frac{३श. ज्यान}{कोज्यान} = \frac{श \times ३ \times १२ \times ज्यान}{१२ \times कोज्यान} = \frac{श}{१२}\left(\frac{३६ ज्यान}{कोज्यान}\right)$$

।आचार्येण कोष्ठकान्तर्गतफलान्येव दशदशभागोत्तराणां नतांशानां साधितानि तानि शरांगुलहतानि द्वादशविभक्तानि ग्रहस्थानदृग्ग्रहान्तरकलामानानि स्युः। आचार्यस्याल्पाक्ष एव देशे गणितप्रवृत्तिरतः सप्ततिनतांशपर्यन्तं ४६ पलात्मकदेशावधिसप्तैव फलानि साधितानि। तद्यथा। खार्कत्रिज्यायाम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| नतांशाः = | १० | २० | ३० | ४० | ५० | ६० | ७० |
| नतांशकोटयः = | ८० | ७० | ६० | ५० | ४० | ३० | २० |
| नतांशज्याः = | २१ | ४० | ६० | ७७ | ९२ | १०४ | ११३ |
| नतांशकोटिज्याः = | ११८ | ११३ | १०४ | ९२ | ७७ | ६० | २१ |
| ३६ ज्यान = | ७५६ | १४७६ | २१६० | २७७२ | ३३१२ | ३७४४ | ४०६८ |
| ३६ज्यान÷कोज्यान = | $६\frac{४८}{११८}$ | $१३\frac{७}{११३}$ | $२०\frac{८०}{१०४}$ | $३०\frac{१२}{९२}$ | $४३\frac{१}{७७}$ | $६२\frac{२४}{६०}$ | $९९\frac{९}{४१}$ |

अर्धाधिके रूपं ग्राह्यमर्धाल्पे त्याज्यमिति नियमेन

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| फलानि = | ६ | १३ | २१ | ३० | ४३ | ६२ | ९९ |
| अधोऽधःशोधनेन खण्डानि = | ६ | ७ | ८ | ९ | १३ | १९ | ३७ |

आचार्येण चान्तिमखण्डत्रये क्रमेणैकैकवेदन्यूनानि १२। १८। ३३। इति स्थूलानि पठितानि। इत्युपपन्नानि खण्डमानानि—शेषवासना सुगमेति सर्वं निरवद्यम् ॥ १८ ॥

**कल्प्योऽल्पो रविरर्कदृक्खचरयोरन्यश्च लग्नं तयो-**
**र्मध्ये स्युर्घटिकाश्च पूर्ववदिमाः पश्चात सचक्रार्धयोः।**
**षड्घ्न्यः काललवा अमीभिरधिकैर्गम्योऽस्त ऊनैर्गतः**
**प्रोक्तेभ्योऽभ्यधिकैर्गतः समुदयोऽप्यूनैस्तु गम्यो भवेत् १९**

**मल्लारिः**—अथोदयास्तयोः कालज्ञानमाह। व्याख्या। अर्कः सूर्यः। दृक्खचरो दृक्कर्मदत्तो ग्रहः। अनयोर्द्वयोर्मध्ये योऽल्पः स रविः कल्प्यः। अधिको लग्नम्। तयोर्लग्नार्कयोर्मध्ये भुक्तभोग्यादिविधिना घटिकाः साध्याः। पश्चिमोदयास्तसाधने सचक्रार्धयोः षड्राशियुक्तयोर्लग्नार्कयोर्घटिकास्ताः षड्गुणा इष्टकालभागाः स्युः। तैरिष्टकालांशैः प्रोक्तकालांशेभ्यश्चन्द्रशुक्रयोस्तु वक्ष्यमाणसंस्कृतेभ्योऽभ्यधिकैरस्तो गम्यः। न्यूनैर्गतः। उदयस्तु अधिकैर्गतो न्यूनैर्गम्यः।

अत्रोपपत्तिः प्रत्यक्षसुगमा ॥ १९ ॥

**विश्वनाथः**—अथैवं दृक्कर्म दत्त्वा ग्रहस्योदयास्तादिज्ञानार्थं गतगम्यलक्षणमाह कल्प्योऽल्पो रविरिति। अर्कः सूर्यः दृक्खचरो दृक्कर्मदत्तो ग्रहः। तयो-

मध्येऽल्पो रविः कल्प्यः । अधिको यस्तल्लग्नं कल्प्यम् । तयोर्लग्नार्कयोर्मध्ये अयनांशान् दत्त्वा प्राग्वत् 'अर्कस्य भोग्य' इत्यादिना एकराशिस्थे तु तदंशान्तरहतेत्यादिना कालः साध्यः । पश्चात् पश्चिमोदयास्तसाधने सचक्रार्धयोः षड्राशियुक्तयोर्लग्नार्कयोः कालः साध्यः । पलात्मकः षष्टिभक्तो घटिकात्मको भवति । ता घटिकाः षड्गुणिता इष्टाः कालांशाः स्युः । अमीभिरिष्टकालांशः पूर्वोक्तास्थिरकालांशेभ्योऽधिकैरस्तो गम्य ऊनैर्गतोऽस्तः । उदयस्तु अधिकैर्गतो न्यूनैर्गम्यः । अर्कः ११ । २३ । ३२ । २६ । दृक्कर्मसंस्कृतः शुक्रः ११ । १४ । ५८ । २० । अनयोर्मध्येऽल्पः शुक्रः स एव रविः । ११ । १४ । ५८ । २० । अयनांशयुक्तः ० । ३ । ६ । २० । अन्यो रविर्लग्नम् ११ । २३ । ३२ । २६ । अयनांशाः १८ । ८ । अयनांशयुक्तलग्नम् ० । ११ । ४० । २६ । अनयोरेकराशिविद्यमानत्वाद्भागान्तरम् ८ । ३४ । ६ । अनेन मेषोदयो २२१ गुणितः १८९३ । ३६ । ६ । त्रिंशद्भक्तो जातः कालः १ । ३ । षड्गुणा जाता इष्टकालांशाः ६ । १८ । शुक्रस्य प्रोक्तकालांशाः संस्कारेण ६ । ४३ ॥ १९ ॥

सुधाकरः—'दृक्खेचरार्कान्तरयातनाड्यो रसा हताः काललवाः स्युरिष्टाः' तथा 'उक्तेभ्य ऊनाभ्यधिका यदीष्टाः खेटोदयो गम्यगतस्तदा स्यात्' इत्यादिभास्करोक्तेन विधिना स्फुटा वासना ॥ १९ ॥

**खाभ्राग्निभिर्विनिहताः कथितेष्टकाल-**
**भागान्तरस्य कलिका रविभोदयाप्ताः ।**
**तत्सप्तमेन परतोऽथ जवान्तराप्ता**
**योगेन वक्रिणि दिनान्युदयास्तयोः स्युः ॥ २० ॥**

मल्लारिः—अथ दिवसानयनम् । कथिताः पूर्वोक्ता इष्टाः । इदानीमानीता ये कालांशास्तेषां यदन्तरं तस्य कलाः खाभ्राग्निभि-३०० र्विनिहिताः शतत्रयगुणाः । ततो रविभोदयेन सूर्याधिष्ठितराशेः स्वदेशोदयेन भक्ताः । परतः पश्चिमोदयास्तसाधने तत्सप्तमोदयेन भक्ताः कार्याः । ततो जवान्तरेण रविग्रहगत्यन्तरेण भक्ताः । वक्रिणि ग्रहे गतियोगेन भक्ताः सन्त उदयास्तयोर्दिनानि स्युरित्यर्थः ।

अत्रोपपत्तिः । यदि उदयासुभी राशिकला १८०० लभ्यन्ते तदा कालांशान्तरकलातुल्यासुभिः किम् । एवं कालांशान्तरकलानामष्टादशशतं गुणः । उदयासवो हरः । अत्रोदयपलानि सन्त्यतोऽन्यः षड्हरः । एवं गुणे षड्भक्ते जातास्त्रिशतीगुणः । अत उक्तं खाभ्राग्निभिर्विनिहता इति । पश्चिमायां सप्तमो-

दयादनुपातः । यदि गत्यन्तरकलाभिरेकं दिनं तदाभिः किमित्यतो जन्मान्तराप्ता इति । वक्रिणि गतियोगं विनान्तरं न सिध्यति । अतो गतियोगाप्ता इति । एवमुदयास्तदिनानि स्युरित्युपपन्नम् ।। २० ।।

**विश्वनाथः**–अथ दिवसानयनमाह खाभ्राग्निभिरिति । कथिताः ६। ४६। इष्टकालांशाः ६। १८ । अनयोरन्तरभागः ० । २८ । अस्य कलिकाः २८ खाभ्राग्निभि-३०० गुणिताः ८४००.। पूर्वास्तस्य साध्यत्वात् सायनसूर्याधिष्ठितराश्युदयेन २२१ भक्ताः ३८ । ० । ३२ । परतः पश्चिमास्तोदये सति तत्सप्तमेन सायनरवेः सप्तमोदयेन भक्ताः कार्याः । रविशुक्रगत्यन्तरेण १५ । ५३ भक्ताः फलमस्तस्य गतदिनानि २ ।२३।३४ । चैत्रशुक्लाष्टम्याः सकाशात् पूर्वमेभिर्दिनादिकैः २ । २३ । ३४ शुक्रस्य पूर्वास्तः । वक्रिण उदयास्तः साध्यते । स चेद्वक्री तदा गतियोगेन भक्ताः कार्याः ।। २० ।।

**सुधाकरः**—प्रोक्तेष्टकालांशान्तरकलिका नाडीमण्डलेऽसवो भवन्ति ते च षड्भक्ताः पलानि $= \frac{\text{असु}}{६}$ । ततोऽनुपातो यदि उदये रविभोदयेनास्ते तत्सप्तमोदयेनाष्टादशशतकलाः क्रान्तिवृत्ते तदा षड्भक्तासुभिः किम् । लब्धास्तत्संबन्धिन्यः क्रान्तिवृत्ते

कलाः $= \frac{१८०० \times \text{असु}}{६ \times \text{उदमा}} = \frac{३०० \times \text{असु}}{\text{उदमा}}$ ततो गत्यन्तरेण ग्रहे वक्रिणि च गतियोगेनैकं दिनं तदा क्रान्तिवृत्तीयकलाभिः किम् । लब्धान्युदयास्तयोर्गतैष्यदिनानि

$= \frac{३०० \times \text{असु}}{\text{उदमा} \times \text{मअं. वागयो}}$ । अत उपपन्नम् । आचार्येण राश्युदयाः पलात्मकाः पठिता अतोऽसूनां पलानि कृतानि 'प्रोक्तेष्टकालांशवियोगलिप्ताः खाभ्राष्टभून्यः' इत्यादिभास्करविधिनैवं दर्शिता वासनेति ॥ २० ॥

**स्यात् खाभ्राग्न्युदयान्तरं भविहृतं स्वर्णं पृथूनोदये**
**यत् तत्संस्कृतदृष्टिकर्मलवतः प्राणांशसंस्कारिताः।**
**पूर्वोक्ता भृगुचन्द्रयोः क्षणलवाः स्पष्टा भृगोश्चोनिता**
**द्वाभ्यां तैरुदयास्तदृष्टिसमता स्याल्लक्षितैषा मया॥२१॥**

**मल्लारिः**—अथ चन्द्रशुक्रयोरुदयास्तयोरन्तरमाह । शतत्रयस्योदयस्य च यदन्तरं तद् भैः सप्तविंशत्या विहृतं भक्तं सत् यत् फलं स्यात् तत् फलं शतत्रयादधिके उदये धनमूने ऋणम् । अनेन भागादिफलेन संस्कृतदृक्कर्मभागेभ्यो यः प्राणांशः पञ्चमभागस्तेन पूर्वोक्ता नवद्वादशमिताः शुक्रचन्द्रयोः कालांशाः संस्कृता धनर्णत्वेन स्पष्टाः स्युः । भृगोः शुक्रस्य द्वाभ्यां च हीनाः

कार्याः । तैः कालांशैः शुक्रचन्द्रयोरुदयास्तदृष्टिसमता स्यात् । एषा मया लक्षिता वर्त्तमानघटनामवलोक्य ज्ञाताऽत्रातो मूलोपलब्धिरेव वासनेति सिद्धम्॥२१

**विश्वनाथः**—अथ ग्रन्थकृता शुक्रचन्द्रयोः कालांशानां संस्कारो लक्षितस्तमाह स्यादिति । खाश्राग्नयः ३०० । सायनशुक्रस्योदयः २२१ । अनयोरन्तरं ७९ भ- २७ विहृतं फलमंशादि २ । ५५ । ३३ । शतत्रयेभ्य उदयस्य न्यूनत्वादृणम् । दृक्कर्मलवा धनम् १ । ४३ । ५१ । अनयोः संस्कृतिः ? । ११। ४२ । एषां पञ्चमांशः ऋणम् ० । १४ । शुक्रस्य कालांशाः ९ एते । आभिः कलाभि-१४ रूनिताः ८ । ४६ । पुनरंशद्वयेन २ ऊनिताः शुक्रस्य कालांशाः ६ । ४६ । एतैः कालांशैः साधितोदयास्तयोर्दृष्टिसमता स्यात् । एषा मया लक्षिता यन्त्रेवधादिनोदयास्तयोरन्तरं लक्षितमित्यर्थः । कालांशाः ६।४६। एभ्य इष्टकालांशा ६ । १८ न्यूनाः । अतो गतोऽस्तः ॥ २१ ॥

**सुधाकरः**—अत्राचार्यवचनमेव प्रमाणम् । नान्यत्कारणं किमपि गोलेनोपलभ्यते । वस्तुतो रविग्रहयोर्नीचोच्चस्थितिभेदेन विम्बयोः स्थूलसूक्ष्मत्वाच्च न ग्रहाणां कालांशाः स्थिरास्तथा च नानाविधकारणजनितास्तात्कालिका विलक्षणाः कालांशा न विचक्षणगोचराः । अत एव स्थूला अपि सुखार्थं पूर्वसूरिभिर्व्यवहारोपयुक्ताः स्थिराः पठिता इति विपश्चिद्भिर्विशेषतश्चिन्त्यमिति ॥ २१ ॥

**पलभाऽष्टवधोनसंयुता गजशैला वसुखेचरा लवाः ।**
**इह तावति भास्करे क्रमाद्घटजोऽस्तं ह्युदयं च गच्छति॥२२॥**

**मल्लारिः**—अथागस्त्योदयास्तज्ञानमाह । अक्षभा अष्टगुणा भागाः स्युस्तैर्भागैर्गजशैला अष्टसप्ततिः । ऊना रहिता । वसुखेचरा अष्टनवतिः । युक्ता कार्या । तत्समे सूर्ये सति क्रमाद्घटजोऽगस्त्यः । अस्तमुदयं च गच्छति इत्यर्थः ।

अत्रोपपत्तिः। अगस्त्यध्रुवः सप्ताशीतिभागा आयनदृक्कर्मसंस्कृताः । तथास्य कालांशा द्वादश १२ । एतेषां क्षेत्रांशा एकादश सप्ताशीत्यंशेषु युक्ताः ९८ । एतन्मिते सूर्ये उदयः । अस्ते व्यस्तायनदृक्कर्मसंस्कृता ध्रुवभागाः ८९। क्षेत्रांशैः ११ रूना जाताः ७८ । एतन्मिते सूर्येऽस्तः । इदं निरक्षे । साक्षे तु अक्षदृक्कर्म कर्तुं युज्यते शरस्य महत्त्वात् । मुख्यकल्पेन स्फुटास्फुटक्रान्तिजयोश्चरार्धयोरित्यादिविधिना एकांगुलाक्षभाया अष्टौ भागा उत्पद्यन्ते । ततोऽनुपातः । यद्येकांगुलपलभया अष्टौ भागास्तदेष्टपलभया किमिति । अक्षभाया अष्टौ गुणः । रूपं हरः । अतः पलभाष्टवधोनसंयुता इत्याद्युपपन्नम् । अत्रानुपातस्याप्राप्तौ भ्रान्तिः कृता तेन षट्पलभापर्यन्तं स्वल्पान्तरमग्रे बह्वन्तरम् ॥ २२ ॥

**विश्वनाथः**—अथागस्त्योदयमाह पलभाष्टेति । पलभा ५ । ४५ । अष्टगुणा ४६ । ० । अनेन गजशैलभागा ७८ रहिताः ३२ । वसुखेचरलवा

९८ युक्ताः १४४ । एते त्रिंशद्भक्ता राश्यादि । वृषभराशौ अंशद्वयेऽस्तः । सिंहस्थेऽर्के चतुर्विंशतिभागे उदयः ॥ २२ ॥

**सुधाकरः**—अत्र पठितध्रुवकादिनाऽगस्त्यस्यायनदृक्कर्मसंस्कृतो ध्रुवः = $८८^\circ$ । स्वल्पान्तरादस्योत्तरा क्रान्तिः = $२४^\circ$ । याम्यो ध्रुवप्रोतीयः शरः = $७६^\circ$ । क्रान्तिशरयोः संस्कारेण जाता याम्या स्फुटा क्रान्तिः = $५२^\circ$ । मध्यमक्रान्तेः स्वल्पान्तरात् खार्कमितव्यासार्धे ज्या = ४९ । तद् द्युज्या च = १०९ । स्पष्टक्रान्तिज्या = $९४\frac{२}{५}$ तद् द्युज्या = $७३\frac{३}{५}$

ततः 'स्फुटास्फुटक्रान्तिजयोश्चरार्धयोः' इत्यादिभास्करप्रकारेण

$$\text{मध्यमक्रान्तिकुज्या} = \frac{\text{ज्याक्रा . वि}}{१२} = \frac{४९ \text{ वि}}{१२}$$

$$\text{चरज्या} = \frac{\text{ज्याक्रा . वि . त्रि}}{१२ \text{ द्यु}} = \frac{४९ \text{ वि} \times १२०}{१२ \times १०९} = \frac{४९० \text{ वि}}{१०९}$$

चरज्या द्वाभ्यां हृता स्वल्पान्तराज्जाता मध्यमक्रान्तिचरांशाः = $\frac{२४५ \text{ वि}}{१०९}$ ।

$$\text{एवं स्पष्टक्रान्तिचरज्या} = \frac{\text{ज्यास्पक्रा} \times \text{वि . त्रि}}{१२ \text{ स्पद्युज्या}} = \frac{४७२\times\text{वि}\times१२०\times५}{५\times१२\times३६८} = \frac{४७२\times१०\times\text{वि}}{३६८}$$

$= \frac{११८० \text{ वि}}{९२} = \frac{५९० \text{ वि}}{४६}$ । इयं द्विभक्ता जाताः स्वल्पान्तरतः स्पष्टक्रान्तिचरांशाः

$= \frac{२९५ \text{ वि}}{४६}$ । द्वयोर्योगेनाक्षजदृक्कर्मांशाः = मच + स्पच = $\frac{२४५}{१०९}$ वि + $\frac{२९५}{४५}$ वि = 

वि $\left(२ + \frac{२७}{१०९} + ६ + \frac{१९}{४६}\right) = ८$ वि, स्वल्पान्तरतः । आयनदृक्कर्मसंस्कृतध्रुवं रविमक्षजदृक्कर्ममानमिष्टकालं च प्रकल्प्य यल्लग्नं तस्यायनदृक्कर्मसंस्कृतध्रुवस्यान्तरं चाक्षजदृक्कर्मांशसममेव स्वल्पान्तरात् प्रकल्पितं

तेनोदयलग्नम् = ध्रु + आदृ = $८८^\circ + ८$ वि ।

अस्तलग्नम् = ध्रु − आदृ = $८८^\circ - ८$ वि ।

अत्र कालांशा आचार्येण दशांशा अङ्गीकृता अतस्तदधिकोदयलग्नसम एव स्वल्पांतरत उदयभानुः $= १०^\circ + ८८^\circ + ८$ वि $= ९८^\circ + ८$ वि । तथा तदूनास्तलग्नसम एव स्वल्पान्तरतोऽस्तभानुः $= ८८^\circ - १०^\circ - ८$ वि $= ७८^\circ - ८$ वि । अत उपपन्नं यथोक्तम् । दशकालांशसमा एव क्षेत्रांशाः कल्पिता अत एव स्थूलावुदयास्तार्कौ भवत इति सर्वं ध्येयम् ॥ २२ ॥

**खेचरोऽर्कास्तकाले सषड्भार्कतो**
**योऽधिकोऽल्पोऽर्कतो निश्युदेतीह सः ॥**
**अस्तमेत्यन्यथा यो विधेयः क्रमात्**
**पूर्वपश्चात्स्थदृक्कर्मभाक् स ग्रहः ॥ २३ ॥**

**मल्लारिः**—अथ ग्रहस्य नित्योदयास्तज्ञानमाह । सूर्यास्तकाले यो ग्रहः सषड्भसूर्यादधिकः । अथ वा केवलात् सूर्यादूनः स निश्युदेतीति । अन्यथाऽस्तमेति । अथो स ग्रहः क्रमेण पूर्वपश्चात्स्थदृक्कर्मभाग् विधेय इति ।

अत्रोपपत्तिः। ग्रहोदये ग्रहतुल्यं लग्नं सूर्यास्ते सषड्भार्कतुल्यमुदयलग्नम् । केवलार्कतुल्यमस्तलग्नम् । अतः सषड्भार्काद्ग्रहेऽधिके रात्रौ ग्रहस्योदयः। केवलार्कादूने अस्त इति प्रत्यक्षम् । उदयास्तयोः कालज्ञानार्थं दृक्कर्मसंस्कृतो ग्रहः कार्यः॥ २३ ॥

**विश्वनाथः**—अथ ग्रहाणां नित्योदयास्तज्ञानार्थं दृश्यादृश्यलक्षणमाह खेचरोऽर्कास्तेति । अर्कास्तकाले सूर्यास्तसमये । खेचरो ग्रहः कार्यः स्फुटश्च । स ग्रहः सषड्भसूर्यादधिकः केवलसूर्यादल्पश्चेत् तदा निशि रात्रौ उदेति उदयं प्राप्नोति । अन्यथा तद्विपरीतश्चेत् तदाऽस्तं याति । ग्रहः सषड्भार्कतोऽल्पः सूर्याधिक इत्यर्थः । अथो आन्तर्येन एवं दृश्यज्ञाने सति स ग्रहः पूर्वपश्चिमस्थदृक्कर्मभाग् विधेयः । उदये पूर्वदृक्कर्म देयमस्ते पश्चिमदृक्कर्म देयमित्यर्थः । शकः १५३४ वैशाखशुक्ल-१५ पौर्णिमास्यां गुरोर्नित्यास्तसाधनम् । स्पष्टः सूर्यः १ । ५ । ४२ । ३७ । स्पष्टा गतिः ५७ । ३६ । स्पष्टो गुरुः ४ । २ । ९ । ४९ । स्पष्टा गतिः ५ । २२ । मन्दस्पष्टो गुरुः । ४ । १२ । ५२ । ४४ । मन्दस्पष्टा गतिः ४ । ४२ । दिनमानम् ३३ । ६ । सूर्यास्ते चालितः सूर्यः १ । ६ । १४ ।२३। गुरुः ४।२।१२।४६।मन्दस्पष्टो गुरुः ४।१२ । ५५ । १९ । स्वपात-२ । २० रहितः १।२२ । ५५।१९। केवलात् क्रान्तिः १८।४९। शीघ्रकर्णः ११ । १२ । ४२ । अंगुलाद्यः शर उत्तरः १९ । १८ । ५२ । स्पष्टो गुरुः ४ । २ । १२ । ४६ । अयं सषड्भार्का-७ । ५ । ४२ । ३७ । न्न्यूनः केवलार्कादधिक इति रात्रावस्तं गमिष्यतीति निर्णीतम् । अथ पश्चिमास्तस्य साध्यत्वात् त्रिभयुक्तः ७ । २ । १२ । ४६ । अस्य क्रान्तिर्दक्षिणा १८ । १२ । ४१ । अक्षांशैः संस्कृता जाता नतांशा दक्षिणाः ४३ । ३८ । २३ । दृक्कर्मकलाद्यं धनम् ५५ । १८ । दृक्कर्मसंस्कृतो गुरुः ४ । ३ । ८ । ४ । ॥ २३ ॥

**सुधाकरः**—सूर्यास्तकालेऽस्तलग्नं सूर्यसमं लग्नं च सषड्भार्कसममतो यो ग्रहः सषड्भार्कतोऽधिकोऽर्कतश्च न्यूनः स क्षितिजाधःस्थत्वाद्रात्रावुदेत्येवातोऽन्यथा चास्तं यातीति स्फुटैवोपपत्तिः । उदयास्तलग्नज्ञानार्थं तत्र यथादिक्को दृग्ग्रहश्च करणीय एवेति ॥ २३ ॥

**उद्गमे यातकालः खगात् त्वस्तके**
**षड्भयुक्तात् सषड्भार्कभोग्यान्वितः ।**

**युक्तमध्योदयोऽस्योद्गमास्ते भवे-**
**द्रात्रियातोऽथ तत्कालखेटात् स्फुटः ॥ २४ ॥**

**मल्लारिः**----अथोदयास्तकाले रात्रिगतघटिकाज्ञानमाह । उदये सति ग्रहाद् भुक्तःकालःसाध्यः। अस्ते च षड्भयुक्तात् ग्रहाद् यात एव कालःसाध्यः। सषड्भसूर्यास्तकालेन युक्तः। ततो मध्योदययुक्तः कार्यः। एतावान् कालो ग्रहस्योदये अस्ते च रात्रेर्गतो भवति । तात्कालिकाद्दृक्कर्मादि विधाय स कालः पुनः साध्यः स्पष्टः स्यादित्यर्थः।

अत्रोपपत्तिः पूर्वप्रतिपादितवै ।। २४ ॥

**विश्वनाथः**--अथ रात्रौ ग्रहोदयास्तयोर्गतघटिकाज्ञानमाह उद्गमेति। उद्गमे उदये साध्यमाने खगाद् दृक्र्मदत्तग्रहाद् यातः कालो भुक्तकालः साध्यः।अस्ते षड्युक्ताद्ग्रहाद् भुक्तकालः साध्यः। स कालः सषड्भार्कस्य भोग्य कालेनान्वितो युक्तमध्योदयः । एवमस्योद्गमास्ते घटिकादिको रात्रियातो भवेत् । तात्कालिकग्रहात् कालः पुनः साध्यः स्पष्टः स्यादित्यर्थः । सषड्भदृक्र्मदत्तग्रहाद् भुक्तकालः१७९ । सषड्भसूर्यात् ७।६।१४।२३भोग्यकालः६४।भुक्तभोग्ययोर्योगो२४३धनु-३४२ मकरो-३०४दयाभ्यां युक्तः८८९। सूर्यास्तादाभिर्घटिकाभिः १४ । ४९ । गुरोरस्तः । आभिर्घटिकाभिश्चालितो गुरुः ४ । २ । १४ । ६ । तल्लग्नम् । ४ । ३ । ९ । २४ । रविः १ । ६ । २८ । ४ ६। लग्नभुक्तम् १७९ । रविभोग्यम् । ६१ । ३६ । ६ । अनयोर्योगः२४० । धनु-३४२ मकरो-३०४ दयैर्युक्तः ८८६ षष्टिभक्तो जातः स्पष्टः कालः१४ । ४६ ॥ २४ ॥

**सुधाकरः**—सूर्यास्तकाले प्राक्क्षितिजे सषड्भार्कसमः प्रदेशः क्रान्तिवृत्तस्य तदैवग्रहश्च यदि प्राक्क्षितिजादधस्तदा 'ऊनस्य भोग्योऽधिकभुक्तयुक्तः' इत्यादिभास्करविधिना सषड्भार्कग्रहयो रन्तरनाडिकाः स्युः । परन्तु ग्रहः प्राग्गतेस्तावतीभिर्नाडीभिर्न क्षितिजमेष्यति अतस्तत्कालवशात् ग्रहार्कौ प्रचाल्य स्फुटा घटिकाः साध्याः । ताश्च सूर्यास्तानन्तरं ग्रहबिम्बोदये रात्रिगता भवन्ति । यतः प्राक्क्षितिजे यावता कालेन सषड्भार्क उन्नतस्तावता च रविरस्तक्षितिजादधो याति 'योऽभ्युदेति समयेन येन तत्सप्तमोऽस्तमुपयाति तेनच इति भास्करोक्तत्वात्।एवं सूर्यास्तकाले ग्रहे पश्चिमक्षितिजोर्ध्वस्थे प्राक्क्षितिजे सूर्यास्तानन्त' ग्रहास्तस्य इष्टकालज्ञानार्थंग्रहोऽपि सषड्भः कर्त्तव्य इति सर्वं स्फुटमेवेति ॥ २४ ॥

**इन्दोस्तु गोपलाढ्योनः कार्योऽथ प्रतिनाडिकम् ।**
**युतो द्विद्विपलैः स्पष्टः किं स्यात् तात्कालिकेन्दुना ॥२५॥**

**मल्लारिः**----चन्द्रस्यासकृत्प्रकारार्थं विशेषं वदति । चन्द्रस्य स कालश्चेद्रोपलैर्नवपलैः । उदयेऽस्ते क्रमेण आढ्य ऊनः कार्यः । प्रतिघटिकं पलद्वयेन युक्तः । द्विगुणघटीतुल्यैः पलैर्युक्तः स्पष्टःकालः स्यात् । तात्कालिकचन्द्रात् पुनः कालः साध्य इति प्रयासेन किं प्रयोजनमिति । अत्रोपलब्धिरेव वासना ॥२५॥

देवज्ञवर्यस्य दिवाकरस्य सुतेन मल्लारिसमाह्वयेन ।

वृत्ता कृतायां ग्रहलाघवस्य खगोदयास्तानयनं समाप्तम् ॥

इति श्रीगणेशदैवज्ञविरचितस्य ग्रहलाघवस्य टीकायां मल्लारिदैवज्ञविरचितायामुदयास्ताधिकारो नवमः ॥ ९ ॥

**विश्वनाथः**--अथ तात्कालिकं चन्द्रं विना कालस्पष्टीकरणमाह इन्दोरिति । चन्द्रस्य कालो गो-९ पलाढ्योनो नवपलैरुदये युक्तः । अस्ते ऊनः । प्रतिघटिकं द्विद्विपलैर्युक्तः । द्विघ्नघटिकातुल्यपलैः पलस्थाने युक्त इत्यर्थः । स स्पष्टकालः स्यात् । एवं कृते तात्कालिकचन्द्रात् पुनः कालः साध्य इति प्रयोजनं नास्तीति सूचितमिति ॥ २५ ॥

इति ग्रहोदयास्ताधिकारोदाहरणम् ।

**सुधाकरः**—पूर्वश्लोकेनागता घटिका ग्रहसावनघटिका भवन्ति । ततस्तात्कालिकार्कग्रहवशाद्रवेः सावना घट्यो रात्रियाता आयान्ति । अत एव 'उद्गमे यातकालः खगात्' इत्यादिना चन्द्रस्यापि वशेन चन्द्रसावना नाड्य आयातास्तत्र कियत्यो रविसावननाड्यो भवन्तीत्येतदर्थं चन्द्रसावनदिनान्तर्गता रविसावननाड्यः साध्यन्ते । एकस्मिन् युगे

भभ्रमाः = १५८२२३७८२८

चन्द्रभगणाः = ५७७५३३३६

अन्तरेण चन्द्रसावनदिनानि = १५३४४८४४९२

रविसावनदिनानि = १५७७९१७८२८

एकस्मिन् चन्द्रसावनदिने रविसावनदिनमानम्

$$= \frac{१५७७९१७८२८}{१५३४४८४४९२} = \frac{३९४४७९४५७}{३८३३७११२३} = १ + \cfrac{१}{३४ + \cfrac{५६८७७६७}{१११०८३३४}}$$

$$= १ + \frac{१}{३४}$$ स्वल्पान्तरत आसन्नमानेन ।

ततो द्वयोरन्तरं दिनात्मकम् $= \frac{१}{३४} = \frac{६०}{३४}$ घटिकाः=२ स्वल्पान्तरात् । अतो यदि षष्टिघटिकात्मके चन्द्रैकसावनदिने घटीद्वयमन्तरं तदेष्टचन्द्रसावनघटिकाभिः किम् । लब्धा अन्तरघटिकाः

$$= \frac{२ \times इ.चं.सा.नाडी}{६०}$$ =२इ.च.सा ना., पलानि । अत एतैः पलैरधिकाश्चन्द्रसावननाड्यो रविसावननाड्यः स्युस्ता एव रविवशेन स्फुट इष्टकालो गर्भक्षितिजाभिप्रायेण भवति । उदय

गर्भक्षितिजोदयानन्तरं प्रवहवशेन परमलम्बनकलोद्भवकालेन पृष्ठक्षितिजे चन्द्रबिम्बदर्शनं पश्चिमक्षितिजे च गर्भक्षितिजास्तकालात् प्रागेव पृष्ठक्षितिजे परमलम्बनकलाजनित-कालेन चन्द्रबिम्बप्रतिष्ठा । अतः क्रमादुदयास्तयोर्लम्बनकलाकालः सहितोनः कार्यः । चन्द्रस्य परमलम्बनकलाश्च मध्यममानेन = $\frac{७९०' । ३५''}{१५}$ = ५३' । एता एव स्वल्पान्तरात् कालवृत्ते चासवः कल्पिता आचार्येण । तेनासवः षड्भक्ता जातानि पलानि=९ स्वल्पान्तरतः । इत्युपपन्नं सर्वं यथोक्तम् । आचार्येण फलाधिक्याल्लम्बनकलाकालश्चन्द्र एव संस्कृतः । अन्यग्रहपरमलम्बनकलाकालश्च स्वल्पान्तरात् त्यक्त इति ॥२५॥

इति सुधाकरनिर्मितवासना सकलया कलया कलयासता ।
समुदयास्तविधौ परया गता भवलयावलया वलयाऽऽगता ॥

इति उदयास्ताधिकारः समाप्तः ।

**प्राग्दृष्टिकर्मखचरस्तनुतोऽल्पकोऽस्तात्**
**पृष्ठश्च दृश्य इह खेचरभोग्यकालः ।**
**लग्नेन युक्च विवरोदययुग्द्युयातः**
**स्यात् खेचरस्य सितगोर्यदि गोपलोनः ॥१॥**

**मल्लारिः**--अथ ग्रहच्छायाधिकारो व्याख्यायते । दत्तपूर्वदृक्कर्मा ग्रह इष्टकालीनलग्नाद्यदाऽल्पोऽस्तात् सप्तमलग्नाद्यदाऽधिकः स्यात् तदा तत्समये ग्रहो दृश्यः । इहेष्टकाले ग्रहस्य भोग्यकालः । तनुभुक्तयुक् मध्योदययुक् च कार्यः । ग्रहस्योदयाद् द्युगतकालः स्यात् । चन्द्रस्य चेत् तर्हि नवपलोनः कार्यः ।

अत्रोपपत्तिरतिसुगमा ॥ १ ॥

**विश्वनाथः**--अथ ग्रहच्छायोदाहरणम् । तत्र रात्रौ ग्रहस्य दृश्यादृश्यत्वज्ञानं दिनगतसाधनमाह प्रागिति । शके १५३२ वैशाखशुक्ल ९ शनौ रात्रौ दशघटिकासु १० चन्द्रस्य छायासाधनं क्रियते । तत्राहर्गणः ७७७ । प्रातर्मध्यमः-सूर्यः ० । २० । ५६ । २२ । चन्द्रः ३ । २६ । ५८ । ३ । उच्चम् ७ । २२ । ४ । ६ । राहुः २ । २३ । ४७ । ३ । रविमन्दकेन्द्रम् १ । २७ । ३ । ३८ । मन्दफलं धनम् १ । ४९ । ४० । संस्कृतो रविः ० । २२ । ४६ । २ । अयनांशाः १८ । ८ । चरमृणम् ७३ । चरसंस्कृतः स्पष्टो रविः ० । २२।४४। ४९ स्पष्टा गतिः ५७ ।५८ । फलत्रयसंस्कृतश्चन्द्रः ३ । २६ । ३१ । १३ । मन्द-केन्द्रम् ३ । २५ । २८ । ५३ । मन्दफलं धनम् ४ । ३२ । ० । संस्कृतः स्पष्टश्चन्द्रः ४ । १ । ७ । १३ । स्पष्टा गतिः ८१९ । १९ । दिनमानम् ३२।२६ सूर्योदयाद्गतघटीभि-४२ । २६ श्चालितः सूर्यः ० । २३ । २५ । ४८ चन्द्रः

४ । १० । ४६ । ३९ । राहुः २ । २३ । ४४ । ४८ । व्यगुश्चन्द्रः १ । १७ । १ । ५१ । उत्तरः शरः ६५ । ४४ त्रिभवर्जितश्चन्द्रः १ । १० । ४६ । ३९ । अस्य क्रांतिरुत्तरा २० । १९ । ३९ । अक्षांशैः २५ । २६ । ४२ संस्कृता जाता नतांशा दक्षिणाः ५ । ७ । ३ । पूर्वं दृक्कर्म कलाद्यं ऋणम् १६ । ४ दृक्कर्म-संस्कृतश्चन्द्रः ४ । १० । २९ । ५० । रात्रिगतघटीषु १० लग्नम् ८ । १६ । २४ । २२ । पूर्वदृक्कर्मदत्तश्चन्द्रो लग्नादल्पोऽस्तलग्ना--२ । १६ । २४ । २२ दधिकोऽस्तस्तत्रेष्टघटीषु दृश्यश्चन्द्रः । सायनदृक्कर्मसंस्कृतचन्द्रस्य भोग्यकालः १५ । सायनलग्नस्य भुक्तकालेन ४६ युक्तः ६१ । ग्रहलग्नयोर्मध्ये सिंहादारभ्य मकरपर्यन्तं ये उदयास्तेषां योगेन १३५७ युक्तः १४१८ । षष्टिभक्तः । जातो ग्रहस्य दिनगतकालः २३ । ३८ । चन्द्रस्य दिनगतमतो नव-९ पलरहितं जातश्चन्द्रस्य दिनगतकालः २३ । २९ ॥ १ ॥

अथ छायाधिकारः ।

सुधाकरः—प्रागुदग्ग्रहो यदीष्टलग्नादल्पोऽस्तलग्नाच्चाधिकस्तदा क्षितिजोर्ध्वगतत्वादवश्यमेव दृश्यः। ततो ग्रहलग्नयोरन्तरघटिका लग्नानयनवैपरीत्येन सुबोधाः । एवं य इष्टघटयस्ताश्च ग्रहस्य सावना द्युगता गर्भक्षितिजादुन्नताः । चन्द्रस्य पृष्ठक्षितिजादुन्नतज्ञानाय गर्भपृष्ठक्षितिजान्तरकालेन परमलम्बनकलासमुद्भूतेन नवपलमितेन पूर्वागतश्चन्द्रस्य द्युगतो हीनः कार्यः । अन्येषान्तु लम्बनकालस्यात्यल्पत्वात् स संस्कारो नाभिहित आचार्यैरिति पूर्वाधिकारेऽप्युक्तमिति ॥ १ ॥

**जिनाप्तोऽक्षाभाघ्नोऽङ्गुलमयशरोऽनेन तु चरं**
**स्फुटं संस्कृत्यातो दिनमथ खगस्य द्युविगतात् ।**
**प्रभाद्यं संसिध्येदथ खचरभादेर्निशि गतं**
**ध्रुवेऽथारादीनां द्युतिपरिगमं यन्त्रवशतः ॥ २ ॥**

मल्लारिः—अथ ग्रहच्छायासाधनमाह । अंगुलादिकः शरः पलभागुणश्चतुर्विंशतिभक्तः कार्यः । अनेन पलात्मकफलेन ग्रहात् सूर्यवत् साधितचरं शरचैकान्यगोले युक्तोनं स्फुटं स्यात् । अतश्चराद्दिनमानं साध्यम् । अथ ग्रहस्य द्युगतकालात् सूर्यवत् छायाद्यं साध्यम् । एवं तावद्विज्ञाते रात्रिगते ग्रहस्य द्युगतमानीय छायाद्यं साधितम् । इदानीं दृष्टच्छायाद्युगतद्वारेण वक्ष्यमाणरीत्या रात्रिगतं साध्यमित्याह । अथेति खचरभादेर्ग्रहस्य छायादितो यन्त्रभागेभ्यो निशि गतं रात्रिगतघटिकादिकं स्यात् । कथं पुनः प्रभादिज्ञानं स्यादित्यत आह । ध्रुव इति । आरादीनां भौमादीनां द्युतिपरिगमं छायाज्ञानं यन्त्रवशतो ध्रुवे वक्ष्यमाणरीत्या इति ।

अत्रोपपत्तिः । अत्र चरं शरसंस्कृतस्पष्टक्रान्तितः साध्यम् । तत् केवल-क्रान्तित एव खण्डकैः साधितम् । अतो हि मध्यमस्पष्टक्रान्त्योरन्तरं शर एव । तस्माच्चरं साध्यम् । तत् पूर्वचरे संस्कार्यं स्पष्टक्रान्तितः कृतं चरं भविष्यति।अतो-ऽनुपातः । यदि द्वादशकोटौ पलभा भुजस्तदा शरतुल्यक्रान्तिकोटौ क इति । अत्र शरोऽङ्गुलाद्योऽतः कलार्थं त्रयं गुणः । एवं जाताःकलाः । तावन्त एवासवः । ते षड्भक्ताः पलानि । एवं शरस्य द्वादशषड्घातो हरः७२।त्रयं गुणः३।गुणहरौ गुणेनापवर्त्तितौ जातो हरश्चतुर्विंशतिः । पलभागुणोऽस्त्येव । अतो जिनाप्त इत्या-द्युपपन्नम् ।। २ ।।

**विश्वनाथः**–अथ ग्रहस्य दिनमानमाह जिनाप्तेति । दृक्कर्मदत्तचन्द्रात् चरमुत्तरम् ५९ । अंगुलाद्यः शर उत्तरः ६५ । ४४ अक्षभं–५ । ४५ घ्नः ३७७ । ५८ । चतुर्विंशतिभक्तः फलं पलात्मकमुत्तरम् १५ । ४४ । शरस्य उत्तरत्वात् अनेन चरं ५९ संस्कृतं जातं स्पष्टम् । ७४ । ४४ । अस्माद्दिनमान ३१ । २८ अथ ग्रहस्य द्युगतात् प्रागुक्तदिनगतकालात् छायाद्यं साध्यम् । अथ खचरभादेर्ग्रहच्छायाया यन्त्रभागेभ्यो रात्रिगतघटिकादिकं ब्रुवे अग्रे इत्यनुवृत्तिः । आरादीनां भौमादीनां द्युतिपरिगमं छायाज्ञानं यन्त्रवशतो वक्ष्यमाणरीत्या स्यात् । तद्यथा । ग्रहस्य यन्त्रवेधादिना यन्त्रभागा ज्ञेयाः । यन्त्रभागेभ्यः कर्णः कर्णात् छाया । यन्त्रभागेभ्यो दिनगतं वा ज्ञेयम् । दिनगतकालः २३ । ३९ । दिनमानात् ३१ । २८ शुद्धः । जातः शेषः ८।५९। अयमुन्नतसंज्ञकः । पश्चिमकपालस्य विद्यमानत्वादुन्नतं दिनार्धात् शुद्धं जातं पश्चिमं नतम् ७ । १५ । अक्षकर्णः १३ । १८ । स्पष्टं चरम् ७४ । ४४ । हारः १२८ । ५६ । समाख्यः ३० । १ । अभिमतहारः ७ । २५ । भाज्यः ११७। ५५ । अंगुलाद्यः कर्णः १५ । ५३ इष्टच्छाया १० । २४ ।। २ ।।

**सुधाकरः**—कल्प्यते ग्रहस्य मध्यमा क्रान्तिः = क्रा । मध्यमचरम् = च । अंगुलात्मकः शरः = श, तदा शरकला: = ३ श । शरांशाः $= \frac{३ श}{६०} = \frac{श}{२०}$ । एतत्संस्कारेण ग्रहस्य

स्पष्टा क्रान्तिः क्रा $\pm \frac{श}{२०}$ इयं द्विगुणिता स्वल्पान्तराज्जाता स्पष्टक्रान्तिज्या = २ क्रा $\pm \frac{२श}{२०}$

$=$ ज्याक्रा $\pm \frac{श}{१०}$ । विषुवतीगुणा द्वादश हृता कुज्या सा च त्रिज्याहृता द्युज्याभक्ता स्पष्ट-

$$\text{चरज्या} = \frac{\text{वि}\left(\text{ज्याक्रा} \pm \frac{\text{श}}{१०}\right)\text{त्रि}}{१२\ \text{द्यु}} = \text{ज्याच} \pm \frac{\text{वि. श. त्रि}}{१२\text{द्यु}\times १०} = \text{ज्याच} \pm \frac{\text{वि. श}}{\text{द्यु}}$$ ।इयं द्वि-

भक्ता चरांशा भवन्ति ते च दशगुणिता जातानि स्फुटचरपलानि $= \frac{१० \left( ज्याच + \frac{वि\ श}{द्यु} \right)}{२}$

$= च + \frac{५\ वि.\ श}{द्यु}$ लघुज्याखण्डैः सर्वा द्युज्या मिथःसमाना इति चन्द्रग्रहणाधिकारेऽक्षज्वलन-साधनोपपत्तौ प्रतिपादितम् । अतोऽत्र द्युज्यास्थाने त्रिज्याग्रहणेन जातानि स्फुटचरपलानि $= च + \frac{वि.\ श \times ५}{१२०} = च + \frac{वि.\ श}{२४}$ । अत उपपन्नं स्पष्टचरानयनम् । ततः स्पष्टचरेण ग्रहस्य दिनमानं द्युगतानतकालमानं ततो 'वेदेशाः शरहृच्चराब्धरहिताः सौम्यानुदग्गोलयोः' इत्यादि-विधिनाऽऽचार्योक्तेनैव ग्रहस्य छायादिकं सुलभमेवेति । अन्यत् सर्वं स्फुटमेव ॥ २ ॥

**पश्येज्जलादौ प्रतिबिम्बितं वा**
**खेटं दृगौच्च्यं गणयेच्च लम्बम् ।**
**तल्लम्बपातप्रतिबिम्बमध्यं**
**दृगौच्च्यहृत् सूर्यहतं प्रभा स्यात् ॥ ३ ॥**

**मल्लारिः**—प्रतिज्ञातां छायां धीयन्त्रेणाह । जलादर्शादौ ग्रहं प्रतिबिम्बितं पश्येत् । दृगौच्च्यमिति । भूतलात् दृक्पर्यन्तं लम्बं गणयेत् । एवं लम्बपातप्रति-बिम्बान्तरमध्यंगुलादि गणनीयम् । तत् सूर्यहतं द्वादशगुणं दृगौच्च्येनांगुलादि-केन भक्तं ग्रहस्य छाया स्यात् । प्रतिबिम्बितं वेति वा शब्देन तुरीयादियन्त्रविद्ध-ग्रहोन्नतांशेभ्यो यन्त्रलवोत्थक्रान्तिलवाप्ता इत्यनेन कर्णं प्रतिसाध्य ततः कर्णार्कवर्ग-विवरात् पदमिष्टभेति छायां साधयेदिति विध्यन्तरं सूचयति ।

अत्रोपपत्तिः। एकानुपातेन । यदि दृगौच्च्यतुल्यायां कोटौ लम्बपातप्रति-बिम्बान्तरभूर्भुजस्तदा द्वादशकोटौ केति छाया स्यादेवेति सुगमा ॥ ३ ॥

**विश्वनाथः**—अथ छायासाधनमाह पश्येदिति । जलादौ प्रतिबिम्बितं खेटं पश्येत् । दृगौच्च्यमवलम्बं गणयेत् । यत्र भूमौ लम्बः पतति तस्माज्जल-प्रतिबिम्बमध्यमंगुलात्मकं गणनीयम् । तद्द्वादशगुणं दृगौच्च्येन भक्तं फलमं-गुलादिका छाया भवेत् ॥ ३ ॥




**सुधाकरः**—कल्प्यते ग्रहबि-म्बम् = विं । क्षितिजधरातले तज-लसंज्ञके विंत = ग्रहशंकुः । ज-जलम् । तत्रैव द द्रष्टा खगप्रतिबि-म्बं च पश्यति । दस्थानात् दल, लम्बश्च क्षितिजधरातले । तदा ज्योतिर्विदया $\angle$ तजाविं = $\angle$

लजद । परन्तु $\angle$तजविं = ग्रहोन्नतांशाः = उ । दल = दऔ । तदा त्रिकोणमित्या को

$$\text{ज्याउ} = \frac{\text{जल} \times \text{ज्या उ}}{\text{दऔ}} = \text{दृग्ज्या}$$

। ततो ‘ दृग्ज्यात्रिजीवे रविसंगुणे ते’ इत्यादिभास्करवि-

धिना ग्रहस्य छाया $= \frac{\text{१२} \times \text{जल} \times \text{ज्याउ}}{\text{दऔ} \times \text{ज्याउ}} = \frac{\text{१२} \times \text{जल}}{\text{दऔ}}$ अत उपपन्नं यथोक्तम्॥ ३॥

**ज्ञात्वाऽनुमानान्निशि यातनाडी-**
**स्तत्कालखेटात् कथितैश्चराद्यैः ।**
**दृष्टप्रभादेर्द्युगता ग्रहस्य**
**साध्यस्त्विहेन्दोर्यदि गोपलाढ्यः ॥ ४॥**

**मल्लारिः**—अथ ग्रहस्य द्युगतकालसाधनं वदति । अनुमानात् स्थूलत्वेन रात्रौ गतघटीर्ज्ञात्वा तात्कालिकग्रहात् कथितस्पष्टचरादेर्दृष्टच्छायादितश्च ग्रहस्य सूर्यवद्द्युगतः कालः साध्यः । चन्द्रस्य चेत् तर्हि नवपलान्वितः कार्यः ।

अत्रोपपत्तिः । प्रत्यक्षसुगमा ॥ ४ ॥

**विश्वनाथः**—अथ ग्रहस्य द्युगतकालसाधनमाह ज्ञात्वाऽनुमानादिति । अनुमानाद्रात्रिगतघटिकाः १० । तात्कालिकचन्द्रात् स्पष्टं चरम् ७४ । ४४ । दिनमानम् ३२ । २८ । इष्टच्छाया १० । २४ । अस्या विलोमविधिना द्युगत-साधनम् । कर्णः १५ । ५३ । भाज्यः ११७ । ५५ । अभिमतो हारः ७ ।२५ । अक्षकर्णः १३ । १८ । मध्यहारः १२८ । ५६ । नतं पश्चिमम् ७ । १५ । इदं दिनार्धेन १६ । १४ । युतं जातो ग्रहस्य दिनगतकालः २३ । २९ । चन्द्रस्य दिनगतमतो नवपलसहितं जातश्चन्द्रस्य दिनगतकालः २३ । ३८ ॥ ४ ॥

**सुधाकरः**—दृष्टप्रभादेः ‘ कर्णः स्यात् पदमर्कभाकृतियुतेः’ इत्याद्याचार्योक्तेन विधिना ग्रहस्य द्युगतो भवत्येव । तत्र दृष्टच्छायातश्चन्द्रस्य पृष्ठक्षितिजाद्द्युगतो भवति । गर्भक्षितिजा-द्द्युगतज्ञानार्थं तत्र गर्भपृष्ठक्षितिजान्तरकालो नवपलसमोऽधिकीकृत आचार्येणेति ॥ ४ ॥

**प्रागदृक्खचराङ्गभाढ्यभान्वोरल्पोऽर्कस्त्वपरस्तनुस्तदन्तः ।**
**कालः स खगोदये द्युशेषो रात्रीतः क्रमशो ग्रहेऽल्पपुष्टे ॥ ५ ॥**

**मल्लारिः**—अथ ग्रहोदये दिनशेषरात्रिगतकालं साधयति । पूर्वदृक्कर्म-दत्तग्रहसषड्भसूर्ययोर्मध्ये अल्पो रविः । अन्यल्लग्नम् । एतदन्तरे यः कालः स ग्रहोदयसमये द्युशेषोऽथ वा रात्रीतः स्यात् क्रमश इति । ग्रहे सषड्भसूर्यादल्पे द्युशेषम् । अधिके रात्रीतः स्यादित्यर्थः ॥ ५ ॥

**विश्वनाथः**--अथ ग्रहोदये दिनशेषरात्रिगतकालमाह प्रागिति । पूर्वदृक्कर्म-संस्कृतश्चन्द्रः ४ । १० । २९ । ५० । षड्राशियुक्तः सूर्यः ६ । २३ । २५ ।

४८ । अनयोर्मध्ये चन्द्रोऽस्त: । सोऽर्क: कल्पित: । अन्यो रविर्लग्नम् । अनयो-रन्तरे काल: । अर्कभोग्य: १५ । लग्नभुक्त-१३३ युक्त: १४८ । मध्ये कन्या-३३५ तुलोदयेन ३३५ युक्त: ८१८ । जातो ग्रहस्य सषड्भसूर्यादल्पत्वात् चन्द्रोदये दिनशेषकाल: १३ । ३८ । स कालो ग्रहस्योदये क्रमाद् द्युशेषो रात्री-तो भवति कस्मिन् सति ग्रहेऽल्पपुष्टे सति । ग्रहे सषड्भसूर्यादल्पे द्युशेष: । अ-धिके रात्रिगत: स्यादित्यर्थ: ॥ ५ ॥

सुधाकर:—सूर्यास्तकाले सषड्भार्क एव लग्नं तत: 'ऊनस्य भोग्योऽधिकभुक्तयुक्त:' इत्यादिभास्करविधिना लग्नप्राग्दृग्ग्रहान्तरघटिका: स्यु: । ताश्च सषड्भार्कलग्नत: प्राग्दृग्ग्रहेऽधिके ग्रहबिम्बोदये रात्रिगता: सषड्भार्कसमलग्नतश्चाल्पे दिनशेषा भवन्तीति सर्वं गोलविदां स्फुटम् ॥ ५ ॥

तेनोनोऽथ च सहितो ग्रहद्युयात:
स्यादर्कास्तमयकतो निशि प्रयात: ।
चेद्ग्लावोऽनुमितघटीष्वतोऽल्पपुष्टं
द्विघ्नं तत्समपलयुग् वियुक् स्फुट: स: ॥ ६ ॥

**मल्लारि:**—अथास्मात् कालाद्रात्रिगतमाह । तेन द्युशेषेण ग्रहद्युयात ऊनो रात्रिगतेन सहित: सन् सूर्यास्ताद्रात्रिगतकाल: स्यात् । चन्द्रस्य चेत् अनुमान-ज्ञातरात्रिगतघटीषु आनीतरात्रिगततो यावदल्पमधिकं स्यात् तावदेव द्विगुणं पलात्मकं स्यात् । तै: पलै: स कालोऽल्पश्चेदून: पूर्वाधिकश्चेदन्वित: कृत: स्फुट: कालो भवतीत्यर्थ: ।

अत्रोपपत्ति: । प्रत्यक्षसुगमा ॥ ६ ॥

दैवज्ञवर्यस्य दिवाकरस्य सुतेन मल्लारिसमाह्वयेन ।
वृत्तौ कृतायां ग्रहलाघवस्य खेटप्रभाद्यानयनाधिकार: ॥

इति श्रीगणेशदैवज्ञकृतग्रहलाघवस्य टीकायां मल्लारिदैवज्ञविरचितायां ग्रहच्छायाधिकारो दशम: ॥ १० ॥

**विश्वनाथ:**—अथ सूर्यास्तात् रात्रिगतमाह तेनेति । तेन द्युशेषेण पूर्वोक्तो द्युयात ऊन: । रात्रीतेन सहित: कार्य: । एवमर्कास्तसमयत: सूर्यास्तानन्तरं निशि प्रयातो रात्रिगत: कालो भवति । चेद्ग्लावश्चन्द्रस्य कालस्तदा अनुमित-घटीषु अल्पपुष्टं चेत् । तद्यथा । कल्पितघटिकाभ्य आगता घटिका अल्पा वा-पुष्टा इत्यर्थ: । तावदेव द्विगुणं तत्समपलै: स काल: अल्पश्चेद्युक्त: । अधिक-

श्चेदूनः इन्दो स कालः स्फुटो भवति। ग्रहद्युयातः २३। ३८। द्युशेषेण १३। ३८। रहितो जातः सूर्यास्तात् रात्रिगतकालः १०॥ ६॥

इति ग्रहच्छायाधिकारोदाहरणम्।

सुधाकरः—इष्टकाले ग्रहस्य द्युगतघटिकाः पूर्वागतरात्रिगतकालेन सहिताः पूर्वागतद्युशेष-कालेन च रहिताः सूर्यास्ततो रात्रिगतघट्यो भवन्तीति स्फुटम्। एवं चन्द्रवशेन घटिकाश्च-न्द्रसावनात्मिका भवन्ति। तत्र द्विघ्नेष्टपलसंयुक्तैर्रविसावना घट्यो भवन्ति। रविसावना घट्यश्च द्विघ्नेष्टघटीसमपलविरहिताश्चन्द्रसावनघट्यो भवन्तीति विलोमविधिना स्फुटम्। अतः स रविसावनेष्टकालो द्विघ्नेष्टघटीसमपलवियुक् तदा स्फुटश्चन्द्रसावनेष्टकालो भवेदिति व्याख्यानमेव सोपपत्तिकं बुद्धिमद्भिर्विज्ञेयम्॥ ६॥

इति सुधाकरनिर्मितवासना सकलया कलया कलयासना।
द्युतिविधौ खगजे परया गता भवलयावलया वलयाऽऽगता॥

इति छायाधिकारः समाप्तः।

## अथ नक्षत्रच्छायाधिकारः।

**दास्रादष्ट च मूर्छना गजगुणा नन्दाब्धयो दृग्रसाः**
**षट् तर्का युगखेचरा रसदिशोऽद्र्याशा नवार्काः क्रमात्।**
**भाग्यादष्टयुगेन्दवोऽक्षतिथयः खात्यष्टयोऽशा ध्रुवा-**
**स्त्र्यष्टाब्जा गजगोभुवो रविदृशः सिद्धाश्विनः खत्रिदृक्॥१॥**
**मूलात् स्युर्द्विजिनाः शराश्रुगदृशः कङ्काश्विनोऽष्टेषुदृक्**
**बाणर्क्षाणि रसाष्टदृक् नखगुणास्तत्त्वाग्नयोऽश्वामराः।**
**खं दृत्तायनदृक्क्रियाः स्युरिह च क्षेपोऽक्षभाघ्नोऽर्कहृत्**
**स्वर्णं प्राक्परतोऽन्यथोत्तरशरे ते स्युः स्वदेशे ध्रुवाः॥२॥**

मल्लारिः—अथ नक्षत्रच्छायाधिकारो व्याख्यायते। तत्रादौ नक्षत्रध्रुवानाह। अश्विनीमारभ्य सर्वेषां नक्षत्राणां क्रमाद् दृत्तायनदृक्कर्माणो भागाद्या एते ध्रुवाः स्युरिति। ते त्रिंशद्भक्ता राश्यादयो भवन्तीत्यर्थः। क्षेपो नक्षत्राणां वक्ष्य-माणः शरः। पलभागुणः। द्वादशभक्तः। भागादिफलं ग्राह्यं तत् पूर्वध्रुवे धनं पश्चिमध्रुवे ऋणम्। इदमपि दाक्षिणशरे। उत्तरशरे विपरीतं ते स्वदेशे नक्षत्रध्रुवाः स्युरिति।

अत्रोपपत्तिः। तत्र भवेधार्थं गोलबन्धोक्तविधानेन विपुलं गोलयन्त्रं कार्यम्। तत्र खगोलस्यान्तर्भगोलं आधारवृत्तद्वयस्योपरि विषुववृत्तम्। तत्र च

यथोक्तं क्रान्तिवृत्तं भगणांशाङ्कितं कार्यम् । ततस्तद्गोलयन्त्रं सम्यग्ध्रुवाभिमुख-यष्टिकं जलसमक्षितिजवलयं च यथा भवति तथा स्थिरं कृत्वा रात्रौ गोलचिह्नमध्य-गतया दृष्ट्या रेवतीतारां विलोक्य क्रान्तिवृत्ते मीनान्ते चिह्नं कार्यम् । ततो मध्य-गतयैव दृष्ट्या अश्विन्यादेर्योगतारां विलोक्य तदुपरि तद्वेधवलयं निवेश्यम् । एवं कृते विषुवक्रान्तिवृत्तयोर्यः सम्पातस्तन्मीनान्तचिह्नयोरन्तरे येंऽशास्ते तस्य भध्रुवांशाः । वेधवलये तस्य सम्पातस्य योगतारायाश्चान्तरे येंऽशास्ते तस्य भस्य दक्षिणा उत्तरा वा ध्रुवसक्तवृत्ते स्पष्टशरांशा ज्ञेयाः । अत्र ये ध्रुवास्ते दत्ता-यनदृक्कर्माण एव । आक्षदृक्कर्म देयम् । तत्रानुपातः । यदि द्वादशकोटौ पलभा-भुजस्तदा शरकोटौ क इति । अत एव क्षेपोऽक्षभाघ्नोऽर्कहृदित्युपपन्नम् । याम्ये शरे प्राच्यां नामनं प्रतीच्यामुन्नामनम् । सौम्यशरे त्वन्यथा । अतः स्वर्णं प्राक्-परतोऽन्यथोत्तरशर इति युक्तम् । यत् तु नृसिंहदैवज्ञकृतटिप्पणे रेखातः प्राग्देशे धनं प्रत्यग्देशे ऋणमिति दृश्यते तल्लेखकदोषेणेति प्रतीमः ॥ १-२ ॥

**विश्वनाथः**—अथ नक्षत्रच्छायाधिकारोदाहरणम् । तत्र तावत् नक्षत्रध्रु-वानाह । दास्रादिति । मूलादिति । दास्रात् अश्विनीमारभ्य अष्टमूर्छनेत्यादयः खमित्यन्ताः सर्वेषां नक्षत्राणां क्रमाद्दशाद्या ध्रुवाः स्युः । ते त्रिंशद्भक्ता राश्या-दयो भवन्तीत्यर्थः । इमे ध्रुवा दत्तायनदृक्कर्मक्रिया भवन्ति । एषामानयदृक्कर्मदत्त-मित्यर्थः । अथाक्षदृक्कर्माह क्षेप इति । क्षेपो नक्षत्राणां वक्ष्यमाणः शरः पलभया गुण्यो द्वादशभक्तः फलं भागादि ग्राह्यम् । ध्रुवे प्राक् पूर्वकपाले धनम् । पश्चिम-कपाले ऋणम् । इदं दक्षिणशरे । उत्तरशरे विपरीतम् । पूर्वकपाले ऋणम् । पश्चिमकपाले धनमित्यर्थः । ते स्वदेशे नक्षत्रध्रुवाः स्युः ॥ १-२ ॥

अथ नक्षत्रच्छायाधिकारः ।

सुधाकरः—स्फुटोपपत्तिः ॥ अत्र 'स्पष्टेषुरक्षवलनेन हतो विभक्तो लम्बज्यया रवि-हतोऽक्षभया हतो वा' इत्यादिभास्करविधिना शरस्यांशकत्वात् अक्षजदृक्कर्मांशाः

$$=\frac{\text{श.}\ \text{त्रि.}\ \text{त्रि.}}{\text{१२.}\ \text{द्यु}}=\frac{\text{श.}\ \text{त्रि}}{\text{१२}}$$ ( यथा चन्द्रग्रहणाधिकारेऽक्षजवलनसाधनोपपत्तौ सर्वा द्युज्याः स्वल्पान्तरतो मिथः समाना भवन्ति । तथैवात्रापि यदि द्यु=१२०=त्रि ) ध्रुवोदयलग्नयोस्तथा ध्रुवास्तलग्नयोश्चाक्षजदृक्कर्मांशसमा एवान्तरांशा अल्पाक्षे देशे भानां शराल्पे च स्वल्पान्तरतोऽङ्गी-कृताः । धनर्णवासना च सिद्धान्तविदां गोलक्षेत्रसंस्थया च स्फुटैवेत्युपपन्नम् । अन्यत् सर्वं स्फुटमेव ॥ १-२ ॥

**दिक्सूर्यैष्विषुदिक्शिवाङ्गखनगाभ्राकाश्च विश्वे भवा-**
**स्त्वाष्ट्रादू द्वौ नगवह्नयः कुयमलागनीभाक्षबाणा द्विषट् ।**

कर्णात् त्रिंशदरित्रयः खजिनभाग्रं त्वाष्ट्रहस्ताहिभे
द्वीशात् षट्सु कभात् त्रये शरलवा याम्या उदक् शेषभे॥३॥

प्रजापतिब्रह्महृदग्न्यगस्त्या-
पांवत्सलुब्धध्रुवकांशकाः स्युः।
कुषट् षडक्षाब्धिशरा नभोऽष्टौ
त्र्यष्टेन्दवो भूफणिनः क्रमेण॥४॥
तेषां क्रमाद्गोशिखिनः खरामा
अष्टौ रसाश्वाः शिखिनः खवेदाः।
शरांशकाः स्युर्मुनिलुब्धयोस्तु
याम्यास्तु सौम्याः परिशेषकाणाम्॥५॥

मल्लारिः---अथ नक्षत्राणां शरभागान् वदति। अस्योपपत्तिः पूर्वमेव प्रतिपादिताऽस्ति। अथ लुब्धकादीनां ध्रुवान् शरांश्च कथयति। प्रजापतिब्रह्महृदग्न्यगस्त्यापांवत्सलुब्धकानामेते ध्रुवांशकाः। तेषामेते शरभागाः स्युरिति सुगमार्थम्।

अत्रोपपत्तिः। नक्षत्रोक्तरीत्यैव सुगमा॥ ३-५॥

विश्वनाथः----अथ नक्षत्राणां शरभागानाह दिगिति। अथ प्रजापतिप्रमुखादीनां ध्रुवांशकानाह प्रजापतिरिति। अथ तेषां शरभागानाह तेषामिति स्पष्टोऽर्थः। अश्विन्याः शरः। १०। पलभा-५। ४५ घ्नः ५७। ३०। द्वादशभक्तः। फलं भागाद्यम् ४। ४७। ३०। अनेन अश्विनीध्रुवकः। ०। ८। उत्तरशरत्वादूनो जातः काश्यामश्विन्युदयध्रुवः ३। १२। ३०। फलेन युतो जातोऽस्तध्रुवकोऽश्विन्याः १२। ४७। ३०। एवं कृते जाता उदयास्तध्रुवाङ्काः॥ ३-५॥

सुधाकरः—स्फुटा वासना। अत्र चतुर्थश्लोके 'कुषट् षडक्षाब्धिशरा इभाष्टौ' इति पाठः साधीयान्। नभोऽष्टाविति केनचित् प्राचीनगोलतत्त्वानभिज्ञेन प्रकल्पितः पाठ इति सुधीभिश्चिन्त्यम्। अन्यथा 'पलभाघ्नधोनसंयुता' इत्यादिघटजास्तोदयसाधने महद्वैषम्यं भवतीति सुधीभिर्भृशं ध्येयमिति॥ ३-५॥

निजदेशभवाद् ध्रुवाच्च बाणा-
च्छायायन्त्रलवादि खेटवत् स्यात्।
छायादेरपि चेह रात्रियातं
नक्षत्रग्रहयोग उक्तवच्च॥६॥

**मल्लारिः**--अथ नक्षत्रध्रुवात् तच्छायाद्यं साध्यमिति वदति । स्वदेशीयो नाम दत्ताक्षपूर्वदृक्कर्मको नक्षत्रध्रुवो यः स्यात् । तस्मात् 'प्रागुदृष्टिकर्मखचर' इत्यादिना छायायन्त्रांशादिकं ग्रहवत् स्यात् । तथा 'पश्येज्जलादौ' इत्यादिना ज्ञानात् छायादे रात्रिगतं तद्वदेव स्यात् । नक्षत्रग्रहयोगो ग्रहयुतिवत् । अत एव केचित् पठन्ति ।

द्युचरभध्रुवकान्तरलिप्तिका द्युगतिभुक्तिहृता हि गतागतैः ।
फलदिनैर्द्युचरेऽधिकहीनके युतिरिहेतरथा खलु वक्रिणि ॥ इति ।

द्युगतिर्ग्रहः । स्पष्टमन्यत् ।

अत्रोपपत्तिः सुगमा ॥ ६ ॥

**विश्वनाथः**--अथ नक्षत्राणां छायायन्त्रलवादिज्ञानमाह निजदेशेति । पूर्वोक्तप्रकारेण निजदेशभवाद्ध्रुवादौदयिकादुक्तशराच्च छायायन्त्रलवादि खेटवत् स्यात् । एतदुक्तं भवति । स्वदेशोत्पन्नं नक्षत्रध्रुवकं ग्रहं प्रकल्प्य तस्माच्चरं साध्यं तच्चर 'जिनाप्तोऽक्षाभाघ्न' इत्यादिना स्फुटं कार्यं तस्माद्दिनमानं कार्यम् । स्वदेशनक्षत्रध्रुवात् 'प्रागदृष्टिकर्मखचर' इत्यादिना नक्षत्रद्युयातः साध्यः । तस्मादुन्नतं कार्यम् । तस्मादुन्नतात् 'नवतिगुणितमिष्टमुन्नतम्' इत्यादिना कर्णः साध्यः । तस्माद्यन्त्रभागाच्च छायादेरपि रात्रियातं ग्रहवज्ज्ञेयम् । तद्यथा । छायाया विलोमविधिना द्युयातः स्वदेशध्रुवात् 'प्रागदृक्खचराङ्गभस्थभान्वोः' इत्यादिना द्युशेषं रात्रिगतो वा साध्यः । तदनन्तरं 'तेनोनोऽथ च सहित' इत्यादिना रात्रिगतं ज्ञेयम् । अथ वा रात्रौ यन्त्रवेधादिना नक्षत्रस्य यन्त्रभागा ज्ञेयाः । यन्त्रभागेभ्य उन्नतम् । तस्माद्रात्रिगतं वा ज्ञेयम् । नक्षत्रग्रहयोग उक्तवद्ग्रहयुतिवज्ज्ञेयः । परन्तु आचार्येणात्र नोक्तः । उद्धातृपुत्रेण नसिंहदैवज्ञेन स्वकृतकरणे नक्षत्रग्रहयोग उक्तः । तद्यथा ।

"द्युचरभध्रुवकान्तरलिप्तिका द्युगतिभुक्तिहृता हि गतागतैः ।
फलदिनैर्द्युचरेऽधिकहीनके युतिरिहेतरथा खलु वक्रिणि"॥ ६ ॥

**सुधाकरः**--स्फुटैव वासना ॥ ६॥

**गवि नगकुलवे १७ खगोऽस्य चे-**
**द्यमदिगिषुः खशराङ्गुलाधिकः ।**
**कभशकटमसौ भिनत्त्यसृक्**
**शनिरुडुपो यदि चेज्जनक्षयः ॥ ७ ॥**

**मल्लारिः**--अथ ग्रहस्य रोहिणीशकटभेदं तत्फलं चाह। यो ग्रहो वृषभे सप्तदशभागमितः स्यात् । तस्य शरोऽपि यदि दक्षिणः पञ्चाशदङ्गुलाधिकः स्यात् तदाऽसौ

ग्रहो रोहिणीशकटं भिनत्तीति ज्ञेयम्। यदा एवमसृक् भौमः शनिश्चन्द्रो वा रोहिणीशकटं भेदयति तदा जनक्षयो लोकानां महती पीडा स्यादित्यर्थः।

अत्रोपपत्तिः। रोहिणीध्रुवो वृषे एकोनविंशतिभागाः । अक्षदृक्कर्मसंस्कारार्थं भागद्वयं हीनमेव स्वल्पान्तरत्वात् कृतम्। तत्सम एव ग्रहे तद्भेदः। अत उक्तम्। गवि नगकु-१७ लवे इति। एवं रोहिणीशकटं पञ्चतारात्मकं पञ्चाशदंगुलशरं यदस्ति तन्मध्ये ग्रहस्य प्रवेशो दक्षिणशरे पञ्चाशदधिक एव भवति। यतो रोहिणीशरः शतांगुलो याम्यः। अत्र योगतारा याम्याऽस्ति॥ ७॥

**विश्वनाथः**---अथ नक्षत्राणां रोहिणीशकटभेदं तत्फलं चाह। खगो ग्रहो गवि वृषभे स्थितश्चेन्नगकुलवे सप्तदशभागे वर्त्तमानः तस्य यः शरो यमदिग् दक्षिणः पञ्चाशदंगुलाधिकश्चेत् तदा स ग्रहः कभशकटं रोहिणीशकटं भिनत्ति भित्वा गच्छतीत्यर्थः। यदि असृक् भौमः शनिस्तद्वच्चन्द्रश्चेद्भिनत्ति तदा जनक्षयो लोकानामतिपीडा स्यादित्यर्थः॥ ७॥

**सुधाकरः**—रोहिणीशकटस्य ध्रुवः ४७ अंशाः। तस्य स्थितिश्च याम्यखशरांगुलशरात्। अतो यस्य ग्रहस्य स्थानं वृषस्य सप्तदशांशे शरश्च याम्यः खशरांगुलाधिकः स रोहिणीशकटान्तर्गतत्वात् शकटं भिनत्त्येवेति स्फुटम्॥ ७॥

> स्वर्भानावदितिभतोऽष्ट-ऋक्षसंस्थे
> शीतांशुः कभशकटं सदा भिनत्ति।
> भौमार्क्योः शकटभिदा युगान्तरे स्यात
> सेदानीं न हि भवतीदृशि स्वपाते॥ ८॥

**मल्लारिः**----अथ चन्द्रस्य शकटभेदसमयमाह। राहौ पुनर्वसुमारभ्याष्टनक्षत्रमध्ये वर्त्तमाने सति चन्द्रो रोहिणीशकटं सदा भिनत्त्येव। मङ्गलशन्योः शकटभेदो युगान्तरे स्यात्। इदानीमस्मिन् पाते 'खाम्बुधय' इत्यादिके नैव स्यात्।

अत्रोपपत्तिः। चन्द्रो वृषभे सप्तदशभागामितस्तस्य शरो दक्षिणः पञ्चाशदंगुलाधिकः पुनर्वस्वाद्यष्टनक्षत्रस्थे राहावेव भवतीति प्रत्यक्षम्। भौमशन्योरेतादृशे पाते दक्षिणः शरः पञ्चाशदंगुलाधिको न भवत्येव॥ ८॥

**विश्वनाथः**---अथ चन्द्रस्य शकटभेदसमयमाह। स्वर्भानौ राहौ आदितिभतः पुनर्वस्वोरष्ट ऋक्षसंस्थे सति सदा शीतांशुश्चन्द्रो रोहिणीशकटं भिनत्त्येव। भौमशन्योः शकटभेदो युगान्तरे स्यात्। शकटभेद ईदृशि स्वपाते 'खाम्बुधयः खयमा' इत्यादिरूपे सति इदानीं न भवति। वृषभे ग्रहे स्वपाततः पञ्चाशदंगुलाधिको याम्यः शरो नागच्छेदित्यर्थः॥ ८॥

**मल्लारिः**--अथ नक्षत्रध्रुवात् तच्छायाद्यं साध्यमिति वदति । स्वदेशी-यो नाम दत्ताक्षपूर्वदृक्कर्मको नक्षत्रध्रुवो यः स्यात् । तस्मात् 'प्रागूदृष्टिकर्मखचर' इत्यादिना छायायन्त्रांशादिकं ग्रहवत् स्यात् । तथा 'पश्येज्जलादौ' इत्यादिना ज्ञानात् छायादे रात्रिगतं तद्वदेव स्यात् । नक्षत्रग्रहयोगो ग्रहयुतिवत् । अत एव केचित् पठन्ति ।

द्युचरभध्रुवकान्तरलिप्तिका द्युगतिभुक्तिहृता हि गतागतैः ।
फलदिनैर्द्युचरेऽधिकहीनके युतिरिहेतरथा खलु वाक्रिणि ॥ इति ।

द्युगतिर्ग्रहः । स्पष्टमन्यत् ।

अत्रोपपत्तिः सुगमा ॥ ६ ॥

**विश्वनाथः**--अथ नक्षत्राणां छायायन्त्रलवादिज्ञानमाह निजदेशेति । पूर्वोक्तप्रकारेण निजदेशभवाद्ध्रुवादौदयिकादुक्तशराच्च छायायन्त्रलवादि खेटवत् स्यात् । एतदुक्तं भवति । स्वदेशोत्पन्नं नक्षत्रध्रुवकं ग्रहं प्रकल्प्य तस्मान्नतं साध्यं तच्च 'जिनाप्तोऽक्षाभाघ्न' इत्यादिना स्फुटं कार्यं तस्माद्दिनमानं कार्यम् । स्वदेशनक्षत्रध्रुवात् 'प्राग्दृष्टिकर्मखचर' इत्यादिना नक्षत्रद्युयातः साध्यः । तस्मा-दुन्नतं कार्यम् । तस्मादुन्नतात् 'नवतिगुणितमिष्टमुन्नतम्' इत्यादिना कर्णः साध्यः । तस्माद्यन्त्रभागाच्च छायादेरपि रात्रियातं ग्रहवज्ज्ञेयम् । तद्यथा । छायाया विलो-मविधिना द्युयातः स्वदेशध्रुवात् 'प्राग्दृक्खचराङ्गभाढ्यभान्त्रोः' इत्यादिना द्युशेषं रात्रिगतो वा साध्यः । तदनन्तरं 'तेनोनोऽथ च सहित' इत्यादिना रात्रि-गतं ज्ञेयम् । अथ वा रात्रौ यन्त्रवेधादिना नक्षत्रस्य यन्त्रभागा ज्ञेयाः । यन्त्रभागे-भ्य उन्नतम् । तस्माद्रात्रिगतं वा ज्ञेयम् । नक्षत्रग्रहयोग उक्तवद्ग्रहयुतिवज्ज्ञेयः । परन्तु आचार्येणात्र नोक्तः । उद्धारपुत्रेण नृसिंहदैवज्ञेन स्वकृतकरणे नक्षत्रग्रह-योग उक्तः । तद्यथा ।

द्युचरभध्रुवकान्तरलिप्तिका द्युगतिभुक्तिहृता हि गतागतैः ।
फलदिनैर्द्युचरेऽधिकहीनके युतिरिहेतरथा खलु वाक्रिणि ॥ ६ ॥

**सुधाकरः**--स्फुटैव वासना ॥ ६ ॥

**गवि नगकुलवे १७ खगोऽस्य चे-**
**द्यमदिगिषुः खशराङ्गुलाधिकः ।**
**कभशकटमसौ भिनत्त्यसृक्**
**शनिरुडुपो यदि चेज्जनक्षयः ॥ ७ ॥**

**मल्लारिः**--अथ ग्रहस्य रोहिणीशकटभेदं तत्फलं चाह। यो ग्रहो वृषभे सप्तदश-भागमितः स्यात् । तस्य शरोऽपि यदि दक्षिणः पञ्चाशदङ्गुलाधिकः स्यात् तदाऽसौ

सुधाकरः—यदि परमशरेण नवत्यंगुलमितेन विपातचन्द्रज्या त्रिज्या १२०लभ्यते तदा याम्यस्तशरा–५०ङ्गुलशरेणका।लब्धाविपातचन्द्रज्या$=\frac{५०\times१२०}{९०}=\frac{४\times५०}{३}=\frac{२००}{३}=६६\frac{२}{३}$ अस्याश्चापं लब्धा भुजांशाः $= ३४^{\circ} = १$ रा । $४^{\circ}$ । दक्षिणशरत्वात् भुजभागेभ्यः 'सभार्धो भगणात् पतित' इत्यादिना जातो विपातचन्द्रः$=७$ रा । $४^{\circ}$ वा विपातचन्द्रः $= १०$ रा । $२६^{\circ}$ । अथ शकटभेदे च चन्द्रः $= १$ रा । $१७^{\circ}$ । तदा राहुमानं च यदि 'ख' भवेत् । तदा च $-$ ख $= १$ रा । $१७^{\circ} -$ ख$=७$ रा । $४^{\circ}$ ।अतः ख$=६$ रा ।$१३^{\circ}=१९३^{\circ}=११५८०'$ $=\frac{११५८०}{८००}$ नक्षत्राणि $= १४\frac{३८०}{८००}=$ चित्रा गता वर्तमानभं स्वाती । अथ द्वितीयविपातचन्द्रात् च $-$ ख$=१$ रा । $१७^{\circ}-$ख$=१०$ रा । $२६^{\circ}=१३$ रा । $१७^{\circ}-१०$ रा । $२६^{\circ}=२$ रा । $२१^{\circ}=८१^{\circ}=४८६०'=\frac{४८६०}{८००}$ नक्षत्राणि$=६\frac{६०}{८००}=$आर्द्रा गता वर्तमानभं पुनर्वसू । अतः पुनर्वसुतः स्वातीपर्यन्तं यावद्राहुस्तावच्चन्द्रो रोहिणीशकटं भिनत्ति । भौमशनी च तयोः परमशरयोः खशरांगुलाल्पत्वात् शकटभेदनं न कुरुत इति सर्वं निरवद्यम् ॥ ८ ॥

खमध्यगर्क्षध्रुवतः स्फुटं चरं
ततो दिनार्धान्निजभोदयैस्तनुः ।
भवेत् तदा लग्नमथो तदङ्गभा-
न्वितार्कमध्य घटिका निशागताः ॥९॥

मल्लारिः—अथ खमध्यस्थनक्षत्रदर्शनात् तत्काललग्नं रात्रिगतं च कथयति । खमध्ये याम्योत्तरवृत्ते वर्त्तमानं यन्नक्षत्रं तस्य य उक्तो ध्रुवः । 'अष्ट च मूर्छने'-त्यादि तस्मात् साधितं स्फुटं सूर्यवत् चरं तेन चरेण यत् कृतं दिनार्धं स इष्टकालः । नक्षत्रध्रुव एव रविः । ताभ्यां स्वदेशीयोदयैर्यत् साधितं लग्नं तत् तात्कालिकलग्नं स्यात् ततस्तल्लग्नसषड्भार्कयोर्मध्ये रात्रिगतघटिकाः स्युरित्यर्थः ।

अत्रोपपत्तिः । नक्षत्रस्य यत्कृतं दिनार्धं स एवेष्टकालो नक्षत्रस्य खमध्यस्थित्वात् । तस्मात् साधितं लग्नं तात्कालिकलग्नं भवतीत्युपपत्तिसुगमा ॥ ९ ॥

विश्वनाथः—अथ खमध्यस्थनक्षत्राद्रात्रिमानम् । खमध्येति । खमध्ये वर्त्तमानं नक्षत्रं तस्य य उक्तध्रुवकः । 'अष्ट च मूर्छने'-त्यादि । तस्मात् स्फुटं शरसंस्कारं विना चरं साध्यम् । चराद्दिनार्धंत इष्टकालः । खमध्यनक्षत्रध्रुवं सूर्यं प्रकल्प्य अयनांशान् दत्वा स्वदेशोदयैर्लग्नं साध्यम् । तस्मिन्नक्षत्रे खमध्यस्थे सति तल्लग्नं स्यात् । तल्लग्नम् । अङ्गभान्वितार्कः सूर्यः । तयोरन्तरे 'अर्कस्य भोग्य-मित्यादिना कालः साध्यः । ताः खमध्ये नक्षत्रसूर्यस्य रात्रिगतघटिका भवन्ति । खमध्यस्थाश्विनीध्रुवकः ० । ८ । अयनांशाः १८ । १० । सायनः ० । २६ ।

१० । अस्माच्चरम् ४९ । अतो दिनार्धम् १५ ।४९ । एवं जातानि सर्वेषां दिनार्धानि । एभ्यो लग्नसाधनम् । अश्विनीध्रुवकः ० ।८ । सायनः ० ।२६ । १० । अस्माद् भोग्यकालः २८ । इष्टकालः १५ । ४९ । 'भोग्यः शोध्योऽभीष्टनाडीपलेभ्य' इत्यादिना जातं खमध्ये लग्नम् ३ । १३ । ४४ । ४३ । एवं जातानि सर्वेषां मध्यलग्नानि ॥ ९ ॥

सुधाकरः—प्रकटैव वासना । खमध्यगक्षेतस्तद्दिनार्धाधिलग्नं तदेव तदा लग्नं च ततः सषड्भार्कतलग्नान्तरनाड्यो रात्रिघटिकाः स्युरिति स्फुटमेव ॥ ९ ॥

**उद्यद्ध्रुवकः स्वदेशजोऽस्तं वा प्राप्नुवतः सषड्गृहः ।**
**स्यात् तत्कालविलग्नकं ततःप्राग्वत् स्युर्घटिका निशागताः१०**

**मल्लारिः**—अथ ये नक्षत्रोदयास्तलग्ने ताभ्यां निशागतं च वदति । उदये वर्त्तमानं यन्नक्षत्र तस्य यः स्वदेशीयो ध्रुवः स सषड्भः सन्नस्तलग्नं भवति । ततस्तल्लग्नसषड्भार्कयोर्मध्ये प्राग्वद् रात्रिगता घटिकाः स्युरित्यर्थः । ध्रुव उद्यदुडोः स्वदेश इति पाठः साधुः ।

अत्रोपपत्तिः अतिसुगमा ॥ १० ॥

**विश्वनाथः**—अथोदयनक्षत्राद्वाऽस्तनक्षत्राल्लग्नं रात्रिगतं चाह । उद्यदिति । उद्यदुदयं प्राप्नुवदुयर्क्षं नक्षत्रं तस्य स्वदेशजो ध्रुवकः स एव तात्कालिकलग्नं स्यात् । अस्तं प्राप्नुवतो ध्रुवकः षड्राशियुक्तः । अस्तलग्नं स्यात् । तत उदयास्तलग्नतः सषड्भार्कतः प्राग्वद्रात्रिघटिकाः साध्याः । अश्विन्या उदयध्रुवकः स्वदेशजः० । ३ । १२ । ३० । अयं तत्काललग्नम् । अस्तध्रुवकः ० । ३ । ४७ । ३० । षड्राशियुक्तो जातमस्तलग्नम् ६ । ३ । ४७ । ३० । एवं सर्वेषामुदयास्तलग्नानि बोधव्यानि ॥ १० ॥

सुधाकरः—उद्यद्भध्रुवक एव तत्काले लग्नम् । अस्तं गच्छतो भस्य ध्रुवो हि पश्चिमक्षितिजे तदाऽस्तलग्नं तत् सषड्भं प्राक्क्षितिजे लग्नं भवत्येव । अन्यत् स्फुटमेव ॥ १० ॥

**इति नैजदेशपलभावशतो ह्युदयं खमध्यमथ वाऽस्तमयम् ।**
**व्रजदश्विभादिषु सुखार्थमिह स्थिरलग्नकानि विदधीत सुधीः ११**

**मल्लारिः**—अथ स्वदेशीयानि नक्षत्राणामुदयादीनि स्थिरलग्नानि कार्याणीत्याह । निजदेशपलभावशत उदयं खमध्यमस्तं वा गच्छतो नक्षत्रस्योक्तरीत्या सुधीः स्थिरलग्नकानि कुर्वीतेत्यर्थः । चतुर्मितां पलभां प्रकल्प्य आचार्येण स्थिराणि मध्यलग्नानि शिष्यकृपया कृतानि सन्ति ।

' प्राग्लग्नस्य लवाः खमध्यकगते दास्रे द्विदिग्भिर्मिताः ' इत्यादिभिः ॥ ११ ॥

दैवज्ञवर्यस्य दिवाकरस्य सुतेन मल्लारिसमाह्वयेन ।
वृत्तौ कृतायां ग्रहलाघवस्याभूदृक्षदीप्त्यानयनाधिकारः ॥

इति श्रीग्रहलाघवस्य टीकायां नक्षत्रच्छायाधिकार एकादशः ॥ ११ ॥

**विश्वनाथः**—अथ स्वदेशनक्षत्रोदयानि स्थिरलग्नानि कार्याणीत्याह । इति अनेन प्रकारेण निजदेशे पलभावशात् उदयमध्यास्तलग्नानि। अथ सुधीर्बुद्धिमान् स्थिरलग्नानि सुखार्थं विदधीत कुर्यादित्यर्थः । एवं जातान्युदयमध्यमास्तलग्नानि ॥ ११ ॥

इति नक्षत्रच्छायाधिकारोदाहरणम् ।

**सुधाकरः**—स्फुटैव वासना ॥ ११ ॥

इति सुधाकरनिर्मितवासना सकलया कलया कलयासना ।
भगणभादिविधौ परया गता भवलयावलया वलयाऽऽगता ॥

इति नक्षत्रच्छायाधिकारः ।

## अथ शृङ्गोन्नत्यधिकारः ।

**मासस्य प्रथमेऽन्तिमेऽथ वांऽघ्रौ विधुशृङ्गोन्नतिरीक्ष्यते यदह्नि।**
**तपनास्तमयोदयेऽवगम्यास्तिथयः सावयवाः क्रमाद्गतैष्याः १**

**मल्लारिः**—अथ चन्द्रशृङ्गोन्नत्यधिकारो व्याख्यायते । मासस्य प्रथमे चरणे अथ वा अन्तिमे चरणे यस्मिन्नभीष्टे दिने शृङ्गोन्नतिरवलोक्यते तद्दिवसे तपनास्तमयोदये क्रमादिति शुक्लपक्षे सूर्यास्तकाले गततिथयः कृष्णपक्षे सूर्योदये एष्यतिथयः सावयवा ज्ञेयाः ।

अत्रोपपत्तिः । एष चन्द्रो जलमयस्तस्य यथा यथा सूर्यकिरणसंयोगस्तथा तथा शृङ्गोच्चत्वम् । एवममायां सूर्यचन्द्रयोः साम्यात् तत्र सिताभावः । एवं प्रतिपदि द्वादशभागान्तरे किञ्चित् सितम् । एवमष्टम्यामर्धं बिम्बं सितम् । तत् सितं न समौच्च्यं कक्षाभेदात् सूर्यचन्द्रयोर्दक्षिणोत्तरान्तरस्य विद्यमानत्वात् । अत्र बिम्बार्धादधिके सिते शृङ्गौच्च्यदर्शनाभावः । अत एव शुक्लाष्टमीपर्यन्तं कृष्णाष्टमीतोऽग्रे वा शृंगोन्नतिरवलोक्येत्युपपन्नम् । एवं शुक्लपक्षे शृंगोन्नतिः सूर्यास्तासन्ना कृष्णपक्षे सूर्योदयासन्ना भवति । अत एव 'तपनास्तमयोदये' इत्याद्युक्तम् ॥ १ ॥

**विश्वनाथः**—अथ शृंगोन्नतिः । शाके १५३२ ज्येष्ठशुक्ले ५ गुरौ शृंगोन्नत्यवलोकनार्थमहर्गणः। चक्रम् ८। अहर्गणः ८०३। अस्मान्मध्यमः सूर्यः १ । १६ । ३३ । ५४ । चन्द्रः ३ । ९ । ३३ । ९ । उच्चम ०। २४ । ५७ ।

४८ । राहुः २ । २२ । २४ । २३ । रवेर्मन्दकेन्द्रम् १ । १ । २६ ।६। मन्दफलं धनम् १ । ८ । २२ । संस्कृतो रविः १ । १७ ।४२ । १६। अयनांशाः१८। ८। चरमृणम् १०६ । स्पष्टो रवि १ । १७ । ४० । ३० । स्पष्टा गतिः ५६ । २० । फलत्रयसंस्कृतश्चन्द्रः ३ । ९ । १ । २८ । मन्दकेन्द्रम् ४ । १५ । ५५। ४० । मन्दफलं धनम् ३ । २९ । २१ । स्पष्टश्चन्द्रः ३ । १२ । ३० । ४९ । स्पष्टा गतिः ८३७ । १३ । दिनमानम् ३३ ।३२॥ १ ॥

अथ शृङ्गोन्नत्यधिकारः ।

सुधाकरः—प्रथमे चरणे शुक्लपक्षे गताभ्यः सावयवाभ्यस्तिथिभ्यो रविचन्द्रान्तरांशा रविगुणाभ्यो भवन्ति । चतुर्थे चरणे च चन्द्रस्य रवेः पृष्ठगतत्वाच्च गम्याभ्यस्तिथिभ्यो रविगुणाभ्यश्चन्द्ररविविवरभागा भवन्तीति क्रमशो गतैष्याः सावयवास्तिथयः साधिता इति॥ १ ॥

रविहततिथयोंऽशास्तद्वियुग्युक् क्रमेण
द्युमणिरपरपूर्वे मासपादे विधुः स्यात् ।
नृपगुणतिथिरूना स्वघ्नतिथ्याक्षभाघ्नी
शरकुहृद्दुगाशा संस्कृतार्कापमांशैः ॥ २ ॥
चन्द्रस्य च व्यस्तशरापमांशै-
र्द्विनिघ्नतिथ्या विहृतांऽगुलाद्यम् ।
संस्कारादिक्कं वलनं स्फुटं स्यात्
स्वेष्वंशहीनास्तिथयः सितं स्यात् ॥ ३ ॥

मल्लारिः—अथ गतैष्यसावयवतिथिभ्यो रवितच्चन्द्रं साधयति । द्वादशगुणास्तिथयो भागाः । तैर्भागैः सूर्यो मासान्त्यपादे हीनः । मासप्रथमांघ्रौ युक्तश्चन्द्रः स्यात् । षोडशगुणा तिथिस्तिथिवर्गेणोना पलभागुणा पञ्चदशभक्ता फलं भागादिकमुत्तरं स्यात् । तत् सूर्यक्रान्त्या संस्कृतं कार्यम् । अत्र सर्वत्र संस्कारस्तु एकदिशोर्योगोऽन्यदिशोरन्तरमिति प्रसिद्धः । चन्द्रस्य व्यस्तदिशा शरेण व्यस्तदिक्क्रान्त्या च तत् संस्कार्यम्। ततस्तद्द्विगुणाभिस्तिथिभिर्भाज्यम्। फलं संस्कारादिगंगुलाद्यं वलनं स्फुटम् । स्वीयो यः पञ्चमांशस्तेन हीनास्तिथयः। अंगुलाद्यं सितं स्यादित्यर्थः ।

अत्रोपपत्तिः । रविचन्द्रान्तरे द्वादशभागतुल्ये एका तिथिर्भवति अतस्तिथयो द्वादशगुणा रविचन्द्रान्तरभागा जाताः । ते रवौ योज्याश्चन्द्रो भवत्येव। अत एवात्र शुक्ले युक्ता इत्युक्तम् । कृष्णेऽपि योज्याः परमत्र कृष्णे एष्यतिथयो गृहीताः सन्त्यतो हीना इत्युक्तम् । अथ वलनोपपत्तिः । तत्र चन्द्रसूर्ययोर्दक्षिणोत्तरमन्तरं भुजः । तस्य वलनसंज्ञा यतोऽन्वर्थ नाम । तावताऽन्तरेण चन्द्रशृंगं

वलति । ऊर्ध्वाधरमन्तरं कोटिः । तयोर्मध्ये तिर्यक्कर्णः । तद्दक्षिणोत्तरमन्तर साध्यते । सूर्यक्रान्तिश्चन्द्रस्य शरेण क्रान्त्या च संस्कार्या । तत्र व्यस्तदिक्त्वेऽथ हेतुः । यत उभयोर्दक्षिणोत्तरान्तरे साध्यमाने समदिशोरन्तरं भिन्नदिशोर्योगः कर्त्तव्यः । संस्कारलक्षणंतु समदिशोर्योगो भिन्नदिशोरन्तरमित्यतो व्यस्तशरापमांशैरित्युक्तम् । एवमत्र दक्षिणोत्तरमन्तरं निरक्षदेशीयं जातम् । तत् स्वदेशीयकरणार्थं फलं नृपगुणातिथिरित्याद्युत्पादितम् । तद्यथा । रवेरुदयेऽस्ते शृंगोन्नतौ चन्द्रो यदा खस्वस्तिके तदा तयोर्दक्षिणोत्तरान्तरमक्षांशा एव । अथेष्टस्थानस्थे चन्द्रेऽनुपातः । यदि त्रिज्यातुल्यया १२० व्यर्केन्दुदोर्ज्यया अक्षांशतुल्यमन्तरं तदेष्टदोर्ज्यया किमिति।अत्र तिथिर्द्वादशगुणा व्यर्केन्दुदोर्भागाः।ते द्विगुणा दोर्ज्या साक्षांशगुणा त्रिज्याभक्ता कृता । तत्राक्षांशस्थाने पलभा गृहीता । तेन पलभा पञ्चगुणा पलभावर्गदशांशोनाक्षांशाः स्युरिति । प्रथमं पञ्चगुणः किञ्चिन्न्यूना ग्राह्य इत्यत्राधिक एव गृहीतः सत्र्यंशाः पञ्च ५ । २० । एवं तिथेर्गुणाः १२ । २ । अत्र गुणानां घातो जातो गुणः १२८ । त्रिज्याहरः १२० । गुणहरावष्टाभिरपवर्त्तितौ जातो गुणः १६ । हरः १५। पलभागुणा शरकुद्धादिति जातम् । अत्र स्थानद्वयेऽन्तरं जातम् । यतो द्विगुणभागाः सर्वभुजभागेषु दोर्ज्या न भवति । सत्र्यंशपञ्चगुणपलभातुल्या अक्षांशा न भवन्ति । यतः पञ्चगुणपलभायाः पलभावर्गदशांशो न्यूनोऽस्ति तेन प्रतितिथिकर्यदन्तरमिति ज्ञानार्थमुपायः । अत्र स्थानद्वयेऽन्तरमेकमक्षांशे पलभागदशांशतुल्यम् । द्वितीयस्थाने द्विगुणभागा दोर्ज्येति स्थानद्वयेऽन्तरमधिकमस्ति वर्गात्मकम् । तदन्तरं तिथिवर्गपञ्चदशांशतुल्यमधिकमस्ति तेन प्रथमं नृपगुणातिथिष्वेव हीनास्तिथिवर्गः कृतः। यतोऽग्रे पञ्चदश हरोऽस्त्येव । अतो नृपगुणातिथिःस्वघ्नतिथ्योनाऽक्षभाघ्नी शरकुद्धद्वलनं भवतीत्युपपन्नम् । व्यस्तदिक्कार्थमुदगाशा। एवं संस्कारदिग्वलनं जातम्। अत्र क्रान्तिशराक्षांशानां संस्काराज्जात वलनमंशाद्यम् । तस्यांगुलीकरणार्थमुपायः । प्रतिपदन्ते रविचन्द्रान्तरे द्वादशभागाः।तत्र षडंगुलतुल्यं विम्बार्धं प्रकल्प्यानुपातः । यदि द्वादशभागैः षडंगुलानि तदेष्टवलनभागैः किमिति । अत्र गुणहरौ गुणेनापवर्त्य जातो हरः २ । पुनरन्योऽनुपातः । द्वादशभागप्रमाणेन यद्ययं हरस्तदेष्टव्यर्केन्दुदोर्भागैः किमिति व्यर्केन्दुदोर्भागषडंशो वलनस्य हरः । द्वादशतुल्ये रविचन्द्रान्तरे एकतिथिः । तत्र द्वयं हरः । एकतिथ्या द्वयं हरस्तदेष्टतिथ्या किमिति अतो द्विनिघ्नतिथ्या विहृतेत्युपपन्नम्। अथ सितोपपत्तिः । अत्र रविचन्द्रयोः पादोनषट्काष्टलवान्तरेऽर्धविम्बं सितं भवति । अतः सार्धसप्ततिथिषु विम्बार्धं सितं षडंगुलतुल्यम् । तेनानुपातः । यदि सार्धसप्ततिथिभिः षडं गु

लतुल्यं सितं लभ्यते तदेष्टतिथिभिः किमिति। तिथयो यावत् षड्गुणाः सार्धसप्तभक्ताः क्रियन्ते तावत् स्वपञ्चमांशहीना एव भवन्तीत्युपपन्नम्॥ २-३॥

**विश्वनाथः**----अथ वलनसाधनार्थं गतैष्यातिथिसाधनमाह। मासस्य प्रथमे चरणे अथवा अन्तिमे चरणे। शुक्लप्रतिपदमारभ्याष्टमीपर्यन्तं प्रथमचरणः। कृष्णाष्टम्या दर्शपर्यन्तमन्तिमश्चरणः। तत्र यस्मिन्निष्टदिने चन्द्रस्य शृङ्गोन्नतिरवलोक्यते तद्दिवसे तपनास्तमयोदये शुक्लपक्षे सूर्यास्तकालीनरविचन्द्राभ्यां तिथयः सावयवाः कार्याः। कृष्णपक्षे सूर्योदयकालीनरविचन्द्राभ्यामेष्यतिथयः सावयवा घटीपलाद्यवयवसहिताः कार्याः। शुक्लपक्षे सूर्यास्तमये शृङ्गोन्नतिरवलोक्यते कृष्णपक्षे सूर्योदये इत्यर्थः। अर्थात् शुक्लाष्टम्यादिकृष्णाष्टम्यन्तं तिथिषु शृंगोन्नतिर्नास्त्येवेति सिद्धम्। सूर्यास्ते चालितः सूर्यः १। १८। १२। ३२। चन्द्रः ३। १९। ४८। २। राहुः २। २२। २२। ३८। सूर्यास्ते गताः सावयवास्तिथयः। ५। ७। २०। २। यदा पञ्चांगस्थरविराहू सावयवास्तिथयश्चेद् गृह्यन्ते तदा सूर्यास्ते सावयवास्तिथयः ५। ७। २०। रवि-१२ हता जाता अंशाः ६१। २८। ०। सूर्यास्ते द्युमणिः १। १८। १२। ३२। मासस्य पूर्वपादत्वादंशैर्युक्तो जातश्चन्द्रः ३। १९। ४०। ३२। यदा अहर्गणाच्चन्द्रः साध्यते तदा गतस्य प्रयोजनं नास्ति। गताः सावयवास्तिथयः ५। ७। २०। नृप-१६ गुणाः ८१। ५७। २०। स्वघ्नतिथ्या २६। १४। १३ ऊनाः ५५। ४३। ७। अक्षभया ५। ४५ गुणिताः ३२०। २२। ५५। पञ्चदश-१५ भक्ताः फलं भागादिकमुत्तरम् २१। २१। ३१। इदं सूर्यस्योत्तरक्रान्तिभागैः २१। ४४। २९ संस्कृतं जातमुत्तरम्। ४३। ६। ०। व्यगुविधुः ०। २७। २५। २४। अस्मात् 'नृपतिथि' इत्यादिखण्डकैः साधितोऽगुलादिशरः उत्तरः ४१। २३। ३५। त्रिगुणितोंऽशादिरुत्तरशरः २। ४। १०। चन्द्रस्य क्रान्तिरुत्तरा १८। ३६। ५९। प्रागानीतं भागाद्यमुत्तरं फलम्। ४३। ६। ०। इदं व्यस्तदिक् शरभागैः संस्कृतम् ४१। १। ५०। इदं चन्द्रस्य व्यस्तक्रान्त्यंशेन संस्कृतं जातमुत्तरम् २२। २४। ५१। इदं द्विगुणिततिथिभि-१०। १४। ४० भक्तं जातं स्पष्टमंगुलाद्यं वलनं संस्कारस्योत्तरत्वादुत्तरम् २। ११। ६। सावयवास्तिथयः ५। ७। २०। स्वपञ्चमांशेन हीनाः १। १। २८। जातं सितम् ४। ५। ५२॥ २-३॥

**सुधाकरः**—द्वादशगुणाः सावयवास्तिथयो रविचन्द्रान्तरांशा भवन्ति। शुक्लपक्षे रवेश्चन्द्रस्याग्रगतत्वात् ते विवरांशा रवौ योजिता विधुः स्यात्। एवं कृष्णे पक्षे तु चन्द्रस्य पृष्ठगतत्वाद्रवेः शोध्यास्ते गम्यसावयवतिथिभवा विवरांशास्तदा विधुर्भवति। अथात्र सूर्यास्तसमये

सूर्योदये च विधुश्रृङ्गोन्नतिः साध्यते । तत्र द्वादशगुणा गतैष्यास्तिथयो रविचन्द्रान्तरभागाः । तेषामंशानां लघुज्यैव स्थूलमपि सुखार्थं चन्द्रस्य तात्कालिकीष्टहृतिः कल्पिता सा विषुवतीगुणा द्वादशहृता चन्द्रशंकुतलं तद् द्वाभ्यां हृतं शंकुतलांशाः । एतत् सर्वं न्यासपूर्वकं प्रदर्श्यते । तत्र श्रृङ्गोन्नतिप्रकरणान्तरांशज्या

$$= \frac{(\text{१८०} - \text{१२ ति})\,\text{१२ ति} \times \text{४८०}}{\text{४०५००} - (\text{१८०} - \text{१२ ति})\,\text{१२ ति}}$$

$$= \frac{\left\{\dfrac{\text{१८०}}{\frac{\text{४५}}{\text{४}}} - \dfrac{\text{१२ ति}}{\frac{\text{४५}}{\text{४}}}\right\} \text{ति} \times \text{४८०}}{\dfrac{\text{४०५००}}{\frac{\text{४५}}{\text{४}} \times \text{१२}} - \left\{\dfrac{\text{१८०}}{\frac{\text{४५}}{\text{४}}} - \dfrac{\text{१२}}{\frac{\text{४५}}{\text{४}}}\text{ति}\right\} \text{ति}}$$

$$= \frac{\left(\text{१६} - \dfrac{\text{४८}}{\text{४५}}\text{ति}\right) \text{ति} \times \text{४८०}}{\dfrac{\text{४०५००}}{\text{१३५}} - \left(\text{१६} - \dfrac{\text{४८}}{\text{४५}}\text{ति}\right) \text{ति}}$$

$$= \frac{(\text{१६} - \text{ति})\,\text{ति} \times \text{४८०}}{\text{३००} - (\text{१६} - \text{ति})\,\text{ति}} \quad \text{स्वल्पान्तरात्}$$

$$= \frac{(\text{१६} - \text{ति})\,\text{ति}}{\dfrac{\text{३००}}{\text{४८०}} - \dfrac{(\text{१६} - \text{ति})\,\text{ति}}{\text{४८०}}} = \frac{(\text{१६} - \text{ति})\,\text{ति}}{\dfrac{\text{५}}{\text{८}} - \dfrac{(\text{१६} - \text{ति})\,\text{ति}}{\text{४८०}}}$$

अत्र द्वितीयखण्डं $- \dfrac{(\text{१६} - \text{ति})\,\text{ति}}{\text{४८०}}$ मिदं सर्वदा रूपाल्पत्वात् त्यक्तं ततो जातान्तरांशज्या चन्द्रेष्टहृतिलिप्ता $= \dfrac{(\text{१६} - \text{ति})\text{ति}}{\frac{\text{५}}{\text{८}}} = \dfrac{\text{८}(\text{१६ति} - \text{ति}^{\text{२}})}{\text{५}}$ । इयं विषुवतीगुणा द्वादशहृता शंकुतलम्

$= \dfrac{(\text{१६ति} - \text{ति}^{\text{२}}) \times \text{८वि}}{\text{५} \times \text{१२}} = \dfrac{(\text{१६ति} - \text{ति}^{\text{२}}) \times \text{२ वि}}{\text{१५}}$ । इदं द्विभक्तं जाताः शंकुतलांशाः

$= \dfrac{(\text{१६ति} - \text{ति}^{\text{२}})\ \text{वि}}{\text{१५}}$ एते गोलयुक्त्या यद्यपि दक्षिणा भवन्ति तथाप्याचार्येण विपरीतवक्रदिग्ज्ञानार्थेते विपरीता उत्तराः कल्पिताः । एतेन 'उदगाशा' इत्यन्तमुपपन्नम् । अथ यदि रविकान्तिः = क्रा । चन्द्रमध्यक्रान्तिः = $\text{क्रा}_{\text{१}}$ । चन्द्रशरांशाः = श । चन्द्रस्पष्टक्रान्तिश्च = $\text{क्रा}_{\text{२}} = \text{क्रा}_{\text{१}} \pm \text{श}$ । तदा द्विगुणेन स्वल्पान्तरात् खार्कमितव्यासार्धे रविकान्तिज्या = ज्याक्रा = २ क्रा । अक्षक्षेत्रानुपातेनाग्रा $= \dfrac{\text{२ क्रा. अक}}{\text{१२}} = \dfrac{\text{२ क्रा}}{\frac{\text{१२}}{\text{अक}}}$ । यदि पलकर्णः $<$ १८

तदा अर्धाधिके रूपं ग्राह्यमिति नियमेन $\frac{१२}{अक}$=१ स्वल्पान्तरात्। तदा रवेरग्रा = $\frac{२ का}{\frac{१२}{अक}}$

= २ का। इयं द्विभक्ता जाता अग्राचापांशाः = का । एवं विधोरग्राचापांशाः = $का_२$ = $का_१$ ± श। शंकुतलांशानां विपरीतदिक्त्वाद्विधोरग्रांशा अपि व्यस्ताः कृताः। एवं चन्द्रशंकुतलांशाग्रांशसंस्कारेण चन्द्रस्य व्यस्तदिका भुजांशा जाताः। रवेः क्षितिजस्थत्वात् शंकुतलाभावादग्राचापांशा एव तस्य भुजांशाः सिद्धाः। अथैकदिशोर्भुजचापयोरन्तरमन्यथा योगो गोले स्पष्टभुजचापमानं भवति। इह तु भिन्नदिशोरन्तरमेकदिशोर्योग इति संस्कारविधिः सर्वत्रैवाचार्यण स्वीकृतोऽतोऽत्र चन्द्रभुजचापस्य विपरीतदिक्कल्पनेन भुजचापयोराचार्योक्त-संस्कारविधिना संस्कारेण जातं संस्कारदिक्कं स्पष्टभुजचापमानम्। एवमत्र भास्करादिसाधित-स्पष्टभुजदिक्काद्विपरीतदिक्कं स्पष्टभुजचापमानं जातम्। इदं द्विगुणितं खार्कमितव्यासार्धे स्वल्पा-न्तरात् जातं स्पष्टभुजमानम्=२स्पभुचा। तथा रविचन्द्रयोरन्तरार्धज्या द्विगुणा जातं ब्रह्मगुप्तम-तेन बिम्बान्तरसूत्रम्=२×१२ ति। ततो 'भुजो रसघ्नः श्रवणेन भक्तः' इति भास्करविधिना जातं

वलनम् = $\frac{६×२स्पभुचा}{२×१२ ति}$ = $\frac{स्पभुचा}{२ ति}$। इद वलनं भास्करादिसाधितवलनदिक्काद्विपरीतदिक्कं जातमिति मनसि संप्रधार्यम्। अथ पञ्चदशतिथिभिः पूर्णं चन्द्रबिम्बं द्वादशांगुलात्मकं शुक्लं तदेष्टतिथिभिः कियत्। लब्धमिष्टतिथिसम्बन्धि सितांगुलमानम् = $\frac{१२ इति}{१५}$ = $\frac{४ इति}{५}$

= $\frac{(५-१) इति}{५}$ = इति − $\frac{इति}{५}$। एतेन सितानयनमुपपन्नम् ॥ २-३ ॥

**उन्नतं वलनाशायामन्यस्यां स्यान्नतं विधोः।**
**वलनस्यांगुलैः शृङ्गं किमत्र परिलेखतः ॥ ४ ॥**

**मल्लारिः**—अथ कस्यां दिशि शृङ्गोच्च्यमिति वदति। वलनस्य या दिक् तस्यां शृङ्गोन्नतत्वमन्यस्यां दिशि चन्द्रस्य शृंगं नतं स्यात्। वलनस्यांगुलैः शृंगौ-च्च्यपरिमाणं ज्ञेयम्। अत्र परिलेखतः किं साध्यम्। किमर्थं जडकर्म कर्त्तव्य-मिति भावः।

अत्रोपपत्तिः। सूर्यान्यदिशि वलनम्। अतो वलनान्यदिश्येव शृंगोन्नमनम्। अत्र वलनं व्यस्तदिकमस्त्यतो वलनदिश्येव शृंगौच्च्यं वलनांगुलतुल्यमेव। वल-नाभावे शृंगे समाने भवतः। अत्र परिलेखः शृंगोन्नतिदिग्ज्ञानार्थं कर्त्तव्यः। तत् शृंगोन्नतिदिग्ज्ञानं शृंगोच्च्यपरिमाणं वलनत एव जातम्। अतः किमर्थं परिलेखः कर्त्तव्य इत्युक्तम् ॥ ४ ॥

दैवज्ञवर्यस्य दिवाकरस्य सुतेन मल्लारिसमाह्वयेन ।
वृत्तौ कृतायां ग्रहलाघवस्याभूच्चन्द्रशृंगोन्नमनाधिकारः ॥
इति श्रीग्रहलाघवस्य टीकायां चन्द्रशृंगोन्नत्यधिकारो द्वादशः ॥ १२ ॥

**विश्वनाथः**— अथ शृंगस्योन्नतदिग्ज्ञानमाह । । वलनस्य दिक् तद्दिशि चन्द्रस्य शृंगमुन्नतं भवति वलनस्यांगुलैर्वलनस्य यावन्ति अंगुलानि तन्मितांगुलैः शृंगमुन्नतं वलनान्यदिक् शृंगं नतं नम्रं भवतीति । एवं दिग्ज्ञाने सति परिलेखतः किं प्रयोजनम् । प्रकृते वलनस्योत्तरत्वादुत्तरादिशि शृंगोच्च्यम् ॥ ४ ॥

इति शृंगोन्नत्युदाहरणम् ।

**सुधाकरः**—'स्यात् तुङ्गशृङ्गं वलनान्यदिक्स्थम्' इति भास्करोक्तेनात्र तु वलनस्य विपरीतदिक्त्वाच्च 'वलनाशायामुन्नतं शृङ्गमित्याद्युपपद्यते ॥ ४ ॥

इति सुधाकरनिर्मितवासना सकलया कलया कलयासना ।
विधुविषाणविधौ परया गता भवलयावलया वलयाऽऽगता ॥

इति चन्द्रशृङ्गोन्नत्यधिकारः ।

---

## अथ ग्रहयुत्यधिकारः ।

**पञ्चर्त्वगाङ्कविशिखाः पृथगीशकर्ण-**
**योगहताः प्रकृतिभान्वरिसिद्धरामैः ।**
**भक्ताः फलोनसहिताः श्रवणेऽधिकोने**
**ते त्र्युद्धृताः स्युरसृजो वपुरंगुलानि ॥ १ ॥**

**मल्लारिः**—अथ ग्रहयुत्यधिकारो व्याख्यायते । पञ्च प्रसिद्धाः। ऋतवः षट् । अगाः सप्त । अङ्का नव । विशिखाः पञ्च । एतेऽङ्काः पृथक् । ईशानामेकादशानां कर्णस्य च योऽयोगो नामान्तरं तेनाहताः। ततः क्रमात् प्रकृत्याद्यङ्कभक्ताः प्रकृतिरेकविंशतिः । भानवो द्वादश । अरयः षट् । सिद्धाश्चतुर्विंशतिः । रामास्त्रयः । एभिर्भक्ताः । यदंगुलाद्यं फलं तेन पृथक् तेऽङ्काः ऊनसहिताः कार्याः । कर्णे एकादशाधिके ऊना ऊने सहिताः । ततस्ते त्रिभक्ताः । असृजः सकाशात् भौमादीनामंगुलात्मकानि विम्बानि भवन्तीत्यर्थः ।

अत्रोपपत्तिः । अत्रातीन्द्रियदृग्भिराद्यैराचार्यैस्त्रिज्यातुल्ये शीघ्रकर्णे भौमादीनां विम्बांगुलानि लक्षितानि । तान्येवाचार्येण पञ्चादीन्युक्तानि। तेषां स्पष्टीकरणं यथा । अन्त्यफलज्यातुल्येन त्रिज्याशीघ्रकर्णान्तरेण यदि विम्बत्रिभागतुल्यो ह्रासर्द्धिर्लभ्यते तदेष्टेन त्रिज्याशीघ्रकर्णान्तरेण किमिति । अत्र विम्बानामन्त्यफलज्या हारः । अत्र त्रिज्या भवमिता अतो भवशीघ्रकर्णान्तरं गुणः ।

अत्र यथा भौमस्यान्त्यफलज्या ७७ । इयं त्रिगुणा जातो हरः २३१ । यदि खार्कमिते व्यासार्धे अयं हरस्तदेकादशतुल्ये व्यासार्धे क इत्यतोऽयं हरः २३१ । एकादशगुणः २५४१ । खार्कभक्तो जाता एकविंशतिर्भौमस्य हरः । एवं सर्वेषामेव फलेन त एवोनसहिता इति । दूरस्थे ग्रहे बिम्बं लघु त्रिज्याधिकः कर्णः । अतस्तत्रोनम् । समीपे बिम्बाधिक्यं तत्र त्रिज्यातः कर्णोनता अतस्तत्र युक्तमित्युक्तम् । तद्बिम्बं कलाद्यम् । अंगुलादिकरणाय त्रिभिर्भक्तम् । यतः कलात्रयेणैकमंगुलं भवति ॥ १ ॥

**विश्वनाथः**---अथ ग्रहयुत्यधिकारोदाहरणम् । अत्र युतिसाधनार्थं कस्मिंश्चिद्ग्रहयुत्यासन्नदिने स्फुटौ ग्रहौ कार्यौ शीघ्रकर्णश्च वेद्यः । स्पष्टसूर्यश्च । संवत् १६६७। शाके १५३२। वैशाखशुक्ले १० रवौ । अस्मिन् दिने ग्रहयुतिसाधनार्थमहर्गणः । चक्रम् ८ । अहर्गणः ७७८ । मध्यरविः ० । २१ । ५५। ३० । भौमः ९ । ० । ३३ ।५१ । शनिः १० । ५ । ४५ । ६९ । रवेर्मन्दकेन्द्रम् १ । २६ । ४ । ३० । मन्दफलं धनम् १ । ४८ । २६ । संस्कृतो रविः ० । २३ । ४३ । ५६ । अयनांशाः १८ । ८ । चरमृणम् ७५ । स्पष्टो रविः ० । २३ । ४२ । ४१ । स्पष्टागतिः ५७ । ५६। अथ भौमस्पष्टीकरणम् । शीघ्रकेन्द्रम् ३।२१।२१।३९। शीघ्रफलार्धं धनम् १८ । ५० । ३७। संस्कृतो भौमः ९ । १९ । २४ ।२८। मन्दकेन्द्रम् ६ । १० । ३५। ३२। मन्दफलमृणम् २ । २ ।५२। मन्दस्पष्टो भौमः ८ । २८ । ३० । ५९। शीघ्रकेन्द्रम् ३ । २३। २४ । ३१ शीघ्रफलं धनम् ३८ । ४ । १० । स्पष्टो भौमः १० । ६ । ३५ । ९। स्पष्टा गतिः ४२ । ५०। अथ शनिस्पष्टीकरणम् । शीघ्रकेन्द्रम् २ । १६ । ९ । ३१। शीघ्रफलार्धं धनम् २ ।२४। ३१ । संस्कृतः शनिः १० ।८।२८।३०। मन्दकेन्द्रम् ९ । २१ । ३१ । ३० । मन्दफलमणम् ८ । २२ ।४१। मन्दस्पष्टः शनिः ९ । २७ । २३।१८। शीघ्रकेन्द्रम् २ । २४।३२ । १२ । शीघ्रफलं धनम् ५ । ३५ । २६। स्पष्टः शनिः १० ।२।५८।४४। स्पष्टा गतिः३ । ३। दिनमानम् ३२ । ३०। भौमशीघ्रकर्णः ८ । ५२ । शनिशीघ्रकर्णः ११ । १३ । अथ बिम्बसाधनमाह । भौमबिम्बं कलाद्यं ५ पृथक्स्थम्५। ईश--११कर्णयो--८।५२ रन्तरेण २ । ८ गुणम् १०।४०। प्रकृति-२१ भक्तं फलम् ० । ३०। एकादशभ्यः श्रवणस्य न्यूनत्वात् फलेन पृथक्स्थं ५ सहितं जातम् ५ । ३० । इदं त्र्युद्धृतं त्रिभि-३ भक्तं जातमंगुलाद्यं स्पष्टं भौमबिम्बम् १ । ५० । अथ शनिबिम्बं ५ पृथक्स्थम्५।ईश-११कर्ण११।१३ योरन्तरेण ० । १३ । गुणितम् १ । ५ । रामै-३ भक्तम् । फलम् ० । २१ । एकादशभ्यः श्रवणस्याधिकत्वात् फलेन

पृथक्स्थेन रहितं जातम् ४ । ३९। त्रिभिर्भक्तं जातमंगुलाद्यं स्पष्टं शनिबिम्बम् १ । ३३ । असृजो भौममारभ्येत्यर्थः ॥ १ ॥

अथ ग्रहयुत्यधिकारः ।

सुधाकरः—उदयास्ताधिकारस्य १३ श्लोकोपपत्तौ प्रागेव स्फुटत्रिज्यायां शीघ्रकर्णानयनं प्रदर्शितम् । तत्र भौमादीनामन्त्यफलज्या च क्रमेण ७ । ४ । २ । ८ । १ । आचार्येण भौमादीनां मध्यमबिम्बलिप्ताश्च क्रमेण ५ । ६ । ७ । ९ । ५ । एताः स्वीकृताः । ततः

'त्रिज्याशुकर्णविवरेण पृथग् विनिघ्न्य त्रिज्यया निजान्त्यफलमौर्विकया विभक्ता'

इत्यादिभास्करविधितः स्पष्टबिम्बकलानयनं सुबोधं तत् त्रिहृतं वपुरंगुलानि जायन्त इति सर्वं स्फुटमेव ॥ १ ॥

**अधिकजवखगेऽधिकेऽल्पभुक्ते-**
**रथ कुटिलेऽल्पतरेऽनुलोमतो वा ।**
**अनृजुगखगयोस्तु शीघ्रगेऽल्पे**
**युतिरनयोः प्रगतान्यथा तु गम्या ॥ २ ॥**

मल्लारिः—अथ ग्रहयुतेर्गतैष्यताज्ञानमाह ।ययोर्ग्रहयोर्युतिः साध्यते तयोर्मध्येऽधिकगतिर्ग्रहः स चेदल्पगतेर्ग्रहाद्राश्याद्यवयवेनाधिकस्तदा तयोर्युतिर्गतेति वाच्यम् । अथ वा कुटिले वक्रिणि ग्रहे अनुलोमतो मार्गिग्रहादल्पतरे सति युतिर्गता वाच्या । अनृजुगखगयोर्द्वयोर्वक्रिणोर्ग्रहयोर्मध्ये शीघ्रगतौ ग्रहे भागादिना अल्पे युतिर्गतैव वाच्या ।अन्यथोक्तलक्षणवैपरीत्ये ग्रहयुतिर्गम्येत्यर्थः

अत्रोपपत्तिः प्रत्यक्षसुगमा ॥ २ ॥

विश्वनाथः—अथ ग्रहयुतेर्गतैष्यताज्ञानमाह अधिकेति । ग्रहयुत्यासन्नग्रहयोर्मध्ये अल्पभुक्तेर्न्यूनगतेः सकाशात् । अधिकजवखगोऽधिकगतिर्ग्रहः । अधिकोऽशाद्यवयवेनाधिकः । तदा अनयोर्युतिः प्रगता गतेति वाच्यम् । अथ वाऽनुलोमतो मार्गिग्रहान् कुटिले वक्रिणि ग्रहे अल्पतरे सति युतिर्गता वाच्या । अथ वा अनृजुगखगयोर्द्वयोर्वक्रिणोर्ग्रहयोर्मध्ये शीघ्रगतौ ग्रहे अल्पे युतिः प्रगता वाच्या । अन्यथोक्तलक्षणवैपरीत्ये ग्रहयुतिर्गम्यत्यर्थः । अल्पगतेः शनेः १० । २ । ५८ । ४४ । सकाशादधिकगतिर्भौमः १० । ६ । ३५ । ९ अधिकोऽतो गतलक्षणा युतिः ॥ २ ॥

सुधाकरः—'यातो तयोः संयुतिरल्पभुक्तौ' इत्यादिना भास्करोक्तेन प्रकारेण स्फुटा वासना ॥ २ ॥

**ऋजुगतिखगयोस्तु वक्रयोर्वा**
**विवरकला गतिजान्तरेण भक्ताः ।**

**गतिजयुतिहृता यदैकवक्री**
**युतिरगता प्रगताप्तवासरैः स्यात् ॥ ३ ॥**

**मल्लारिः**----अथ ग्रहयुतिदिवसज्ञानमाह मार्गिणोर्द्वयोर्ग्रहयोः सतोः। अथ वा वक्रयोर्द्वयोर्ग्रहयोः सतोः । तदन्तरकलाः कार्याः । ता गत्यन्तरेण भक्ताः। यदैको वक्रो परो मार्गी तदाप्यन्तरकला गतियोगभक्ताः कार्याः । 'आप्तैर्दिनैर्ग्रहयुतिर्गम्या गता पूर्वोक्तलक्षणेन स्यात् ।

अत्रोपपत्तिः । यदि गत्यन्तरकलाभिरेकेदिनं तदा ग्रहान्तरकलाभिः किमिति वक्रिणि गतियोग एवान्तरमिति । अतस्तत्र तेनैवाप्ता लब्धादिनैरेष्यगतैर्ग्रहयुतिसमयः स्यादित्युपपन्नम् ॥ ३ ॥

**विश्वनाथः**--अथ ग्रहयुतिदिवसज्ञानमाह ऋजुगतीति । मार्गिणोर्द्वयोर्ग्रहयोः सतोः। अथ वा वक्रयोर्द्वयोर्ग्रहयोः सतोस्तदन्तरकलाः कार्याः। ता गत्यन्तरेण भक्ताः। यद्येको वक्री तदा तु ग्रहान्तरकला एव गतियोगेन भक्ताः कार्याः। आप्तैर्दिनैर्ग्रहयुतिर्गम्या गता वा पूर्वोक्तलक्षणेन स्यात् । मार्गिग्रहयोर्भौमशन्योरन्तरम् ० । ३ । ३६ । २५ । कलाः २१६ । २५ । गत्यन्तरेण ३९ । ४७ । भक्ताः फलं गतदिवसाः ५ । २६ । २३ । एभिर्दिनैः पृष्ठे ग्रहयुतिर्भविष्यति। इदं दिनादिकं वैशाखशुक्लदशम्यां शोधितं जातं वैशाखशुद्धचतुर्थ्यां सूर्योदयाद्गतघटीषु ३३ । ३७ । तथा रात्रिगतघटीषु २ । ७ । शनिभौमयोर्युद्धम् ॥ ३ ॥

सुधाकरः—'दिवौकसोरन्तरलिप्तिकौघात्' इत्यादिभास्करविधिना स्फुटैव वासना । ३।

**चाल्यौ खेटौ समौ स्तो ग्रहयुतिदिवसैश्चन्द्रबाणः स्वनत्या**
**संस्कार्योऽत्र ग्रहौ स्वेषुदिशि समदिशोस्त्वल्पबाणोऽपरस्याम्।**
**एकान्याशौ यदेषू विरहितसहितौ खेटमध्येऽन्तरं स्यात्**
**भेदो मानैक्यखण्डादिह लघुनि तदाल्पं हि किं लम्बनाद्यम् ४**

**मल्लारिः**----अथ ग्रहयोर्दक्षिणोत्तरदिक्संस्थानं तदन्तरं च साधयति । ग्रहयुतेर्ये दिवसाः समागतास्तैर्दिवसैः स्वगत्या ग्रहौ चाल्यौ तौ राश्याद्यवयवेन समौ स्तः । अत्र चन्द्रस्य शरः स्वनत्या सूर्यग्रहणोक्तरीत्या कृतया संस्कार्यः । ग्रहौ स्वशरादिशौ ज्ञेयौ । यस्य ग्रहस्य शर उत्तरः स ग्रह उत्तरस्याम् । यस्य दक्षिणः शरः स दक्षिणस्यामिति । द्वयोः शरयोः समदिशोः सतोर्योऽल्पबाणो ग्रहः सोऽधिकशरग्रहादन्यादिशि ज्ञेयः । इषू ग्रहयोः शरौ यदा द्वावपि एकदिशौ तदा तयोरन्तरं कार्यम्।यदा भिन्नदिशौ तदा तयोर्योगः। ग्रहयोर्मध्ये तद्दक्षिणोत्तर-

मन्तरमंगुलात्मकं स्यात्। चतुर्विंशतिभक्तं चेद्धस्तात्मकमपि स्यात्। इह शरांतरेऽग्रहयोर्मानैक्यखण्डाल्लघुनि अल्पे सति ग्रहबिम्बयोर्भेदः स्यात् । तदा सूर्यग्रहणवदल्पं लम्बनाद्यमत्र किं कर्त्तव्यम् । अल्पबिम्बत्वात् स्पर्शादिषु नोपलभ्यत एव । अतो लम्बनादि जडकर्म किमर्थं कार्यमिति भावः ।

अत्रोपपत्तिः । ग्रहयुतिदिवसा ग्रहयोरन्तरे गतिवशात् साधिताः । तैर्दिवसैश्चालितौ ग्रहौ समौ भवत एवेति प्रत्यक्षम् । अत्र चन्द्रेण सहान्यग्रहस्य योगे साध्ये चन्द्रशरः स्वनत्या संस्कार्य एव यतो नतिरपि दक्षिणोत्तरमन्तरम् । अत्रापि ग्रहकक्षयोर्भिन्नत्वं द्रष्टुर्भूपृष्ठगतत्वं चेति हेतुद्वयं वर्त्तत एव । अतश्चन्द्रशरो नत्या संस्कार्य एव इति युक्तम् । ग्रहौ स्वशरदिशावेव भवतः । शरयोर्दिक्साम्ये अल्पबाणोऽधिकबाणादन्यदिशि भविष्यत्येव । अथ ग्रहयोर्दक्षिणोत्तरमन्तरं साध्यम् । तत्तु शरान्तरतुल्यं क्रान्त्यन्तराभावात्। अत एकदिशोः शरयोरन्तरं कार्यम् । अन्यदिशोः शरयोर्योगो विनाऽन्तरं न सिध्यत्यतो योगः कार्य इति दक्षिणोत्तरमन्तरं स्यात् । स एव ग्रासस्थित्यादिसाधनार्थं स्पष्टः शरो मानैक्यखण्डान्न्यूने शरे ग्राह्यग्राहकबिम्बसंयोगः स्यात् । तदाऽधःस्थो ग्रहश्चन्द्रऊर्ध्वस्थो रविरित्यादि प्रकल्प्य अकल्पितार्कादेव लग्नादि कृत्वा लम्बनादि साध्यं तत् स्पर्शादिकाले देयं ते, स्पष्टाः स्युः । इत्यादि बिम्बस्वल्पत्वात् स्पर्शादेर्दर्शनाभावात् किमर्थं जडकर्म कार्यमित्याचार्येणोक्तं तदपि युक्तम् ॥ ४॥

दैवज्ञवर्यस्य दिवाकरस्य सुतेन मल्लारिसमाह्वयेन ।
वृत्तौ कृतायां ग्रहलाघवस्य जातः खगानां मिलनाधिकारः ॥
इति श्रीग्रहलाघवस्य टीकायां ग्रहयुत्यधिकारस्त्रयोदशः ॥ १३ ॥

**विश्वनाथः**---अथ ग्रहयोर्दक्षिणोत्तरदिक्संस्थानं तदन्तरं च साधयति चाल्याविति । आगतैर्ग्रहयुतिदिवसैर्गतगम्यैस्तौ खेटौ चाल्यौ तौ राश्याद्यवयवेन समौ स्तः । तयोः समयोः शरः साध्यः । चन्द्रस्य चेद्युतिस्तदा चन्द्रबाणः स्वनत्या सूर्यग्रहणोक्तरीत्या कृतया संस्कार्यः । अत्र ग्रहौ स्वेषुदिशि स्वशरदिशौ ज्ञेयौ । यस्य ग्रहस्य उत्तरशरः स उत्तरस्यां यस्य दक्षिणशरः स दक्षिणस्यामिति । द्वयोः शरयोः समदिशोः सतोर्योऽल्पबाणः । यस्य शरोऽल्पः । स ग्रहोऽधिकशरग्रहादन्यादिशि ज्ञेयः । दक्षिणस्तदा उत्तरः । उत्तरस्तदा-दक्षिणः । यदा इष्टशरावेकान्याशौ तदा विरहितसहितौ । द्वावपि एकदिशौ तदा तयोरन्तरं कार्यं यदा भिन्नदिशौ तदा तयोर्योगः कार्यः । एवं कृते ग्रहयोर्मध्ये दक्षिणोत्तरमन्तरमंगुलादिकं स्यात् । अस्मिन्नन्तरे मानैक्यखण्डाल्लघुनि-न्यूने सति भेदयोगः स्यात् । यदा भेदयोगः स्यात् तदा भेदयोगे सूर्यग्रहणवदल्पं लम्बनाद्यमत्र किं कर्त्तव्यमल्पबिम्बत्वात्। तत्र स्पर्शादिको न लभ्यते अतो लम्ब-

-नादि जडकर्म किमर्थं कार्यमित्यर्थः । एभिर्दिनादिकैः ५ ।२६।२३। ऋणचाल-नानि । भौमचालनम् ३ । ५३ । ० । शनिचालनम् ० । १६ । ३५ । चालि-तो भौमः १० । २ । ४२ । ९ । शनिः १० । २ । ४२ । ९ । एतयोश्चालित-ग्रहयोरायनदृक्कर्म दत्त्वा पुनरपि अन्तरकला गतिजान्तरेण भक्ता इत्यादिना दिनादिकं साध्यं तत्पूर्वसाधितसमागमकाले गम्यगतलक्षणवशेन सहितं रहितं कार्यम् । तद् ग्रहयुतेः स्पष्टं दिनादिकं भवति । पूर्वदिनादिकापेक्षया यावदधि-कमूनं दिनादिकं भवति तावद्भिश्चालितयोश्चालनयोश्चालनत्वात् समौ कार्यौ इति सिद्धान्तशिरोमणावुक्तमस्ति परन्त्वत्राचार्येण स्वल्पान्तरत्वादुपेक्षितम् । 'अथ मन्दस्पष्टखगा' वित्यादिना शरसाधनार्थं मन्दस्पष्टचालनं भौमस्य ३ ।२२।३२। शनेः ० । १० । ३ । चालितो मन्दस्पष्टो भौमः ८ । २५।८ । २७। मन्दस्पष्टः शनिः ९। २७ । १३ । १५। पात–१ । १० । ० । ०। रहितो भौमः ७ ।१५। ८ । २७ । केवलात् क्रान्त्यंशा दक्षिणाः १६ । ३८ । ३२ । त्रियमा–२३ हताः ३८२ । ४६ । १६ । शीघ्रकर्णेन ८ । ५२ । भक्ताः फलं ४३ ।१०। स्वचतुर्थां-शेन १० । ४७ रहितं ३२ । २३ । द्वाभ्यां भक्तं जातो भौमशरोऽङ्गुलादिको दक्षिणः १६ । ११ । पातोनस्य दक्षिणगोलस्थत्वात् । पातो-३ । १० नः शनिः ६ । १७ । १३ । १५ । केवलात् क्रान्त्यंशाः ६ । ५३ । १८ । त्रियमा–२३ हताः १५८ । २५ । ५४ । कर्ण–११। १३ भक्ताः फलं जातः शनिशरोऽङ्गुला-दिको १४ । ७ । दक्षिणः । अत्र भौमशनिशरयोरेकादिशि स्थितत्वादल्पबाणः शनिः उत्तरस्यां ज्ञातव्यः । अत्र शरयोरेकदिशातो बाणयोरन्तरमंगुलादिकं जातं ग्रहयोरन्तरम् २ । ४ । भौमबिम्बम् १ । ५० । शनिबिम्बम १ । ३३। अनयो-र्योगः ३ । २३ । अर्धितः । जातं मानैक्यखण्डम् १ । ४१ । अस्माद् ग्रहा-न्तरमधिकमतो भेदयोगो नास्ति । अतो लम्बनादिकं न कार्यम् । सत्यपि भेदयोगे स्वल्पत्वान्न कार्यम् । चेत् कार्यं तत्र प्रकारो ग्रहयोर्मध्ये अधःकक्षास्थश्चन्द्रः कल्प्यः । तदुपरिकक्षास्थः सूर्यः कल्प्यः । ग्रहयुतिर्यदा रात्रिसमये भवति तदा तस्मिन् समये केवलार्काल्लग्नं साध्यं न कल्पितार्कात् । तल्लग्नं वित्रिभं तस्मान्नतांशाः । तेभ्यः सूर्यग्रहणवद्धारः कार्यः । कल्पितार्कत्रिभोनलग्नयोर्विश्लेषांशाशांशहीनघ्नशक्रा इत्यादिना नाडिकाद्यं लम्बनं स्यात् । तल्लम्बनं कल्पितार्काद्वित्रिभे अधिकोने सति धनमृणं क्रमेण ग्रहयुतिसमये कार्यम् । स कालः स्फुटः स्यात् । अथ षड्गुणलम्बनमित्यादिना नतिः कार्या । कल्पितचन्द्रस्य शरो नतिसमये कार्यः स कालः स्फुटो भवतीति प्रागुक्तम् । यतस्तद् ग्रहयोरन्तरमंगुलाद्यं स भेदयोगे शरः स्यात् । ग्रहयो-

मानैक्यार्धे शरोनं ग्रासो भवति । अतः प्राग्वत् स्थितिः । तस्याः सूर्यग्रहणविधिना स्पर्शमोक्षलम्बनाभ्यां स्पर्शमोक्षकालौ भवतः । परिलेखवलनादिकं पूर्ववत् । कश्चिद्विशेषः । यदा मन्दाक्रान्तः शीघ्रगो वाऽधःस्थितस्तदा पूर्वदिशि स्पर्शः । वक्री वाऽधः स्थितस्तदाऽप्येवम् । अपरदिशि मोक्षः । मन्दगतिर्यो वक्री वा स रविः कल्प्यः शीघ्रगतिश्चन्द्रः कल्प्यः। ग्रहयुतिसमये लग्नाद् दृश्ये दृश्ययुतिज्ञानं 'प्राग्दृष्टिकर्मखचर'. इत्यादिना ज्ञेयम् ॥ ४ ॥

इति ग्रहयुत्यधिकारोदाहरणम्

**सुधाकरः**—'एवं लब्धैर्ग्रहयुतिदिनैः' इत्यादिना 'मानैक्यार्धाद्द्युचरविवरेऽल्पे भवेच्छेदयोगः' इत्यादिना च भास्करप्रकारेण सर्वेषां वासना प्रकटैव । अत्र स्वल्पान्तराद्ग्रहाणां लम्बनं त्यक्तमाचार्येण ॥ ४ ॥

इति सुधाकरनिर्मितवासना सकलया कलया कलयासना ।
ग्रहजभेदयुतौ परया गता भवलयावलया वलयाऽऽगता ॥

इति ग्रहयुत्यधिकारः समाप्तः ।

# अथ पाताधिकारः ।

**नन्दघ्नायनभागतुल्यघटिकोनाः सार्धविश्वे तथा**
**तारास्तावति साव्ययोगविगमे पातो व्यतीपातकः ।**
**ज्ञेयो वैधृतिरत्र यातघटिकाः सर्वर्क्षनाडीहृताः**
**स्पष्टाःस्युःशरषड्हृता६५इह तमोऽर्कौ सायनांशौ कुरु॥१॥**

**मल्लारिः**--अथ पाताधिकारो व्याख्यायते। नवभिर्गुणिता येऽयनांशाः । तत्तुल्या घटिकाः स्युः । ता घटिकाः षष्टिभक्ताः । ऊर्ध्वस्थाने योगोऽपि भविष्यति । तदूनाः सार्धविश्वयोगाः १३ । ३० । अथ सप्तविंशतियोगाश्च २७ तदूनाः कार्याः । तावान् सावयवो योगो यस्मिन् काले प्रतिमासे भविष्यति तस्मिन् काले क्रमात् व्यतीपातो वैधृतिश्च पातो विज्ञेयः । यत्र सार्धत्रयोदशोनास्तत्र व्यतीपातः । यत्र सप्तविंशतिस्तत्र वैधृतिरिति । अत्र योगस्य या यातघटिकास्तास्तद्दिनजसर्वनक्षत्रनाडीभिर्गुण्याः शरषड्भिः पञ्चषष्ट्या भक्ताः सन्त्यः स्पष्टाः स्युः । इहास्मिन् काले तमोऽर्कौ राहुसूर्यौ सायनांशौ कुरु । अत्र पातसाधनेऽमुनाऽऽचार्येण राहावयनांशा देयाः । रवौ च देयाः । ततो विराह्वर्कात् खण्डानि सन्धिविचारश्च कृतः । इदमल्पबुद्धीनामयुक्तमिव प्रतिभाति-यतोऽयनांशसंस्कारः क्रान्तावेव न शरसाधने ।

अत एव करणकुतूहले ।

'विना सपातेन्दुमिहायनांशकैर्युतो रविः शीतकरश्च गृह्यते' इति ।

तेषां भ्रान्तिनिरासार्थमुच्यते । अत्र पातः सायनचन्द्रसूर्ययोगो द्वादशषड्राशितुल्य एव तदर्थमत्राचार्येण चन्द्रं विनैव सूर्यराहुभ्यां पातसाधनं कृतम् । तेन सायनः सूर्यः सायनराहुयुतः शरार्धमङ्गीकृतः । स चादत्तायनांशचन्द्रस्यादत्तायनांशराहूनितस्य भुजो भुजसाधनरीत्या समान एव भवति । अत्रोदाहरणं यथा । अयनांशाः १८ । गणितागताः सूर्यचन्द्रराहवः । सूर्यः १ । १२ । चन्द्रः ३ । १२ । राहुः ५।७। अत्र व्यगुचन्द्रः १० । ५ । सायनः सूर्यः २ । चन्द्रः ४।राहुः५ ।२५। राहुयुतः सूर्यः७। २५ ।अस्य भुजः । १ । २५ । व्यगुचन्द्रस्य १०।५ भुजेन तुल्यो भवति१।२५।अतस्तमोऽर्कौ सायनांशाविति युक्तमुक्तम् । पातकाले सिद्धे तत्कालीनसूर्यचन्द्रराहवः साध्याः । ततः शरसाधनार्थमदत्तायनांशराहूनितादत्तायनांशचन्द्रादेव शरः क्रान्तिसंस्कारार्थं साध्यः । अथवा सायनचन्द्रसायनराहुभ्यामेव शरः साध्यः स शरो निरयनांशाभ्यां साधितेन तुल्य एव भवति यतस्तुल्ययोः क्षेपयोः क्षिप्तयोरन्तरे केवलयोरन्तरमेव सिद्धम् ।

अत्रोपपत्तिः । पातो नाम रविचन्द्रयोः क्रान्तिसाम्यम् । तत्र चन्द्रक्रान्तिः शरसंस्कृता सूर्यक्रान्त्या यदा समा स्यात् तदा पातमध्यकालः।तत्रादौ रविचन्द्रयोर्मध्यमक्रान्तिसाम्यं साधयति । मध्यमक्रान्तिसाम्यं तयोर्भुजसाम्ये स्यात् । भुजसाम्यं तु रविचन्द्रयोः षड्राशितुल्ये योगे भवति।नन्वेवं चेत् तदा रविचन्द्रयोः षड्राशितुल्ये द्वादशराशितुल्ये अन्तरेऽपि भुजसाम्यात् क्रान्तिसाम्यमस्ति।तत्रापि पातस्तर्हि मासमध्ये पातचतुष्टयं वक्तव्यम्।सत्यम्।तत्र पातकाले स्नानदानादिकं फलमाचार्येणोक्तमस्ति । तदस्मिन्नेव पातद्वये उक्तमस्ति अतस्तद्द्वयं नोक्तम् । अतो रविचन्द्रयोगादेव पातः साध्य इति युक्तमुक्तम् । पञ्चांगीयो योगोऽपि रवीन्दुयोगादेव सिद्धोऽस्ति । अतस्तस्मादेव पातः साध्यते । चक्रार्धतुल्ये योगे सार्धत्रयोदश योगाः । चक्रतुल्ये योगे सप्तविंशतिर्योगाः । अतस्त एवांगीकृताः । अत्र योगो निरयनांशात् क्रान्तिः सायनांशात् । अतोऽत्र योगे द्विगुणायनांशोत्पन्नयोगो न्यूनीकर्त्तव्यो निरयनांशयोगयोर्योगस्य कृतत्वात् । यदि चक्रांशैः ३६० सप्तविंशतियोगा २७ लभ्यन्ते तदा द्विगुणायनांशः किमिति फलं योगस्तस्य घटीकरणार्थं षष्टिः ६० गुणः । एवमयनांशानां द्वयं षष्टिः सप्तविंशतिरिति गुणत्रयं तद्घातो जातो गुणः ३२४० । हरश्चक्रांशाः ३६० । एवं गुणहरौ हरेणापवर्त्य लब्धा गुणस्थाने नव । अतो नवगुणायनांशतुल्यघटीभिः सार्धत्रयोदश सप्तविंशतिश्चोनास्तत्तुल्ययोगे गते पातः स्यादित्युपपन्नम् । अत्र योगाधःस्थले घटिका मध्यमाः । तासां स्पष्टीकरणायानुपातः । यदि परमाभिः पञ्चषष्टिमिताभिः सर्वर्क्ष-

घटिकाभिरेता योगघटिकास्तदेष्टसर्वर्क्षनाडीभिः किमिति । अत्र पाते सायनांश-स्यैव प्रयोजनमतः सायनांशावेव कार्यावित्युपपन्नम् ॥ १ ॥

अथ पाताधिकारोदाहरणम् ।

**विश्वनाथः**---अथ पाताधिकारोदाहरणम् । पातो नाम चन्द्रार्कयोः क्रान्ति-साम्यम् । संवत् १६७० । शाके १५३५ । वैशाखकृष्ण ७ शनौ घटी ११ । ३५ धनिष्ठाघटी ५९ । ३ । ब्रह्मघटी २८ । ४६ । अस्मिन्दिने पातज्ञानार्थमहर्गण-माह । चक्रम् ८ । अहर्गणः १८८३ । प्रातर्मध्यमो रविः १ । १ । ० । ९ । चन्द्रः ९ । २० । ० । ४४ । उच्चम् ११ । २५ । १३ । १४ । राहुः ० । २५ । ९ । ५२ । रविमन्दकेन्द्रम् १ । १६ । ५९ । १ । मन्दफलं धनम् १ । ३५ । ३५ । संस्कृतोऽर्कः १ । २ । ३६ । ३४ । अयनांशाः १८ । ११ । चरमृणम् ८८ । स्पष्टो रविः १ । २ । ३५ । ६ । स्पष्टा गतिः ५७ । ३३ । फलत्रयसंस्कृतश्च-न्द्रः ९ । १९ । ३४ । ३ । मन्दकेन्द्रम् २ । ५ । ३९ । ११ । मन्दफलं धनम् ४ । ३४ । ३२ । स्पष्टश्चन्द्रः ९ । २४ । ८ । ३५ । स्पष्टा गतिः ७६२ । ४९ । धनिष्ठानक्षत्रस्य गतघटी ३ । ४९ । एष्यघटी ५९ । ६ । गतैष्ययोगः ६२ । ५५ । अथ प्रथमतो मध्यमपातसमयज्ञानमाह नन्दघ्नेति । अयनांशाः १८ । ११ । नन्द-९ घ्नाः १६३ । ३९ । षष्टिभक्ताः २ । ४३ । ३९ । एततुल्यघटिकाभिः २ । ४३ । ३९ । सार्धविश्वे १३ । ३० । सार्धत्रयोदश योगा हीनाः १० । ४६ । २१ । एततुल्ये सावयवे योगे गते व्यतीपातसम्भवः । तथा तारा २७ हीनाः २४ । १६ । २१ । एततुल्ये सावयवे योगे याते वैधृतिपातसम्भवः । अथ घटीनां स्फुटीकरणम् । ब्रह्म योगस्य गतघटिका १६ । २१ तत्कालीननक्षत्रस्य गतैष्ययोगघटिकाभिः ६२ । ५५ । गुणिताः १०२८ । ४७ । शरषड्-६५ भक्ता जाताः स्पष्टघटिकाः १५ । ३९ । शुक्रवारे शुक्लयोगे घटी ३० । ११ । अत्र ब्रह्मयोगगतघटिका योजिताः ४५ । ५० । अत्र मध्यमक्रान्तिसाम्यस्य कालस्य ४५ । ५० । सूर्योदयस्य चान्तरमेतत् १४ । १० । शनिवासरजसूर्योदयिकौ सूर्यराहू आभिर्घटीभिः १४ । १० प्राक्-चालितौ जातौ मध्यमक्रान्तिसाम्यकालिकौ । सूर्यः १ । २ । २१ । ३१ । राहुः ० । २५ । १० । ३७ । सायनांशो रविः । १ । २० । ३३ । ३१ । राहुः १ । १३ । २१ । । ३७ ॥ १ ॥

अथ पाताधिकारः ।

सुधाकरः—'सायनरविशशियोगो भार्धं चक्रं यदा तदासन्नः' इत्यादिभास्करोक्तेन यदा र + अभा + च + अभा = ६ रा, तदा व्यतिपातः । यदा र + अभा + च + अभा = १२ रा, तदा वैधृतिः । अतः र + अभा + च + अभा = र + च + २ अभा = ६ रा

$\therefore$ र + च = ६ रा − २ अभा = $१८०^\circ$ − २ अभा = $१०८००'$ − २×६०अभा।
अथ रविचन्द्रयोगकला अष्टशतभक्ता लब्धः सावयवो विष्कम्भादियोगः

$$= \frac{\text{१०८००}}{\text{८००}} - \frac{\text{२} \times \text{६०अभा}}{\text{८००}} = \text{१३}\frac{\text{१}}{\text{२}} - \frac{\text{२} \times \text{६०} \times \text{अभा}}{\text{८००}}$$

$$\text{१३}\frac{\text{१}}{\text{२}} - \frac{\text{२} \times \text{६०} \times \text{६० अभा}}{\text{८००}} \text{घटी} = \text{१३}\frac{\text{१}}{\text{२}} - \text{९अभा घटी}$$ । एवं यदा

+ अभा + च + अभा = र + च + २ अभा = १२ रा $\therefore$ र + च = १२ रा − २ अभा

= $३६०^\circ$ − २ अभा = $२१६००'$ − २×६० अभा, ततो योगमितिः = $\frac{\text{२१६००}}{\text{८००}} - \frac{\text{२×६०×अभा}}{\text{८००}}$

$$= \text{२७} - \frac{\text{२} \times \text{६०} \times \text{६०} \times \text{अभा}}{\text{८००}} \text{घटी} = \text{२७} - \text{९अभा घटी}$$ ।'एतेन साग्रयोगविगमे पातोऽव्यतीपातक' इत्यन्तमुपपन्नम्। अथ योगसाधनविधिना पूर्वागता योगघटिका रविचन्द्रगतियोगेनाष्टशतकलामितेन सिद्धाः स्फुटरविशशिगतियोगवशेनानीताः स्फुटाः स्युः। अथ यदि पूर्वागतगतघटिकाः=गघ तदा विलोमेन गतकलाः = $\frac{\text{८०० गघ}}{\text{६०}} = \frac{\text{४० गघ}}{\text{३}}$ ।तदैव यदिन क्षत्रसर्वभोगघटिकाः= नभो तदा विलोमेन स्फुटचन्द्रगतिकलाः = $\frac{\text{८००} \times \text{६०}}{\text{नभो}}$ । स्वल्पान्तरात् षष्टिमितरविगतियोजनेन जाताः स्फुटरविशशिगतियोगकलाः = $\frac{\text{८००} \times \text{६०} + \text{६०} \times \text{नभो}}{\text{नभो}}$ । पूर्वागतागतकलाः षष्टिगुणा रविशशिस्फुटगतियोगकलाहृता लब्धाः स्फुटा योगस्य गतघटिकाः

$$= \frac{\text{४०} \times \text{६०} \times \text{नभो} \times \text{गघ}}{\text{३}(\text{८००} \times \text{६०} + \text{६०} \times \text{नभो})} = \frac{\text{४०} \times \text{२०} \times \text{नभो} \times \text{गघ}}{\text{८००} \times \text{६०} + \text{६० नभो}} = \frac{\text{नभो . गघ}}{\text{६०} + \frac{\text{६० नभो}}{\text{४०×२०}}}$$

$$= \frac{\text{नभो . गघ}}{\text{६०} + \frac{\text{३ नभो}}{\text{४०}}} = \frac{\text{नभो . गघ}}{\text{६०} + \frac{\text{३×६०}}{\text{४०}}} = \frac{\text{नभो . गघ}}{\text{६५}}$$ स्वल्पान्तरात्। यदि हरे मध्यममानेन

नभो=६०। इह सायनेनैव रविणा तमसा च सर्वं कर्म भवतीति 'इह तमोऽर्कौ सायनांशौ कुरु' इत्युक्तम्। तत उपपन्नं सर्वम्। अत्राधिकारेऽतः परं सर्वत्र तमः शब्देन सायनतमो रविशब्देन च सायनो रविर्ग्राह्यः ॥ १ ॥

**गोलैक्ये साग्वर्कभान्वोः सदा स्यात्**
**पातोऽन्यत्वे चेद्रवेर्बाहुभागाः।**
**पञ्चेषुभ्योऽल्पास्तदास्त्येव पातः**
**पुष्टाश्चेत्तत्संशयस्तं च भिद्मः ॥ २ ॥**

खाभ्रेन्दुद्विरसा धृतिर्नगशराः साग्वर्कभान्वोः पदै-
क्येऽर्धानि त्र्यगरुद्रभूपतिनखास्त्र्यक्षीणि भेदे क्रमात् ।
क्षेपः षड्दश ६।१० चार्ककोटिजलवेष्वंशप्रमार्धैक्यकं
शेषांशेष्यवधेषुभागसहितं सन्धिर्भवेत् क्षेपयुक् ॥ ३ ॥

साग्वर्कभुजांशका यदाल्पाः
सन्धेः क्रान्तिसमत्वमस्ति चेत् ।
अधिका न तदा भुजांशसंध्य-
न्तरसादृश्यमिहापमान्तरं स्यात् ॥ ४ ॥

**मल्लारिः**—अथ पातस्य सम्भवासम्भवविचारमाह । साग्वर्कभान्वोः सराहुरविसूर्ययोरेकगोलत्वे सति सदा पातः स्यादेव । अन्यत्वे भिन्नगोलत्वे सति रवेर्भुजभागा यदा पञ्चेषुभ्योऽल्पास्तदा पातोऽस्त्येव । चेत् पञ्चपञ्चाशदधिकास्तदा तस्य पातस्य संशयः । अस्ति नास्ति वेति । तमपि संशयं भिन्द्मो नाशयाम इति । सराहुसूर्ययोरेकपदत्वे खाभ्रेन्दुद्विरसा इति खण्डानि स्युः । पदभेदे त्र्यगरुद्रभूपतिनखा इति खण्डानि स्युः । अत्र क्षेपः षड्भागा प्रथमस्य द्वितीयस्य दश । अर्कस्य ये कोटिलवाः सूर्यस्य ये कोट्यंशाः । तेषां य इष्वंशः पञ्चमांशस्तत्प्रमाणानां खण्डानामैक्यं कार्यम् । तत्खण्डैक्यं शेषाणामेष्यखण्डस्य च यो वधस्तस्य य इषुभागः पञ्चमांशस्तेन सहितं क्षेपयुक् च कृतं सत् सन्धिर्भवति।एवं यत्र साग्वर्कस्य भुजांशकाः सन्धिभागेभ्योऽल्पास्तदा क्रान्तिसाम्यमस्ति । चेत् सन्धितोऽधिकास्तदा न पातः । अत्र भुजांशानां सन्धेश्च यदन्तरं तत्समानं क्रान्त्यन्तरं स्यादित्यर्थः ।

अत्रोपपत्तिः । अत्र व्यतीपाते रविचन्द्रयोर्गोलैकत्वं वैधृते गोलान्यत्वम् । उभयत्रापि साग्वर्कभान्वोर्गोलैकत्वे विराहुचन्द्रोत्पन्नशरसंस्कृतेन्दुक्रान्ती रविक्रान्त्यग्रे पृष्ठे चासमैव भवति चयापचयहेतुभूतत्वात् । साग्वर्कार्कयोर्गोलान्यत्वे चन्द्रपरमशरेण ४ । ३० । चन्द्रस्य परमक्रान्ति--२४ हीना १९ । ३० । अस्याः क्रान्तेरूनायां रविक्रान्तौ क्रान्तिसाम्यं भविष्यत्येव । एतावती रविक्रान्तिकैर्भुजभागैर्भविष्यतीति ज्ञानार्थं धनुष्करणरीत्या ज्ञाता भुजभागाः ५५ । एभ्योऽल्पेषु रविभुजभागेषु क्रान्तिसाम्यमवश्यमस्त्येव । पञ्चपञ्चाशदधिकभुजभागेषु भावाभावविचारः । तत्र पञ्चपञ्चाशदधिकभुजभागाप्रयोजनात् रवेः कोटिभागा एव कार्याः । ते परमाः पञ्चत्रिंशत् ३५ । तत्र भुजभागपरमत्वे कोट्यंशाभावात् शून्यमितान् रविकोट्यंशान् प्रकल्प्य पातविचारः कृतः । तत

सराहुसूर्यसूर्ययोः पदैकत्वे सराहुसूर्यभुजभागेषु षडूनेष्वेव पातः । अतो रविकोट्यंशेषु शून्यतुल्येषु षट्तुल्यः सन्धिः । एवं पञ्चतुल्यरविकोट्यंशष्वपि षट्तुल्य एव सन्धिः । एवं पञ्चोत्तरान् भागान् प्रकल्प्य साधितसन्ध्यंशानधो विशोध्य षडूनान् कृत्वा खण्डानि पञ्चत्रिंशदंशमध्ये सप्त पठितानि । एवं तयोः पदान्यत्वे षष्ट्यधिकभुजभागेषु त्रिंशन्मितकोट्यंशमध्ये षट्सन्धिखण्डानि दशोनानि कृत्वा पठितानि । मध्येऽनुपातः । पञ्चभागैर्यदि भोग्यखण्डं तदा शेषभागैः किमिति । षट् दश चोनाः कृताः । अतः स क्षेपो योज्य एव । एवं जातो भागाद्यः सन्धिः । सन्धितः सराहुसूर्यभुजभागेष्वल्पेषु पातो नाधिकेष्वित्युपपन्नम् । भुजांशानां सन्ध्यंशानां यदन्तरं तत्तुल्यमेव क्रान्त्योरन्तरमित्यर्थत एव सिद्धम्॥२-४॥

**विश्वनाथः**--अथ स्पष्टपातसम्भवलक्षणमाह गोलैक्ये इति । राहुयुक्तरविसूर्ययोरेकगोले सति सदा पातः स्यात् । अन्यत्वे भिन्नगोले चेत् तदा सायनरवेर्भुजभागाः कार्यास्ते पञ्चेषुभ्यो ५५ न्यूनास्तदा पातोऽस्त्येव । ते भुजभागाः पञ्चेषुभ्योऽधिकास्तदा पातस्य संशयस्तमपि वक्ष्यमाणप्रकारेण वयं शिघ्रो निराकुर्म इति । सागर्कः ३। ३।५५।८ । सायनमध्यमक्रान्तिसाम्यकालिकः सूर्यः १ ।२० । ३३। ३१ ।अनयोरेकगोलस्थत्वात् पातोऽस्त्येव ॥ २ ॥

अथ पातसम्भवभ्रान्तिनिरासार्थं सन्धिसाधनमाह खाभ्रेन्दुरिति । त्रिभिस्त्रिभिर्भैरसमं सममिति चत्वारि पदानि चक्रे स्युः । सागर्कसूर्ययोरेकपदत्वे सति खाभ्रेन्द्वित्यादिखण्डानि ग्राह्याणि । तयोः पदभेदे सति त्र्यगरुद्रेत्यादिखण्डानि ग्राह्याणि । क्रमेण षट् दश क्षेपः स्यात् । पदैक्ये षट्६ पदभेदे दश१० क्षेपो ग्राह्यः । सायनार्कस्य कोटिलवाः कार्यास्तेषां यः पञ्चमांशस्तत्प्रमाणानां खण्डानामैक्यं कार्यम् । शेषांशा एष्यखण्डकेन गुण्याः पञ्चभक्ताः । फलेन खण्डैक्यं सहितं क्षेपयुक् सन्धिर्भवत् । यदा सायनसूर्यस्य भुजभागाः पञ्चेषुभ्योऽल्पास्तदा सन्धिसाधनमेव नास्ति ॥ ३ ॥

अथास्मात् पातभावाभावज्ञानमाह सागर्कभुजांशेति । सागर्कभुजांशा यदा सन्धेः सकाशादल्पास्तदा क्रान्तिसमत्वमस्ति । चेत् सन्धेरधिकास्तदा क्रान्तिसाम्यं न स्यात । अत्र भुजांशानां सन्धेश्च यदन्तरं तत्साद्दश्यं तत्तुल्य चन्द्रार्कयोः क्रान्त्यन्तरं स्यादित्यर्थः । अत्र कल्पितमुदाहरणम् । रविः १ ।२७। राहुः ६ । १५ । सागर्कः ८। १२ । रवेर्बाहुभागाः ५७। पञ्चेषुभ्योऽधिकाः । अतोऽर्कस्य कोटिलवाः ३३ । एषां पञ्चांश-६ प्रमितखण्डैक्यम् २७। शेषांशै-पवधे-१७१ पुभाग-३४ । १२ सहितम् ६१ ।१२ । क्षेप-६ युक् जातः सन्धिः

६७ । १२ । अस्मात् साग्वर्कभुजांशा ७१ अधिकाः । अतो न क्रान्तिसाम्यं किन्तु भुजांशसन्ध्यन्तर ·४। ४८ तुल्यं मध्यमक्रान्तिसाम्यकाले रवीन्द्वोः स्पष्टापमान्तरं भवतीति छात्राय दर्शनीयम् ॥ ४ ॥

**सुधाकरः**—र = ६ रा – य । अत्र यदि य = ०, तदा र = ६ रा । य उत्तरगोलादौ र च उत्तरगोलान्ते । एवं यदि य=६ रा, तदा र = ०।य उत्तरगोलान्ते र च उत्तरगोलादौ ।

य=७ रा तदा र=११रा । द्वावपि दक्षिणगोलस्थौ । यदि य=११रा । तदा र=७रा । द्वावपि दक्षिणगोलस्थौ । एवं यो गोलो यस्य स एव गोलो रस्येति सिद्धम् । एवं यदि र=१२रा–य = ६ + ६–य= ६ + (६ – य) अत्रानन्तरसिद्धान्तेन यो गोलो यस्य स एव कोष्टकान्तर्गतस्य ( ६–य ) अस्य तत्र षड्राशियोजनेन ६ + ( ६ – य ) = र, अस्य गोलो यगोलाद्भिन्न ( ६ – य ) अस्य गोलाद्भिन्न एवेति । अतो यो गोलो यस्य तद्भिन्नगोलो – १२ रा – यऽस्येति सिद्धम् । एवं पूर्वोक्तेनैव विधानेन यदयनं यस्य तद्भिन्न– ६ रा – य मस्य । यदयनं यस्य तदेवायन–१२– य मस्येति सिध्यति । अत एव व्यतिपातोऽयनभेदे गोलैक्यत्वे इत्यादिव्यतिपातवैधृतलक्षणे क्रमेण सायनरविशशियोगे भार्धे चक्रे च घटेते इति । कल्प्यते यदा सायनरविशशियोगो भार्धं वा चक्रं तदा सायनो रविः = र । सायनश्चन्द्रः=च । सायनं तमश्च = त । तदा रविस्पष्टापमेन समा चन्द्रस्थानीया क्रान्तिश्च भुजयोः समत्वात् तुल्यैव किन्तु शरसंस्कारतश्चन्द्रस्फुटापमस्यान्यादृक्त्वं जायते । तत्र व्यतिपाते च = ६ – र । विपातश्चन्द्रः = चं – त = ६ – र – त = ६ – (र + त) । अतः पूर्वसिद्धान्तेन यो गोलो रवेः स एव चन्द्रस्य । यश्च (र + त) अस्य स एव विपातचन्द्रस्य । अतः साग्वर्करव्योर्गोलैक्ये शरचन्द्रमध्यमक्रान्त्योरेकैव दिक् तेन शराधिका रविक्रान्तिसमचन्द्रमध्यमक्रान्तिः सूर्यापमादधिका भवति । ततो रविक्रान्तेरत्यल्पगतित्वात् चन्द्रभुजांशानामुपचयापचयवशात् क्रमेण तत्कालात् पृष्ठेऽग्रे च रविचन्द्रस्फुटक्रान्त्योः समत्वादस्ति पातः । साग्वर्कभान्वोर्गोलान्यत्वे च शरमध्यमक्रान्त्योर्भिन्ना दिक् तेन चन्द्रस्फुटक्रान्तिः सूर्यापमादल्पा भवति । तत्र यदि चन्द्रस्य परमाल्पपरमस्फुटक्रान्तितः २४°–पश=२४°–४°।३०′=१९° । ३०′ अस्या रविक्रान्तिरल्पा तदा पृष्ठे वाऽग्रे चालनेन रविचन्द्रस्फुटापमयोः स्यात् समत्वम् । अथ कैर्भुजभागैरर्कस्य १९° । ३०′ एतावती क्रान्तिर्भवति तदर्थमनुपातो यदि जिनज्यया त्रिज्या १२० दोर्ज्या लभ्यते तदा निर्दिष्टक्रान्तिज्यया लब्ध्या–४० नया का जाता दोर्ज्या $= \frac{१२० \times ४०}{४८\frac{३}{४}}$

$$= \frac{४ \times १२० \times ४०}{१९५} = \frac{४ \times ८ \times १२०}{३९} = \frac{४ \times ८ \times ४०}{१३} = \frac{१२८०}{१३} = ९८\frac{६}{१३}$$

अस्याश्चापम=५५° । २३′ =५५° स्वल्पान्तरतः । अतः पञ्चेषुभ्योऽल्पेषु रविभुजांशेषु चन्द्रस्य परमाल्पपरमस्पष्टापमाद्रविक्रान्तेरल्पत्वादस्त्येव पातः । अधिकत्वे च तदा चन्द्रस्य परमस्पष्टक्रान्तेरज्ञानादिति न ज्ञायते 'यद्रविक्रान्तिस्तत्रत्यचन्द्रपरमस्पष्टापमतोऽल्पा वा न । चन्द्रपरमस्पष्टापमतोऽल्पे रव्यपम एव तत्कालादग्रतः पृष्ठतो वा चालनेन चन्द्रस्पष्टक्रान्ति

निजपरमस्पष्टक्रान्त्यल्पेनार्कापमेन समा भवितुमर्हत्यन्यथा नेति तत्र संशयो जात इति सिद्धान्तविदां विदामतिरोहितमेवेति सर्वं निरवद्यम् ।

अंशाः = ६०° । ६५° । ७०° ।

क्रमेण बृहज्ज्या = २९७७ । ३११५ । ३२३० ।

परक्रान्तिज्यागुणा = ४१५८८६९।४३५१६५५।४५१२३१०।

अंशाः = ७५° । ८०° । ८५° । ९०°

बृहज्ज्या = ३३२१ । ३३८४ । ३४२४ । ३४३८

परक्रान्तिज्यागुणा = ४६३९४३७।४७२७४४८।४७८३३२८। जिज्या × त्रि

त्रिज्याभक्ता = १२१० । १२६६ । १३१२ । १३४९ ।१३७५ । १३९१ । १३९७

आसां चापानि । जातास्तेषां भुजांशानां क्रमेण क्रान्त्यंशाः

भुजांशाः = ६०° । ६५° । ७०° । ७५° । ८०° । ८५° । ९०°

क्रान्त्यंशाः = २०°।३८′।२१°।३८′।२२°।२८′।२३°।७′।२३°।३६′।२३°।५३′।२४°।०′

२४°–क्रान्त्यंशाः = ३°।२२′। २°।२२′। १°।३२′। ०°।५३′। ०°।२४′। ०°।७′।०°।०′

कलाः = २०२′। १४२′। ९२′। ५३′। २४′। ७′। ०′

एताभि–१२० ज्यागुणाः परमशरकलाभक्ता लब्धानि क्रमेण फलानि स्वल्पान्तरात्

९० । ६३ । ४१ । २४ । ११ । ३ । ०

फलानां लघुज्याभिप्रायेण चापानि स्वल्पान्तरात्

४९° । ३२° । २०° । १२° । ५° । १°

एषां कोटयः = ४१° । ५८° । ७०° । ७८° । ८५° । ८९° = पा

द्वितीयपदे पामानम् = ४रा।१९°॥ ४।२°॥ ३।२०°॥ ३।१२°॥ ३।५° ॥ ३ ।१°

तृतीयपदे पामानम् = ७रा।११°॥७रा।२८॥८रा।१०°॥८रा।१८°॥८रा।२५°॥८रा।२९°॥




कल्प्यते र च, नाडीमंडलचापम् । रपा, क्रान्तिमण्डले अयनांशोनितपातः = पा । पाच, चन्द्रविमण्डलचापम् । < रपाच = परमशरः = श । < चरपा = जिनांशाः = जि । < पाचर = चन्द्रपरमस्पष्टक्रान्तिहीनभार्धांशाः । चन्द्रपरमस्पष्टक्रान्तिश्च = पक्रा । तदा चापीयत्रिकोणमित्या

$$\text{कोज्यापक्रा} = \frac{\text{त्रि . कोज्याजि . कोज्याश} - \text{ज्याजि . ज्याश . कोज्यापा}}{\text{त्रि}^2}$$

$$= \frac{\text{त्रि . कोज्याजि . कोज्याश} - \text{त्रि . ज्याजि . ज्याश} + \text{ज्याजि . ज्याश . उज्यापा}}{\text{त्रि}^2}$$

$$= \frac{\text{त्रि}^2 \text{ कोज्या} ( \text{जि} + \text{श} ) + \text{ज्याजि} . \text{ज्याश} . \text{उज्यापा}}{\text{त्रि}^2}$$

$$= \text{कोज्या} ( \text{जि} + \text{श} ) + \frac{\text{ज्याजि} . \text{ज्याश} . \text{उज्यापा}}{\text{त्रि}^2}$$

$$\therefore \frac{\text{ज्याजि} . \text{ज्याश} . \text{उज्यापा}}{\text{त्रि}^2} = \text{कोज्यापका} - \text{कोज्या} ( \text{जि} + \text{श} )$$

$$= \frac{2 \text{ ज्या} \left( \frac{\text{जि} + \text{श}}{2} + \frac{\text{पका}}{2} \right) \text{ज्या} \left( \frac{\text{जि} + \text{श}}{2} - \frac{\text{पका}}{2} \right)}{\text{त्रि}}$$

अतः $\frac{\text{ज्याजि} . \text{ज्याश} . \text{उज्यापा} . \text{त्रि}}{2 \text{ त्रि}^2} = \frac{\text{ज्याजि} . \text{ज्याश}}{\text{त्रि}^2} \text{ज्या}^2 \frac{\text{पा}}{2}$

$$= \text{ज्या} \left( \frac{\text{जि} + \text{श}}{2} + \frac{\text{पका}}{2} \right) \text{ज्या} \left( \frac{\text{जि} + \text{श}}{2} - \frac{\text{पका}}{2} \right)$$

$$\therefore \text{ज्या}^2 \frac{\text{पा}}{2} = \frac{\text{त्रि}^2 \text{ ज्या} \left( \frac{\text{जि} + \text{श}}{2} + \frac{\text{पका}}{2} \right) \text{ज्या} \left( \frac{\text{जि} + \text{श}}{2} - \frac{\text{पका}}{2} \right)}{\text{ज्याजि} . \text{ज्याश}}$$

$$= \frac{\text{त्रि}^2 \text{ ज्या} \left( 14^\circ \mid 15' + \frac{\text{पका}}{2} \right) \text{ज्या} \left( 14^\circ \mid 15' - \frac{\text{पका}}{2} \right)}{\text{ज्याजि} . \text{ज्याश}} \quad \text{.........(१)}$$

अनेन समीकरणेन पूर्वभुजांशानां ये क्रान्त्यंशास्तेषु समेषु चन्द्रपरमस्पष्टापमेषु 'पा' साधना लाघवाल्लघुरिक्थग्रहणेन गणितानि ।

$$( 1 ) \text{पकां} = 20^\circ \mid 38' \mid \frac{\text{पका}}{2} = 10^\circ \mid 19' \mid$$

$$14^\circ \mid 15 + \frac{\text{पका}}{2} = 14^\circ \mid 15' + 10^\circ \mid 19' = 24^\circ \mid 34' \mid$$

$$14^\circ \mid 15' - \frac{\text{पका}}{2} = 14^\circ \mid 15' - 10^\circ \mid 19' = 3^\circ \mid 56' \mid$$

$$\text{ज्याजि} = 9 \cdot 6093133$$

$$\mid \text{ज्याश} = 8 \cdot 8946433$$

$$\text{ज्याजि} . \text{ज्याश} = 18 \cdot 5039566$$

$$\text{ज्या} \left( 14^\circ \mid 15' + \frac{\text{पका}}{2} \right) = 9 \cdot 6188341$$

$$\text{ज्या} \left( 14^\circ \mid 15' - \frac{\text{पका}}{2} \right) = 8 \cdot 8362999$$

घातः = १८·४५५१३१०

ज्याजि . ज्याश = १८·५०३९५६६

फलम् = $\bar{1}$·९५११७४४

$\frac{\text{फल}}{२}$ × त्रि = ज्या $\frac{१}{२}$ पा = ९·९७५५८७२

$\frac{१}{२}$ पा = ७०° । ५८'

पा = १४१ । ५६

= ४रा।२१° । ५६'

( २ ) पक्रा = २१° । ३८' । $\frac{\text{पक्रा}}{२}$ = १०° । ४९'

१४° । १५' + १०° । ४९' = २५° । ४' । ज्या ( १४° । १५' + $\frac{\text{पक्रा}}{२}$ ) = ९·६२७०३०३

१४° । १५' − १०° । ४९' = ३ । २६ । ज्या ( १४° १५° − $\frac{\text{पक्रा}}{२}$ ) = ८·७७७३३३४

घातः = १८·४०४३६३७

ज्याजि . ज्याश = १८·५०३९५६६

फलम् = $\bar{1}$·९००४०७१

$\frac{\text{फ}}{२}$ . त्रि = ज्या $\frac{\text{पा}}{२}$ = ९·९५०२०३५

$\frac{\text{प}}{२}$ = ६३° । ५'

पा = १२६° । १०'

= ४ रा।६° । १०'

( ३ ) पक्रा = २२° । २८' । $\frac{\text{पक्रा}}{२}$ = ११° । १४'

१४° । १५' + ११° । १४' = २५° । २९' । ज्या ( १४° । १५' + $\frac{\text{पक्रा}}{२}$ ) = ९·६३३७१९४

१४° । १५' − ११° । १४' = ३° । १' । ज्या ( १४° । १५' − $\frac{\text{पक्रा}}{२}$ ) = ८७२१२०४०

घातः = १८·३५४९२३४

ज्याजि . ज्याश = १८·५०३९५६६

फ = $\bar{1}$·८५०९६६८

$$\frac{फ}{२} त्रि = ज्या \frac{पा}{२} = ९\cdot९२५४८३४$$

$$\frac{पा}{२} = ५७^\circ । २३'$$

$$पा = ११४^\circ । ४६'$$

$$= ३रा।२४^\circ । ४६'$$

(४) पक्रा $= २३^\circ । ७' । \frac{पक्रा}{२} = ११^\circ । ३४'$ ।

$१४^\circ । १५' + ११^\circ । ३४' = २५^\circ । ४९'$ । ज्या $\left(१४^\circ । १५ + \frac{पक्रा}{२}\right) = ९\cdot६३८९८१२$

$१४ । १५ - ११ । ३४ = २ । ४१$ । ज्या $\left(१४ । १५ - \frac{पक्रा}{२}\right) = ८\cdot६७०३९३२$

घातः $= १८\cdot३०९३७४४$

ज्याजि. ज्याश $= १८५०३९५६६$

फलम् $= \overline{१}\cdot८०५४१७८$

$$\frac{फ}{२} \cdot त्रि = ज्या \frac{पा}{२} = ९\cdot९०२७०८९$$

$$\frac{पा}{२} = ५३^\circ । ४'$$

$$पा = १०६ । ८$$

$$= ३ रा । १६^\circ । ८'$$

( ५ ) पक्रा $= २३^\circ । ३६' । \frac{पक्रा}{२} = ११^\circ । ४८'$

$१४^\circ । १५' + ११^\circ । ४८' = २६^\circ । ३'$ । ज्या $\left(१४^\circ । १५ + \frac{पक्रा}{२}\right) = ९\cdot६४२६१८२$

$१४ । १५ - ११ । ४८ = २ । २७$ । ज्या $\left(१४ । १५ - \frac{पक्रा}{३}\right) = ८\cdot६३०९१११$

घातः $= १८\cdot२७३५२९३$

ज्याजि ज्याश $= १८\cdot५०३९५६६$

फलम् $= \overline{१}\cdot७६९५७२७$

$$\frac{फ}{२} त्रि = ज्या \frac{पा}{२} = ९\cdot८८४७८६३$$

$$\frac{पा}{२} = ५०^\circ । ५'$$

पा = १००° । १०′

= ३रा । १०° । १०′

( ६ ) पक्रा = २३° । ५३′ । $\frac{\text{पक्रा}}{२}$ = ११° । ५७′

१४° । १५′ + ११° । ५७′ = २६° । १२′ । ज्या$\left(१४° । १५′ + \frac{\text{पक्रा}}{२}\right)$ = ९·६४४९३६५

६४ । १५ – ११ । ५७ = २ । १८ । ज्या$\left(१४° । १५′ - \frac{\text{पक्रा}}{२}\right)$ = ८·६०३४८८६

घातः = १८·२४८४२५१

ज्याजि . ज्याश = १८·५०३९५६६

फलम् = ९·७४४४६८५

$\frac{\text{फ}}{२}$ त्रि = ज्या $\frac{\text{पा}}{२}$ = ९·८७२२३४२

$\frac{\text{पा}}{२}$ = ४८° । १०′

पा = ९६ । २०

= ३रा । ६° । २०′

एवम् ।

चन्द्रस्य परमस्पष्टक्रांतयः = २०° । ३८′ ॥ २१° । ३८′ ॥ २२° । २८′ ॥ २३° । ७′ ॥

तत्समरविक्रान्तिषु रविभुजांशाः = ६०° ॥ ६५° ॥ ७०° ॥ ७५° ॥

रविः = २रा । ०° ॥ २ । ५° ॥ २ । १० ° ॥ २ । १५° ॥

तत्रागुः = ४रा । २२ ° ॥ ४रा । ६° ॥ ३रा । २५° ॥ ३रा । १६° ॥

वा = ७रा । ८ ॥ ७ । २४ ॥ ८ । ५ ॥ ८ । १४ ॥

चन्द्रस्य परमस्पष्टक्रान्तयः = २३° । ३६′ ॥ २३° । ५३′ ॥ २४° । ० ॥

तत्समरविक्रांतिषु रविभुजांशाः = ८०° ॥ ८५° ॥ ९०° ॥

रविः = २ । २०° ॥ २ । २५° ॥ ३ । ०° ॥

तत्रागुः = ३रा । १०° ॥ ३रा । ६° ॥ ३ । ० ॥

वा = ८ । २० ॥ ८ । २४ ॥ ९ । ०० ॥

पूर्वक्रान्तिषु मानैक्यार्धं मध्यमं ३२′ संशोध्य यदि चन्द्रस्य परमाः स्पष्टक्रांतयः = २०° । ६′ ॥ २१° । ६′ ॥ २१° । ५६′ ॥ २२° । ३५′ ॥ २३° । ४′ ॥ २३° । २१′ ॥ २३° । २८′

दलम् = १० । ३ ॥ १० । ३३ ॥ १०° । ५८ ॥ ११ । १७ ॥ ११ । ३२ ॥ ११ । ४० ॥ ११ । ४४ ;

(१) १४° । १५′ + १०° । ३′ = २४° । १८′ । ज्या $\left(१४° । १५ + \frac{\text{पक्रा}}{२}\right)$ = ९·६१४३८५०

१४ । १५ – १० । ३ = ४ । १२ । ज्या $\left(१४ । १५ - \frac{\text{पक्रा}}{२}\right)$ = ८·८६४७३७७

घातः = १८·४७९१२२६

ज्याजि . ज्याश = १८·५०३९५६६

फलम् = $\bar{\text{९}}$·९७५१६६०

$$\frac{\text{फ}}{\text{२}} \cdot \text{त्रि} = \text{ज्या}\,\frac{\text{पा}}{\text{२}} = \text{९·९८७५८३०}$$

$$\frac{\text{पा}}{\text{२}} = \text{७५}^\circ \mid \text{५०}'$$

पा = १५१ । ५०

$$(\text{२})\ \text{१४}^\circ \mid \text{१५}' + \text{१०}^\circ \mid \text{३३}' = \text{२४}^\circ \mid \text{४८}' = \text{ज्या}\left(\text{१४}^\circ \mid \text{१५}' + \frac{\text{पक्रा}}{\text{२}}\right) = \text{९·६२२६८२३}$$

$$\text{१४} \mid \text{१५}' - \text{१०} \mid \text{३३} = \text{३} \mid \text{४२} = \text{ज्या}\left(\text{१४} \mid \text{१५} - \frac{\text{पक्रा}}{\text{२}}\right) = \text{८·८०९७७७२}$$

घातः = १८·४३२४५९६

ज्याजि . ज्याश = १८·५०३९५६६

फलम् = $\bar{\text{९}}$·९२८५०३०

$$\frac{\text{फ}}{\text{२}}\,\text{त्रि} = \text{ज्या}\,\frac{\text{पा}}{\text{२}} = \text{९·९६४२५१५}$$

$$\frac{\text{पा}}{\text{२}} = \text{६७}^\circ \mid \text{४}'$$

पा = १३४ । ८

$$(\text{३})\ \text{१४}^\circ \mid \text{१५}' + \text{१०}^\circ \mid \text{५८}' = \text{२५}^\circ \mid \text{१३}' = \text{ज्या}\left(\text{१४}^\circ \mid \text{१५}' + \frac{\text{पक्रा}}{\text{२}}\right) = \text{९·६२९४५२९}$$

$$\text{१४}^\circ \mid \text{१५}' - \text{१०}^\circ \mid \text{५८}' = \text{३}^\circ \mid \text{१७}' = \text{ज्या}\left(\text{१४}^\circ \mid \text{१५}' - \frac{\text{पक्रा}}{\text{२}}\right) = \text{८·७५७९५४६}$$

घातः = १८·३८७४०७५

ज्याजि. ज्याश = १८·५०३९५६६

फ = $\bar{\text{९}}$·८८३४५०९

$$\frac{\text{फ}}{\text{२}}\,\text{त्रि} = \text{ज्या}\,\frac{\text{पा}}{\text{२}} = \text{९·९४१७२५४}$$

$$\frac{\text{पा}}{\text{२}} = \text{६०}^\circ \mid \text{५९}'$$

= १२१° । ५८′

= ४रा । १° । ५८′

$$(\text{४})\ \text{१४}^\circ \mid \text{१५}' + \text{११}^\circ \mid \text{१७}' = \text{२५}^\circ \mid \text{३२}' = \text{ज्या}\left(\text{१४}^\circ \mid \text{१५}' + \frac{\text{पक्रा}}{\text{२}}\right) = \text{९·६३४५१३७}$$

$$१४।१५ - ११।१७ = २।५८ = \text{ज्या}\left(१४।१५ - \frac{\text{पक्रा}}{२}\right) = ८·७१३९५२०$$

$$\text{घातः} = १८·३४८४६५७$$

$$\text{ज्याजि}.\text{ज्याश} = १८·५०३९५६६$$

$$\text{फलम्} = \overline{१}·८४४५०९१$$

$$\frac{\text{फ}}{२}.\text{त्रि} = \text{ज्या}\frac{\text{पा}}{२} = ९·९२२२५४५$$

$$\frac{\text{पा}}{२} = ५६^{\circ}।४५'$$

$$\text{पा} = ११३।३०$$

$$= ३।२३।३०$$

$$(५)\ १४^{\circ}।१५' + ११^{\circ}।३२ = २५^{\circ}।४७'। = \text{ज्या}\left(१४^{\circ}।१५' + \frac{\text{पक्रा}}{२}\right) = ९·६३८४५८५$$

$$१४।१५। - ११।३२ = २।४३। = \text{ज्या}\left(१४।१५ - \frac{\text{पक्रा}}{२}\right) = ८·६७५७५१०$$

$$\text{घातः} = १८·३१४२०९५$$

$$\text{ज्याजि}.\text{ज्याश} = १८·५०३९५६६$$

$$\text{फलम्} = \overline{१}·८१०२५२९$$

$$\frac{\text{फ}}{२}\text{त्रि} = \text{ज्या}\frac{\text{पा}}{२} = ९·९०५१२६४'$$

$$\frac{\text{पा}}{२} = ५३।३०$$

$$\text{पा} = १०७।$$

$$= ३।१७$$

$$(६)\ १४^{\circ}।१५' + ११^{\circ}।४०' = २५^{\circ}।५५' = \text{ज्या}\left(१४^{\circ}।१५ + \frac{\text{पक्रा}}{२}\right) = ९·६४०५४४५$$

$$१४।१५ - ११।४० = २।३५ = \text{ज्या}\left(१४।१५ - \frac{\text{पक्रा}}{३}\right) = ८·६५३९१०७$$

$$\text{घातः} = १८·२९४४५५२$$

$$\text{ज्याजि}.\text{ज्याश} = १८०५०३९५६६$$

$$\text{फलम्} = \overline{१}·७९०४९८६$$

$$\frac{\text{फ}}{२}.\text{त्रि} = \text{ज्या}\frac{\text{पा}}{२}. = ९·८९५३४३३$$

$$\frac{पा}{२} = ५१^\circ।४७'$$

$$पा = १०३।३४$$

$$= ३।१३।३४$$

$$(७)\ १४^\circ।१५' + ११^\circ।४४' = २५^\circ।५९' = ज्या.\left(१४^\circ।१५' + \frac{पक्रा}{२}\right) = ९\cdot६४१५८२८$$

$$१४।१५ - ११।४४ = २।३१ = ज्या\left(१४^\circ।१५ - \frac{पक्रा}{२}\right) = ८\cdot६४२५६३४$$

$$घातः = १८\cdot२८४१४६२$$

$$ज्याजि.ज्याश = १८\cdot५०३९५६६$$

$$फलम् = \bar{१}\cdot७८०१८९६$$

$$\frac{फ}{२} \times त्रि = ज्या\ \tfrac{१}{२}\ पा = ९\cdot८९००९४८$$

$$\tfrac{१}{२}\ पा = ५०^\circ।५६$$

$$पा = १०१।५२$$

$$३।११।५२$$

रा ०

क्रमेणागुः सायनः=५।१।५०'॥४।१४।८॥४।१।५८॥ ३।२३।३०॥३।१७॥३।१३।३४॥ ३।१२ अशान्तः स्वल्पान्तरादगुः= ५।२॥४।१४ ॥४।२॥ ३।२३॥ ३।१७॥३।१४॥ ३।१२

चक्रशुद्धो वागुः = ६।२८॥७।१६॥७।२८॥८।७॥८।१३॥८।१६॥८। १८

रविः = २ । ० ॥ २ । ५ ॥ २ । १० ॥ २।१५॥२। २० ॥ २ ॥ २५॥३।००

इति सर्वं गणकानां सूक्ष्मगणितसाधनार्थमस्माभिः प्रपञ्चितम् । अन्यथा लोकव्यवहारार्थं बृहज्ज्याभिरेव पूर्वदर्शितसमीकरणेन चन्द्रपरमस्पष्टापम कोटिज्यां विधाय ततो व्ययनपातमानं वा सायनराहुमानं साध्यम् । भास्करमतेन पातमानम् = १२ – रा ततः पा – अय = १२ – रा–अय = १२ – (अय + रा) अतो व्ययनपातदोर्ज्या सागुयनराहुदोर्ज्यासमा भवति । व्ययनपातमानं चक्रशुद्धं सागुयनराहुमानं च भवतीति सर्वं स्फुटमेव गाणितिकानाम् ।

अथाचार्येण स्वल्पान्तरात् ६०°, ६५°, । ६५, ७०।७०, ७५ । ७५, ८०।८०, ८५ । ८५, ९० । भागानां क्रान्त्यंशाः समा एव कल्पिताः । ६०° भागानां क्रान्त्यंशाश्च विंशतिर्गृहीतास्ततः पूर्वसाधितक्रान्त्यंशेषु स्वल्पान्तरतः सागुमानानि क्रमेण गृहीतानि ।

भुजांशाः = ६०° । ६५° । ७०° । ७५° । ८०° । ८५° । ९०°

तद्राश्यादयः = २ । ०॥ २।५॥२ । १० ॥ २ । १५ ॥ २ । २० ॥ २ ।२५॥३।००।

स्वल्पान्तरात् सागवः = ७ । ० ॥ ४ । २८ ॥ ४। ५ ॥ ३। २४ ॥ ३ । १७॥ ३ । ११ ॥ ३ । ६ । एतद्योगेन जाताः सागवर्का रविपदस्था विभिन्नगोलाश्च ॥

सागवर्कः = ९ । ० ॥ ७ । ३ ॥ ६। १५ ॥ ६ । ९ ॥ ६ । ७ ॥ ६ । ६ ॥ ६ । ६

एषां भुजांशाः = ९०° । ० ॥ ३३° ॥ १५° ॥ ९° ॥ ७° ॥ ६° ॥ ६° ॥
कोटयंशेभ्यः साधनार्थं स्थापिता उत्क्रमेण भुजांशाः

कोटयंशाः = ० । ५ । १० । १५ । २० । २५ । ३०
साग्वर्कभुजांशाः = ६ । ६ । ७ । ९ । १५ । ३३ । ९०
अधोऽधः शोधनतः खण्डानि = ६ । ० । १ । २ । ६ । १८ । ५७

अथ प्रथमखण्डस्थाने शून्यं प्रकल्प्याचार्येण षट् क्षेपकः कृतस्ततो जातानि खण्डानि ।

० । ० । १ । २ । ६ । १८ । ५७

एतानि षट्खण्डानि षष्टितो नवतिपर्यन्तभुजांशेषु पञ्चभागोत्तरेषु सन्ति । भुजभागेषु स्वल्पान्तरतः विंशतिसमां चन्द्रपरमाल्पपरमस्पष्टापमासन्नां क्रान्तिमङ्गीकृत्य तावत् खण्डजन्यं कर्म कृतमाचार्येण । एवं रविभुजांशोनभार्धसमरवितः पूर्वागतसागूनभार्धसमसागुतश्च त एव पदैक्ये भुजांशा भवन्ति । एवं साग्वर्कार्कयोः पदभेदे गोलभेदे च पूर्वसाधितसागुषु ७ रा । ८° ॥ ७ । २४° ॥ ८ । ५° ॥ ८ । १४° ॥ ८ । २०° ॥ ८ । २४° ॥ ९ । ०० ।

रविराश्यादयः = २ । ० ॥ २ । ५ ॥ २ । १० ॥ २ । १५ ॥ २ । २० ॥ २ । २५ ॥ ३ । ०० स्वल्पान्तरात् सागवः = ७ । ० ॥ ७ । १८ ॥ ८ । ३ ॥ ८ । १४ ॥ ८ । २० ॥ ८ । २२ ॥ ९ । ०० ।

साग्वर्काः = ९ । ० ॥ ९ । २३ ॥ १० । १३ ॥ १० । २९ ॥ ११ । १० ॥ ११ । १७ ॥ १२ । ०० ।

भुजांशाः = ९०° । ० ॥ ६७° ॥ ४७° ॥ ३१° ॥ २०° ॥ १३° ॥ ० । ०

कोटयंशेभ्यः साधनार्थं स्थापिता उत्क्रमेण भुजांशाः ।

कोटयंशाः = ० । ५° । १०° । १५° । २०° । २५° । ३०°
साग्वर्कभुजांशाः = ० । १३ । २० । ३१ । ४७ । ६७ । ९०
अधोऽधः शोधनेन खण्डानि = ० । १३ । ७ । ११ । १६ । २० । २३

अत्र शून्यकोटयंशसमे फलं शून्यमिति प्रसिद्धत्वात् तत्खण्डापगमे

कोटयंशाः = ५° । १०° । १५° । २०° । २५° । ३०°
खण्डानि = १३ । २० । ३१ । ४७ । ६७ । ९०

प्रथमखण्डतो दश विशोध्य शेषं ३ पठितं तेन दश क्षेप उक्तः ।

अतः साग्वर्कभुजांशाः साधितभुजांशसमसन्धितुल्यास्तदा स्वल्पान्तराद्रविस्पष्टापमसम एव तात्कालिकचन्द्रपरमस्पष्टापमः । सन्धिन्तोऽल्पेषु भुजांशेषु रविक्रान्तितोऽधिका भवति चन्द्रस्पष्टक्रान्तिः सागोराधिक्यादतः क्रान्तिसाम्यमस्त्येव । अतोऽन्यथा न क्रान्तिसाम्यमिति । एवमत्राचार्येण स्थूलाः साग्वर्कभुजांशाः सन्धिसंज्ञाः साधिताः । सूक्ष्मार्थं तु प्राग् मत्प्रपञ्चितं सर्वं निपुणं प्राज्ञैरवलोक्यम् । यथा यथा सन्धितः साग्वर्कभुजांशानामाधिक्यं तथा तथा द्वयोः क्रान्त्योरन्तरमधिकं भवतीति 'भुजांशसन्ध्यन्तरसादृश्यमिहापमान्तरं स्यात्' इत्युक्तमाचार्येण अर्थात् भुजांशसन्ध्यन्तरेऽल्पेऽल्पं महति महदन्तरं क्रान्त्योरित्येव 'सादृश्य' पदाभिप्रायः । नहि सादृश्यपदेन भुजसन्ध्यन्तरेण समानं क्रान्त्यन्तरं वाच्यम् । अन्यथा साग्वर्कभान्वोः पदैक्ये पञ्चभागमितरविकोटयंशेषु षड्भागसमे सन्धौ साग्वर्कभुजांशेषु षडशीतिसमेषु क्रान्त्यन्तरमशीतिभागसममसम्भवमुत्पद्यत इति । अत्र मल्लारिविश्वनाथयोर्व्याख्या गोलयुक्तिविरुद्धागोलाज्ञानतः प्रादुर्भूता भृशं विचिन्त्या विपश्चिद्भिरिति किं प्रपञ्चेन ॥ ३-४ ॥

पदे युग्मौजेऽर्कः समविषमगोले सतमस-
स्तदा यातः पातस्त्वगत इतरत्वे निगदितात् ।
विभिन्ने गोले चेदिह कृतशराङ्घ्रेर्लघुतरा
रवेर्दोर्भागाः स्यादिह रविपदान्यत्वमुचितम् ॥५॥

**मल्लारिः**—अथ पातस्य गतागतलक्षणमाह । अर्कः सूर्यः । यदि युग्मपदे वर्तते सराहुसूर्यात् समगोलेऽपि चेत् स्यात् तदा यातः पातो ज्ञेयः । अथ रविरोजपदे सराहुसूर्यात् भिन्नगोले चेत् तदापि यातः पातः स्यात् । निगदितात् उक्तलक्षणात् इतरत्वे अन्यथात्वे अगत एष्यः पातः स्यात् । सराहुसूर्यात् सूर्यश्चेत् भिन्नगोले तदा कृतो गणितागतो यः शरस्तस्य योऽङ्घ्रिश्चतुर्थांशः । तस्माद्रवेर्भुजभागा लघुतरा अल्पाः स्युस्तदा रविपदस्य अन्यत्वमुचितम् ।

अत्रोपपत्तिः । अत्र रविचन्द्रयोर्भुजसाम्यात् रविरेवाङ्गीकृतः । रविर्यदा युग्मपदे तदा तस्य क्रान्तिरपचीयमाना तत्र सराहुसूर्यात् समगोलत्वेऽपि समदिशा शरेण युक्तापि सा क्रान्तिरग्रे रविक्रान्त्या न समा स्यात् । अतस्तत्र पातो गतो ज्ञेयः । ओजपदे वर्त्तमानस्य क्रान्तिरुपचीयमाना सा सराहुसूर्यभिन्नगोलत्वे सति भिन्नदिशा शरेणान्तरिताप्यग्रे सूर्यक्रान्त्या न समा स्यात् । अतस्तत्रापि पातो गतः स्यात् तदन्यथात्वे गम्यः पात इत्युपपन्नम् । अत्र चन्द्रस्य गोलसन्धिः साध्यः । तत्र चन्द्रो न कृतो रविरेवास्ति चन्द्रो भुजसाम्यात् । शरेण कृत्वा गोलान्यत्वसम्भवः सन्धौ । तत्र शरांगुलभागाः साध्यन्ते । परमक्रान्त्या २४ त्रिज्यातुल्या दोर्ज्या तदेष्टशरतुल्यक्रान्त्या केति । एवमिष्टदोर्ज्या तस्या धनुष्करणार्थं सुखार्थं द्वौ हरः शराङ्कानां दशगुणत्वात् दश हरः । एवमत्र हरघातो हरः ४८०। त्रिज्यागुणः । तेनैवापवर्त्तने जातः शरस्य हरः ४ । एवं चतुर्भक्तशरादल्पभुजभागेषु भिन्नगोलत्वात् पदान्यत्वं भविष्यतीति युक्तम् । तेन कृतशराङ्घ्रेर्लघुतरा रवेर्दोर्भागा इत्युपपन्नम् ॥ ५ ॥

**विश्वनाथः**—अथ पातस्य गतगम्यलक्षणमाह पदे इति । साग्वर्कात् सायनसूर्यः समगोले समपदे चेद्भवति अथवा साग्वर्कात् सायनः सूर्यो भिन्नगोले विषमपदे चेद्भवति । उभयत्रापि गतः पातो ज्ञेयः । निगदितात् इतरत्वे अगत एष्यः । तद्यथा । साग्वर्कार्कौ समगोलस्थौ विषमपदेऽर्कस्तदा अथवा विषमगोलस्थौ समपदेऽर्कस्तदा पात एष्य इत्यर्थः । अथ रविपदान्यत्वलक्षणमाह विभिन्न इति । साग्वर्कात् सायनसूर्यो भिन्नगोले चेद्भवति तदा वक्ष्यमाणप्रकारेण शरं साधयित्वा तस्याङ्घ्रिर्ग्राह्यः । तस्मात् सायनरवेर्भुजभागा अल्पा भवन्ति तदा रविपदान्यत्वं कल्प्यं समपदस्थो यदा तदा विषमे

ज्ञेयः । विषमस्थस्तदा समपदे ज्ञेयः । तदनन्तरं गतगम्यलक्षणं द्रष्टव्यम् । अत्र ओजपदस्थोऽर्कः साग्वर्कात् समगोले इति गम्यो वधतिः पातः ॥ ५॥

सुधाकरः—कल्प्यते व्यतिपाते सायनो रविः = र । सायनश्चन्द्रः = चं । सार्को राहुः = सा । राहुश्च = रा । तदा व्यतिपातपरिभाषया

चं = ६ रा − र । चं − रा = ६ − र − रा = ६ − (र + रा) = ६ − सा ।

अतोऽत्र पूर्वसिद्धान्तानुसारेण यो गोलो रवेः स एव चन्द्रस्य । यत्पदं रवेस्तद्भिन्नं चन्द्रस्य । यो गोलः साग्वर्कस्य स एव विपातचन्द्रस्य । यत्पदं विपातचन्द्रस्य तद्भिन्नं साग्वर्कस्येति स्थितिः अथात्र यो गोलो रवेःस एव यदि साग्वर्कस्य तदा रविचन्द्रविपातचन्द्रसाग्वर्काःसर्वे एकगोलाः। तत्र यदि रविः समपदे तदा चन्द्रो विषमपदेऽतोऽग्रे रविक्रान्तितो विध्वपमोऽधिकः शराधिक्यात् स्फुटोपमश्च विधोरतीवाधिकोऽतःक्रान्तिसाम्यं गतम् । एवं साग्वर्कभान्वोर्गोलभेदे चन्द्रगोलाद्भिन्नो विपातगोलः। तत्र यदि रविरोजे पदे तदा चन्द्रः समेऽतोऽग्रे समपदीयभुजांशानामल्पत्वाद्व्यपमतो विधुस्थानीयापमो लघुः । ऋणशरवशेन स्फुटापमोऽतीव लघुरतो रविक्रान्त्याऽधिकया क्रान्तिसाम्यं गतम् । एवं वैधृतेऽपि गतत्वं विचार्यम् । अन्यथा तु क्रान्तिसाम्यमेष्यमित्यर्थत एव सिध्यतीति सर्वं स्फुटम् । विभिन्ने गोले एवं तदैव यदा विधुक्रान्तितो विभिन्नगोलीयः शरोऽल्पः । शराधिक्ये तु रविविधुस्थानीयक्रान्तितः स्पष्टा क्रान्तिर्विभिन्नदिक्स्थाऽतो रवेः पदान्यत्वं प्रकल्प्य तत्र गतैष्ये विचार्ये । अथ कै रविभुजांशैस्तत्र क्रान्तिः शरतोऽल्पा—इत्येतदर्थं विषमीकरणं प्रदर्श्यते ।

श > क्रा

ज्याकरणेन ∴ ज्याश > ज्याक्रा

त्रिज्यया गुणनेन त्रि. ज्याश > त्रि. ज्याक्रा

जिनज्यया हृतेन $\frac{\text{त्रि. ज्याश}}{\text{ज्याजि}} > \frac{\text{त्रि. ज्याक्रा}}{\text{ज्याजि}}$

अत्र भुजांशानां दशभागासन्नानां लघुज्यया स्वल्पान्तरतः प्रथमखण्डेन चापमिति कल्पनेन द्वयोः पक्षयोश्चापीकरणेन

$$\frac{\text{त्रि . ज्याश} \times १०}{\text{ज्याजि} \times \text{ज्याप्र}} = \frac{\text{त्रि . शभा}}{\text{ज्याजि}} = \frac{१२० \times \text{आचाश}}{४८ \times १०} = \frac{\text{आचाश}}{४} > \text{रभुभा}$$ ।

अत्राचार्यशरो दशभक्तो वास्तवो भागादिकः शरो भवति । दशगुणेभ्य आचार्यपठितशरखण्डेभ्यः समुद्भूतशरभागानां दशगुणितत्वादिति सर्वमुपपन्नम ॥ ५ ॥

**पञ्चधा सागराः पञ्चधा वह्नयो**
**द्वौ चतुर्धा कुभूखाभ्रमङ्का इषोः ।**
**(४।४।४।४।४।३।३।३।३।३।२।२।२।२।१।१।०।०।)**
**साग्विनाद्दालवघ्नशतुल्यैक्यकं**
**शेषभोग्याहतीष्वंशयुक् स्यात् शरः ॥ ६ ॥**

**मल्लारिः**--अथ पातसाधने हेतुभूतशरं खण्डकैः सूक्ष्मं साधयति । इषोः शरस्य एतेऽङ्काः स्युः। सागराश्चत्वारः पञ्चधा । वह्नयस्त्रयस्तेऽपि पञ्चधा । द्वौ चतुर्धा। ततः कुभूखाभ्रम्।कुरेकः।भूरेकः।खं शून्यम्।अभ्रं शून्यम् ।एतेषां समाहारस्तत् तथा । ततः सायनार्कात् सराहुसूर्यादू दोर्लवानां भुजभागानामिष्वंशः पञ्चमांशः । तत्तुल्या ये गताङ्कास्तेषामैक्यं कार्यम् । ततः शेषांशानां भोग्याङ्कस्य च या हतिः । तस्या यः पञ्चमांशस्तेन युक् शरः स्यादित्यर्थः ।

अत्रोपपत्तिः। शरस्वरूपं पूर्वमेव प्रतिपादितमस्ति । अत्र पञ्चपञ्चभागानां शरभागादिकमुत्पाद्य सावयवत्व इष्टाभेः सवर्ण यत्वा सिद्धान् नवतिभुजभागानामष्टादशशराङ्कानाचार्यः प्रोक्तवान् । मध्ये तत्रानुपातः । यदि पञ्चभिर्भुजभागैरेकः शराङ्को लभ्यते तदेष्टभुजभागैः कियन्त इति अत उक्तं भुजभागपञ्चांशतुल्यगताङ्कैक्यं कार्यम् । शेषाणामनुपातः । पञ्चभिर्भागैर्भोग्यखण्डं लभ्यते तदा शेषभागैः कियन्त इति । अतः शेषभोग्यखण्डवधपञ्चमांशेन युक्तं तदैक्यं शरः स्यादित्युपपन्नम् ॥ ६ ॥

**विश्वनाथः**--अथ शरखण्डानि शरसाधनं चाह पञ्चधा इति । सार्ककः ३ । ३ । ५४ । ८ । अस्य भुजांशाः । ८६ । ५ ।५२ । एषामिष्वंश-१७ तुल्यगतखण्डैक्यम् ४५ । शेष-१ । ५ । ५२। भोग्याहतिः ।०।०।०। अस्य पञ्चमांशः ० । अनेन खण्डैक्यं ४५ युक्तं जातः शर उत्तरः ४५ । भिन्नगोलत्वं प्रकल्प्य पदान्यत्वोदाहरणम् । शराङ्क् ४५ अ ११ । १५ अस्मात् सायनसूर्यस्य भुजभागा अल्पा न सन्ति अतः पदान्यत्वाभावः ॥ ६ ॥

**सुधाकरः**—त्रिज्यया १२० परमशरभागा $\frac{२७०}{६९} = \frac{९}{२}$ लभ्यन्ते तदेष्टदोर्ज्यया किं

लब्धाः शरभागा दशगुणाः $= \frac{९\text{दोर्ज्या} \times १०}{२ \times १२०} = \frac{३\ \text{दोर्ज्या}}{८}$ । अत्र लघुज्यया पञ्चभागादिपञ्चभागोत्तराणां ज्यार्थं न्यासः ।

| ५ | १० | १५ | २० | २५ | ३० | ३५ | ४० | ४५ |
|---|---|---|---|---|---|---|---|---|
| $१०\frac{१}{२}$ | २१ | ३१ | ४१ | $५०\frac{१}{२}$ | ६० | $६८\frac{१}{२}$ | ७७ | $८४\frac{१}{२}$ |
| ५० | ५५ | ६० | ६५ | ७० | ७५ | ८० | ८५ | ९० |
| ९२ | ९८ | १०४ | $१०८\frac{१}{२}$ | ११३ | $११५\frac{१}{२}$ | ११८ | ११९ | १२० |

एतास्त्रिगुणिता अष्टभक्ता जाता दशगुणाः शरभागाः ।

| ४ | ८ | $११\frac{५}{८}$ | $१५\frac{३}{८}$ | $१९\frac{७}{८}$ | $२२\frac{४}{८}$ | $२५\frac{४}{८}$ | $२८\frac{७}{८}$ | $३१\frac{५}{८}$ |
|---|---|---|---|---|---|---|---|---|
| $३४\frac{४}{८}$ | $३६\frac{६}{८}$ | ३९ | $४०\frac{५}{८}$ | $४२\frac{३}{८}$ | $४३\frac{३}{८}$ | $४४\frac{२}{८}$ | $४४\frac{५}{८}$ | ४५ |

अतोऽत्र शोधनेन खण्डानि, अर्धाधिके रूपं ग्राह्यमर्धाल्पे त्याज्यमिति नियमेन ।

४ । ४ । ४ । ४ । ४ । ३ । ३ । ३ । ३ । ३ । २ । २ । २ । २ । १ । १ । ० । ० ॥
एभ्योऽनुपातेन दशगुणशरभागानयनं सुगममिति सर्वमुपपन्नम् ॥ ६ ॥

खैकादिके रविभुजांशदशांशके स्या-
द्धारोऽर्कसूर्यमनुधृत्युडवोऽङ्गरामाः।
खाश्वा द्विशत्युडुगुणास्तु शराद्धराप्त्या
हीनोऽत्र स द्युपमसंस्कृतये स्फुटः स्यात् ॥ ७ ॥

**मल्लारिः**—अथास्य शरस्य क्रान्तिसंस्कारयोग्यत्वार्थं स्पष्टत्वमाह । रवेर्भुजांशा ये स्युः । तेषां यो दशमांशः । तस्मिन् खैकादिके शून्यैकादिसमे सति क्रमादयं हरः स्यात् । अर्का द्वादश । पुनः सूर्या द्वादश । मनवश्चतुर्दश । धृतिरष्टादश । उडूनि सप्तविंशतिः । अङ्गरामाः षट्त्रिंशत् । खाश्वाः सप्ततिः। द्विशती प्रसिद्धा । उडुगुणाः सप्तविंशत्याधिकशतत्रयम् । एवमत्र शरात् क्रमप्राप्तहरेण या लब्धिस्तया स एव शरो हीनः सन् क्रान्तिसंस्कारयोग्यः स्पष्टः शरः स्यादित्यर्थः ।

अत्रोपपत्तिः । अत्र क्रान्तिर्ध्रुवाभिमुखी अतः सा कोटिरूपा शरः कदम्बाभिमुखः स कर्णरूपः । अतः क्रान्तिसंस्कारार्थं शरस्य कर्णरूपस्य कोटिरूपत्वं कार्यम् । तद्यथा । यदि त्रिज्याकर्णे द्युज्याकोटिस्तदा शरकर्णे का कोटिरिति जातः कोटिरूपः शरः । एवमत्र द्युज्या कार्या । द्युज्या नाम द्युरात्रवृत्तव्यासार्धम्। तत्र क्रान्तिज्या भुजो द्युज्या कोटिस्त्रिज्या कर्णः । एवं क्रान्तिज्यावर्गोनत्रिज्यावर्गो द्युज्यावर्गस्तन्मूलं द्युज्येति कर्त्तव्यम् । अत्रेदं जडकर्म दृष्ट्वा आचार्येण दशभागानां द्युज्याः साधिताः । तत्र प्रथमं दशभागानां क्रान्तिज्यायां क्रियमाणायां सत्रिराशिग्रहः कार्यः । एवमत्र सत्रिराशीनां दशभागानां द्युज्या ११०। शरोऽनया गुण्यः खार्कमितत्रिज्यया भाज्यः । अत्र गुणहरौ दशभिरपवर्त्तितौ जातौ गुणः एकादश ११।हरो द्वादश १२ । यो राशिरेकादशभिर्गुण्यते द्वादशभिर्भज्यते स स्वद्वादशांशहीन एव भवति । एवं सर्वेऽपि हरा उत्पादिताः अतः शरः स्वहरलब्ध्या हीनः क्रान्तिसंस्कारयोग्यः स्पष्टो भवतीत्युपपन्नम् ॥ ७ ॥

**विश्वनाथः**—अथ शरस्य क्रान्तिसंस्कारयोग्यत्वार्थं हरानयनम् । शरस्पष्टत्वं चाह खैकादिके इति । रविभुजांशानां दशमांशे खैकादिके शून्यैकत्वादिके सति अर्कादि हारः स्यात् । रविभुजांशदशांशश्चेत् शून्यं तदा द्वादश हारः स्यात् । एकस्तदापि द्वादश हारः । द्वौ तदा मनव इत्यादि ज्ञेयम् । शेषांशा गतैष्यहारान्तरेण गुण्या दिग्भिर्भाज्याः फलेन हारो युक्तः कार्यः स्फु

स्यात् । इदं स्पष्टत्वं ग्रन्थकृता स्वल्पान्तरत्वान्न कृतम् । पूर्वं कृताच्छराद् हारा-प्त्या स शरो हीनः कार्यः । सोऽपमसंस्कृतये स्पष्टशरो भवति । सायनार्कः १ । २० । ३२ । ३१ । भुजांशाः ५० । ३२ । ३१ । एषां दशांशः ५ । अत्र खैकादिकेत्यादि प्राप्तो हारः ३६ । शेषांशाः ० । ३२ । ३१ । गतै-३६ ष्या-७० न्तरेण ३४ गुणिताः १८ । २५ । ३४ । दशभिर्भक्ताः फलेन १।५० हारो ३६ युक्तो जातः स्फुटः ३७ । ५० । हरः॥ शरः ४५ । ० हारेण ३७ । ५० भक्तः फलम् १ । ११। अनेन हीनः शरो जातः स्फुटः शर उत्तरः ४३ । ४९ ॥ ७॥

**सुधाकरः**—अत्र सूक्ष्मज्योत्पत्तिविधिना दशभागोत्तराणां भुजांशानां क्रमेण क्रान्तयः ।

भु=१०° । २०° । ३०° । ४०° । ५०° । ६०° । ७०° । ८०° । ९०°

क्रां=४°।३′।८°।०′।११°।४४′।१५°।९′।१८°।९′।२०°।३७′।२२°।२८′।२३°।३७′।
४°।०′ क्रांतिभागानां कोटिज्यासार्धे क्रमेण द्युज्या ।

९९७५०२८ । ९९०२६८१ । ९७९१०४७ । ९६५२४४९ । ९५०२४४३ ।
९३५९५७१ । ९२४१०२० । ९१६२४८२ । ९१३५४५५ । भुजांशाभावे द्युज्या
त्रिज्यैव १०००००००।

'यष्टया द्युचरविशिखस्ताडितस्त्रिज्ययाप्तः' इति भास्करविधिना स्पष्टशरः

$$= \frac{\text{श} \cdot \text{पद्यु}}{\text{द्यु}} = \frac{\text{श}\left\{\text{द्यु} - (\text{द्यु} - \text{पद्यु})\right\}}{\text{द्यु}}$$

$$= \text{श} - \text{श}\left(\frac{\text{द्यु} - \text{पद्यु}}{\text{द्यु}}\right) \left\{ \text{यतो गोलयुक्त्या यष्टिः} = \frac{\text{त्रि} \cdot \text{पद्यु}}{\text{द्यु}} \right.$$

$$= \text{श} - \frac{\text{श}}{\dfrac{\text{द्यु}}{\text{द्यु} - \text{पद्यु}}} \quad \ldots\ldots\ldots\ldots (1)$$

अत्र खदशादिकेषु रविभुजांशेषु क्रमेण द्युज्यादयः प्रदर्श्यन्ते।

| भु = | ० | १० | २० | ३० | ४० |
|---|---|---|---|---|---|
| द्यु = | १०००००००। | ९९७५०२८ । | ९९०२६८१ । | ९७९१०४७ । | ९६५२४४९ । |
| पद्यु = | ९१३५४५५ । | ९१३५४५५ । | ९१३५४५५ । | ९१३५४५५ । | ९१३५४५५ । |
| द्यु-पद्यु = | ८६४५४५ । | ८३९५७३ । | ७६७२२६ । | ६५५५९२ । | ५१६९९४ । |
| द्यु / (द्यु-पद्यु) = | १२ । | १२ । | १३ । | १५ । | १९ । |

| भु = | ५० | ६० | ७० | ८० |
|---|---|---|---|---|
| द्यु = | ९५०२४४३ । | ९३५९५७१ । | ९२४१०२० । | ९१६२४८२ । |
| पद्यु = | ९१३५४५५ । | ९१३५४५५ । | ९१३५४५५ । | ९१३५४५५ । |
| द्यु-पद्यु = | ३६६९८८ । | २२४११६ । | १०५५६५ । | २७०२७ । |

$\frac{\text{द्यु}}{\text{द्यु}-\text{पद्यु}}$ = २६ । ४२ । ८८ । ३२९

'अथ यदि सत्रिराशिग्रहद्युज्याविघ्नत्रिज्योद्धृतः शरः ।' इति भास्करगौणप्रकारेण शरः साध्यते

तदा स्पश= $\frac{\text{श . सद्यु}}{\text{त्रि}} = \frac{\text{श}\left\{\text{त्रि} - (\text{त्रि} - \text{सद्यु})\right\}}{\text{त्रि}}$ = श− $\frac{\text{श}(\text{त्रि}-\text{सद्यु})}{\text{त्रि}}$

= श − $\frac{\text{श}}{\frac{\text{त्रि}}{\text{त्रि}-\text{सद्यु}}}$ ..................(२)

अथात्र खदशादिकेषु भुजांशेषु सत्रिभग्रहद्युज्यादयः प्रदर्श्यन्ते ।

सद्यु – ९१३५४५५ । ९१६२४८२ । ९२४१०२० । ९३५९५७१ । ९५०२४४३ ।

त्रि – सद्यु = ८६४५४५। ८३७५१८ । ७५८९८० । ६४०४२९ । ४९७५५७ ।

$\frac{\text{त्रि}}{\text{त्रि}-\text{सद्यु}}$ = १२ । १२ । १३ । १६ । २० ।

सद्यु=९६५२४४९ । ९७९१०४७ । ९९०२६८१ । ९९७५०२८

त्रि-सद्यु= ३४७५५१ । २०८९५३ । ९७३१९ । २४९७२

$\frac{\text{त्रि}}{\text{त्रि}-\text{सद्यु}}$ = २९ । ४८ । १०२ । ४००

अत्र (१), (२) समीकरणाभ्यां स्वल्पान्तरतस्तदेव फलं भवतीत्यंतिमो हारः (१) समीकरणोत्थो गृहीतस्तथाऽऽचार्येण स्वल्पान्तरतः फलसाम्यात् १२ । १२ । १३ । १६ । २० । २९ । ४८। १०२। ३२९ इत्यत्र १२ । १२ । १४। १८ । २७। ३६ ।५०। १०२। ३२७ । एते हारा गृहीताः । अतोऽत्र 'खाक्षा द्विदिक् द्युड्गुगास्तु' इति पाठः साधीयान् । अन्यथोपांतिमयोर्ह- रयोर्महदन्तरमिति सुधीभिर्भृशं विचार्यम् । एवमत्र स्पष्टशरः = श − $\frac{\text{श}}{\frac{\text{द्यु}}{\text{द्यु}-\text{पद्यु}}}$

= श − $\frac{\text{श}}{\frac{\text{त्रि}}{\text{त्रि}-\text{सद्यु}}}$ = श − $\frac{\text{श}}{\text{ह}}$ । अत्र मध्यमशरस्य दशगुणत्वात् स्पष्टशरेऽपि दशगुणि-तो जातः । नवतिसमेषु भुजांशेषु च मध्यशरसम एव स्फुटः शर इति सुधीभिर्ज्ञेयमिति स्फुटमेव सिद्धान्तनिष्णातानामिति ॥ ७ ॥

**चतुर्धा नखा गोभुवो द्विर्गजाब्जा**
**नृपाष्टीन्द्रविश्वार्कदिग्वस्वगाक्षाः ।**
**त्रयः क्ष्माऽपमांकाः क्रमादर्कबाहो-**
**र्लवेष्वंश ९ तुल्यो गतो न्यस्य शेषम् ॥ ८ ॥**

**मल्लारिः**---अथ क्रान्तेः कर्त्तव्यताप्रकारं खण्डैरेवाह । एवमपमस्य क्रान्तेरङ्काः स्युरित्यन्वयः । नखा विंशतिश्चतुर्धा ततो गोभुव एकोनविंशतिः द्विवारम् । गजाब्जा अष्टादश । नृपाः षोडश । अष्टिः षोडश । इन्द्राश्चतुर्दश । विश्वे त्रयोदश । अर्का द्वादश । दिशो दश । वसवोऽष्टौ । अगाः सप्त । अक्षाः पञ्च । त्रयः प्रसिद्धाः । क्ष्मा एकः । अर्कस्य यो बाहुर्भुजस्तस्य ये लवास्तेषामिष्वंशः पञ्चमांशस्तत्तुल्यो गतोऽङ्कः स्यात् शेषं न्यस्येति शेषमेकान्ते स्थापनीयमेव ।

अत्रोपपत्तिः । क्रान्तिलक्षणं पूर्वमेव प्रतिपादितम् । पञ्चपञ्चभागजान् क्रान्तिभागान् प्रसाध्य सावयवत्वाद् दशभिः संगुण्याङ्काः पठिताः । तत्रानुपातः । यदि पञ्चभिर्भुजभागैरेकः क्रान्तेरङ्को लभ्यते तदेष्टभुजभागैः किमिति लब्धतुल्यो गताङ्कः स्यात् शेषस्याग्रे प्रयोजनमस्त्यतस्तत् स्थाप्यम् ॥ ८ ॥

**विश्वनाथः**---अथ क्रान्त्यङ्कानाह चतुर्धेति । चतुर्धा नखेत्यादयः क्रान्त्यङ्काः स्युः । सायनसूर्यस्य भुजांशाः ५० । ३२ । ३१ । एषां पञ्चांशः १० । तत्तुल्यो गताङ्को जातः शेषम् ० । ३२ । ३१ । न्यस्य स्थापयित्वेत्यर्थः । अस्याग्रे प्रयोजनमस्ति ॥ ८ ॥

सुधाकरः—'चत्वारिंशदशीतिरद्रिकुभुवः' इत्याद्याचार्योक्तेनैव दशगुणापमभागेन पञ्चपञ्चभागानां दशगुणापममानानि साध्यन्ते ततोऽधोधोविशोधनेन दशगुणखण्डानि साध्यन्ते नैतानि च बहुत्रैकाधिकान्यत्राचार्येण स्वल्पान्तरतः पठितानि । अत्रैव सर्वखण्डानां योगोऽप्य- २४१ यं वास्तवदशगुणापमा—२४० दस्मादेकाधिको जायत इति सुधीभिर्ध्येयम् । एभ्यः खण्डेभ्यो रविभुजांशसमचन्द्रभुजांशानां दशगुणापमसाधने पञ्चभक्तचन्द्रभुजांशसमानि खण्डानि गतानि भवन्त्येव । पञ्चभक्तचन्द्रभुजांशतो यच्छेषं तदनष्टं स्थाप्यमग्रत उपयोगित्वात् । इति सर्वं स्फुटम् ॥ ८ ॥

क्रमोत्क्रमादुक्तशरापमांकान्
सङ्ख्याहि भोग्यात क्रमतः षडंकाः ।
स्थाप्या गतैष्या गतगम्यपाते
युग्मेऽथवौजे स्युरिमेऽयनांशाः ॥ ९ ॥
अन्त्याद्विलोमा यदि तेऽन्यदिक्का
अथापमांकाः क्रमशः शरांकैः ।
सुसंस्कृतास्त्रीन्दुहृतापमैष्या-
ङ्केनापि त स्पष्टतरा भवेयुः ॥ १० ॥

**मल्लारिः**--अतः क्रान्तिखण्डानां शरखण्डानां संस्थानक्रमं तत्संस्कारं च कथयति । उक्ता ये शरस्य तथाऽपमस्य क्रान्तेर्येऽङ्कास्तान् यथागतान् आदौ

क्रमात् पश्चादुत्क्रमात् सङ्ख्याहि गणय।भोग्यात् अङ्कात् क्रमतो यथाक्रमं षडङ्का गते पाते गता एष्ये पाते एष्याःस्थापनीयाः।अयं प्रकारस्तु युग्मपदे । ओजपदे च यदा रविः सराहुसूर्यो वा भवति तदा इदमन्यथा विपरीतम् । तद्यथा । गते पाते एष्या एष्ये पाते गता इमऽङ्का अयनदिशः स्युः । रविर्यस्मिन्नयने तद्दिशः क्रान्त्यङ्का विराहुसूर्यो यस्मिन्नयने तद्दिशः शराङ्काः स्युरिति। यदि ते क्रान्त्यङ्का अन्त्याद्विलोमास्तदा तेऽन्यदिशो ज्ञेयाः।भोग्यादन्त्यपर्यन्तं येऽङ्कास्तेऽयनदिशः। अन्त्यादन्त्ये ये उत्क्रमस्थास्ते विपरीतदिशः । उत्तरायणे दक्षिणा दक्षिणायने उत्तराः स्युरित्यर्थः । अथ शब्दोऽनन्तरवाची । क्रान्त्यङ्कशराङ्कस्थापनानन्तरं क्रान्त्यङ्काः शराङ्कैः सुसंस्कृताः कार्याः । अत्र संस्कारस्तु एकदिशो योगो भिन्न-दिशोरन्तरमिति प्रसिद्धः । ततस्तेऽङ्कास्त्रीन्दुहृतापमैष्याङ्केन त्रयोदशभक्त-क्रान्तिभोग्याङ्केनापि संस्कृताः स्पष्टतरा भवेयुरित्यर्थः ।

अत्रोपपत्तिः। युग्मपद खण्डानामग्रे उपचयः। तत्र चेद्गतः पातः। तज्ज्ञानार्थमपचयभूताङ्कग्रहणम्। अतो गताङ्कस्थापनमुक्तम् । एष्ये पाते एष्या-ङ्कस्थापनमर्थत एव सिद्धम्। ओजपद इद विपरीत भवति ।अङ्कानामुपचयापच-यस्य व्यस्तभूतत्वात् । तेऽङ्काः स्वायनदिशि स्युरिति प्रत्यक्षम्। अत्र शरसंस्कृ-तायाश्चन्द्रक्रान्तेः सूर्यक्रान्त्या सह यदन्तरं तज्ज्ञानार्थं क्रान्त्यङ्काःशराङ्कः संस्का-र्या एव। शरस्य प्रथमाङ्कः क्रान्तेः प्रथमाङ्के संस्कार्यः । एवं द्वितीयो द्वितीये इत्यादिषण्णामप्यङ्कानां संस्कारः कार्य एव ।अन्यच्च संस्कारान्तरम् । यदि चन्द्रगतिप्रमाणेनेदं क्रान्तिभोग्यखण्डं तदा रविगतिप्रमाणेन किमिति भोग्य-खण्डं रविगत्या गुण्यम् । चन्द्रगत्या भाज्यम्। अत्र रविगतिस्त्रयोदशगुणा चन्द्रगतिर्भवत्यतः स्थूलत्वात् भोग्याङ्कास्त्रयोदशभिर्भाज्याः फलं सर्वाङ्केषु संस्कारार्थं चन्द्रगतिसम्बन्धित्वात् । अतस्त्रीन्दुहृतापमैष्याङ्केनापि संस्कृतास्ते षडङ्काः स्पष्टतराणि क्रान्त्यन्तरखण्डानि चन्द्रार्कयोर्भवेयुरित्युपपन्नम्।।९-१०।।

**विश्वनाथः**—अथ शरक्रान्त्यङ्कानां स्फुटीकरणं तत्संस्कारं चाह क्रमो-त्क्रमादिति । अन्त्यादिति। हे गणक ! उक्तशरापमाङ्कान् क्रमेण उत्क्रमेण च संख्याहि गणय।एवं गणनायां कृतायां भोग्यात् क्रमतः षडङ्का गतगम्यपाते गतैष्याः स्थाप्याः। एतदुक्तं भवति। क्रान्तिभोग्याङ्कात् गते पातलक्षणे गताः खण्डकाः स्थाप्याः।एष्यलक्षणे पाते एष्याङ्का एष्याः खण्डकाः स्थाप्याः। एवं शरभोग्याङ्कात् गते पाते षड्गताङ्काः स्थाप्याः। एष्ये एष्याङ्का षट् स्थाप्याः। एवं समपदे सूर्ये सति क्रान्त्यङ्काः साग्वर्के समपदे सति शराङ्काः इति ज्ञेयम्। ओजे विषमे पदेऽन्यथा गते पाते एष्या एष्ये गता इत्यर्थः । रवौ विषम-

पदे तदा क्रान्त्यङ्काः साग्वर्के विषमपदे तदा शराङ्का इत्यर्थात् सिद्धं ज्ञेयम् । इमेऽङ्का अयनांशा ज्ञेयाः । रवौ उत्तरायणे तदा क्रान्त्यङ्का उत्तरा दक्षिणायने दक्षिणाः । साग्वर्के उत्तरायणे शराङ्का उत्तरा दक्षिणायने दक्षिणा इत्यवगन्तव्यम् । अन्त्याङ्कात् क्रमस्थापिताङ्कानां मध्येऽन्तिमाङ्कात् येऽङ्का विलोमा विपरीताङ्कमध्ये आगच्छन्ति ते अन्यादिक्काः कल्प्याः । उत्तरास्तदा याम्या याम्यास्तदोत्तरा इत्यर्थः । अथानन्तरमपमाङ्काः क्रान्त्यङ्काः षट् स्थापयित्वा शराङ्कैः सुसंस्कृताः कार्याः । समदिशि योगो भिन्नदिश्यन्तरमिति । एवं संस्कृतास्ते त्रीन्दुहृतापमैष्याङ्केन त्रयोदशभक्तक्रान्तिभोग्याङ्केनापि संस्कृताः । एवं तेऽङ्काः स्पष्टतरा भवेयुः । अथ क्रमात् क्रान्त्यङ्काः स्थापिताः २० । २० । २० । २० । १९ । १८ । १८ । १६ । १६ । १४ । १३ । १२ । १० । ८ । ७ । ५ । ३ । १ । अथोत्क्रमात्स्थापिताः १ । ३ । ५ । ७ । ८ । १० । १२ । १३ । १४ । १६।१६।१८ । १८ ।१९।२० । २० । २० । २० ।अथ शराङ्काः क्रमात् स्थापिताः । ४ । ४ । ४ । ४ । ४ । ३ । ३ । ३ । ३ । ३ । २ । २ । २ । २ । १ । १ । ० । ० । उत्क्रमात् । ० । ० । १ । १ । २ । २ । २ । २ । ३ । ३ । ३ । ३ । ३ । ४ । ४ । ४ । ४ । ४ । सूर्यस्य विषमपदे स्थितत्वादेष्ये पाते क्रान्तेर्भोग्याद्गतखण्डकाः स्थापिताः १३ । १४ । १६ । १६ ।१८। १८ । इमे सौम्याः रवेरुत्तरायणस्थत्वात् । साग्वर्कस्य समपदस्थत्वादेष्ये पाते एष्या भोग्याच्छरखण्डकाः स्थापिताः ० । ० । १ । १ । २ । इमे दक्षिणाः साग्वर्कस्य दक्षिणायनगतत्वात् । अन्त्याद्विलोमा इत्युक्तत्वात् स्थापितशराङ्कानां मध्ये प्रथमं विहायान्ये पञ्च ० । ० । १ । १ । २ । उत्क्रमस्थापिताङ्कमध्ये उत्तरा जाताः । प्रथमाङ्कस्तु याम्य एव । संस्कृताः शराङ्कैः क्रान्त्यङ्का जाता उत्तराः १३ । १४ ।१६ । १७ । १९ । २० । इमे त्रीन्दु-१३ हृतापमैष्याङ्केन १ । ०। सूर्यायनदिक्केन तुल्यदिक्त्वाद्युक्ता जाताः स्पष्टतराः १४।·१५ । १७ । १८ । २० । २१ । ॥ ९–१० ॥

सुधाकरः—व्यतिपाते चेत् सूर्यः समे पदे तदा चन्द्र ओजपदे भवति । अतश्चन्द्रे चौजपदे पाते च गते पञ्चभिः पञ्चभिर्भागैः पृष्ठे चालनेन क्रान्तिभोग्यखण्डतो गतक्रान्तिखण्डान्येवोपलभ्यन्ते । तानि च पातोपयोगीनि पृष्ठतस्त्रिंशद्भागमध्ये षट् स्थापितानि । एवमेष्यपातेऽग्रे चालनेनैष्यतः एष्याणि षट् खण्डानि स्थापितानि। ओजपदस्थे च रवौ चन्द्रः समपदेऽस्ति विष्यति समपदे च विधौ गते पाते पृष्ठे चालनेन विधोर्भुजांशा उत्तरोत्तरमधिका भवन्ति । अतस्तत्र भोग्यखण्डत एष्यखण्डान्युपलभ्यानि भवन्ति । एष्यपाते चाग्रतश्चालनेन भुजांशानामपचयादेष्यखण्डतो गतखण्डानि भवन्ति।अत ओजेऽन्यथेत्युक्तम्।एवं साग्वर्कपदाद्विभिन्नपदे विपातचन्द्रो भवति तद्वशेनगतगम्यपाते शरभोग्यखण्डतो गतैष्यशरखण्डानांस्थापनं

युक्तम् । वैधृते च यस्मिन् पदे रविस्तद्भिन्नपदे चन्द्रो भवति रविचन्द्रयोगस्य राशिद्वादशकत्वात् । परन्तु यो गोलो रवेस्तद्भिन्नश्चन्द्रस्य । कल्प्यते रविर्द्वितीयपदे तदा वैधृतलक्षणाच्चन्द्रस्तृतीयपदे भवति । तदा गते पाते पृष्ठचालनेन चन्द्रभुजांशानामपचयात् । गम्ये पाते चाग्रतश्चालनेन भुजांशानामुपचयात् क्रमेण गतगम्यक्रान्तिखण्डस्थापनं युक्तमेव । एवमेव वैधृते विपातचन्द्रः = १२ − (र + रा) अतोऽत्रापि यदि विपातचन्द्रः समपदे तदा साग्वर्को विषमपदे । गते पाते साग्वर्कस्य च समपदस्थे विपातस्य विषमपदस्थस्य पृष्ठतश्चालनेन भुजांशानामपचयात् गम्ये पाते चाग्रतश्चालनेन भुजांशानामुपचयादत्रापि शरभोग्यखण्डतो गतगम्यशरखण्डस्थापनं युक्तमेव । एवमेवात्रौजपदस्थे च रवौ साग्वर्के च तत्रस्थे सर्वं विचार्यम् । व्यतिपाते च समदिशोः क्रान्त्योः साम्यं वैधृते च विभिन्नदिशोः । अतो व्यतिपातसाधने समदिशोः क्रान्त्योरन्तरं वैधृते च विभिन्नदिशोरन्तरं क्रियते । व्यतिपाते रविचन्द्रयोरयनभेदत्वाद्रविजायनदिक् क्रान्तिखण्डकल्पनेनायनदिक्कं क्रान्त्यन्तरं चन्द्रस्य विपरीतायनदिक्कं भवति। वैधृते च रविचन्द्रयोरेकायनाच्चन्द्रायनदिक्कमेव क्रान्त्यन्तरं संस्कारार्थं कल्पितमाचार्येण.व्यतिपाते विपातचन्द्रस्य स्वाग्वर्काद्भिन्नायनस्थस्य साग्वर्कायनदिक्कं शरखण्डकल्पनेन विपातचद्रायनदिक्कं शरखण्डमपि विपरीतदिक्कं भवति । वैधृते च विपातचन्द्रसाग्वर्कयोरेकायनात् शरखण्डं यथादिक्कमेव भवतीति सर्वं विभाव्यं संस्कारार्थं सुधिया । षट्खण्डस्थापने यदि अग्रे खण्डानामभावादन्त्याद्विलोमं खण्डानि स्थाप्यन्ते तर्हि अन्तिमखण्डस्यायनान्तं गतवतस्तदग्रेऽयनान्तरप्रवृत्तेर्विलोमखण्डानामाशा द्वितीयायनसिद्धा वर्त्तमानायनतो विपरीतदिक्कैव भवतीति स्फुटमेव ।

एवं क्रान्तिशरखण्डसंस्कारतश्चन्द्रस्य स्पष्टक्रान्तिखण्डानि पातोपयोगीनि जातानि । अत्र रवि क्रान्तिखण्डसंस्कारेण रविचन्द्रयोः स्पष्टक्रान्त्यन्तरखण्डानि जायन्ते।चन्द्रस्य स्पष्टक्रान्तिखण्डानि पञ्चभिः पञ्चभिरंशैःसाधितानि।अतश्चन्द्रस्य पञ्चभागसमे गमनं स्वल्पान्तरेण रविगमनम् $= \frac{५}{१३}$ । ततोऽनुपातो यदि पञ्चभागैः क्रान्तेर्भोग्यखण्डं लभ्यते तर्हि $\frac{५}{१३}$ अनेन किं लब्धं तात्कालिकं रविस्पष्टापमान्तरसमानं सर्वत्र समानं च रविक्रान्तिखण्डम् $= \frac{\text{एवं}}{१३}$ । व्यतिपाते, गते च पाते उत्तरगोले समपदस्थे रवौ विषमपदस्थे च चन्द्रे चन्द्रक्रान्तिखण्डानि दक्षिणानि उपचयरूपाणि । सर्वत्रैवैष्यखण्डत्रयोदशांशसमानि रव्ययनदिक्कानि दक्षिणानि रविखण्डानि चोपचयरूपाणि । अतस्तयोर्योगे स्पष्टक्रान्त्यन्तरखण्डानि । एवमेष्यपाते चन्द्रक्रान्तिखण्डान्युपचयरूपाणि रविक्रान्तिखण्डान्यपचयरूपाणि। अतस्तत्रापि द्वयोर्योगे स्पष्टक्रान्त्यन्तरखण्डानि भविष्यन्ति । एवं सर्वत्र योगवियोगरूपःसंस्कारो बुद्धिमता विभावनीयः किं लेखप्रयासेन॥९-१०॥

**प्राक् स्थापिताः शेषलवाः शराप्ता**<br>
**रूपाद्विशुद्धा लघुसंज्ञकः स्यात् ।**<br>
**आद्यः स्फुटाङ्को लघुनाहतो य-**<br>
**स्तेनाढ्यबाणात् क्रमशोऽथ जह्यात् ॥ ११ ॥**

तानङ्कान् शेषमशुद्धभक्तं
विशुद्धसंख्यासहितं लवनम् ।
त्रिघ्नं भनाडीघ्नमिभाप्तमाप्त-
यातैष्यनाडीष्विह पातमध्यम् ॥ १२ ॥

मल्लारिः---अथ पातकालं वृत्तद्वयेन साधयति । प्राक् पूर्वक्रान्तौ ये शेषभागा एकान्ते स्थापितास्ते शरैः पञ्चभिराप्ता भक्ताः सन्तो यत् फलं तस्य रूपशुद्धस्य लघुसंज्ञा । षडङ्कमध्ये य आद्यः प्रथमः स्पष्टाङ्कः स लघुना हतो गुणितः कार्यः । तेन आढ्यो युक्तो योऽत्र स्पष्टबाणः । तस्मात् तानङ्कान् जगन् शोधयेत् । ततः शुद्धेष्वङ्केषु यच्छेषं तदशुद्धेनाङ्केन भक्तं कार्यं तत्फलं शुद्धखण्डानां संख्या यावती स्यात् तया सहितं युक्तं च कार्यं ततस्तत् लवुनां त्रिगुणम् । पुनर्भनाडीभिः नक्षत्रसर्वघटीभिर्गुण्यम् । ततस्तदिभैरष्टभिराप्तं भक्तं सन् आप्ता लब्धा या यातैष्यनाड्यस्तासु पातमध्यः स्यात् । यातैष्यलक्षणं पूर्वमेव प्रतिपादितमस्ति । मध्यमपातकालात् ताभिर्घटीभिर्गतो गम्यो वा पातमध्यः स्यादित्यर्थः ।

अत्रोपपत्तिः । अत्र खण्डानि पञ्चपञ्चभागानां तेनानुपातः । यदि पञ्चभिर्भागैर्भोग्याङ्को लभ्यते तदा शेषांशः किमिति । अतः शेषलवाः शराप्ताः कार्या एव । रूपादूना एव सदा स्युरिति तेषां भोग्यत्वकरणार्थं ते रूपाद्विशुद्धा इत्युक्तम् । तस्य लघुसंज्ञा कृता । तस्य भोग्याङ्को गुणोऽस्त्यतो लघुना हत आद्यः स्फुटाङ्कः कार्यं इति सिद्धम् । एवं जातं गते पाते शेषांशोत्थभोग्यखण्डमेष्ये शेषांशोनपञ्चांशोत्थं भोग्यखण्डम् । इदमाद्यापरपर्यायान्मध्यक्रान्तिसाम्यकालिकशरतुल्यक्रान्त्यन्तराच्छोध्यम् । द्वितीयादिखण्डान्यपि शोध्यानि । अत्राचार्येण प्रथमखण्ड सम्पूर्णं शोधितम् । अतो भोग्योत्थभोग्यखण्डं गते पाते भुक्तांशोत्थभोग्यं खण्डं गम्ये पाते शरे योज्यम् । अतः शेषलवाः शराप्ता रूपाद्विशुद्धाः । गते पाते लघुः । गम्ये शेषांशाः शराप्ता एव लघुः स्यादिति युक्तम् । अत एवाचार्यलिखिततज्जीर्णपुस्तके 'प्राक्स्थापिताः शेषलवा शराप्ता लघुर्भवेदभूच्युत एष्यपाते' इति पाठो दृश्यते।अस्यार्थः। एष्यपाते शेषांशशरांशो भूच्युतो लघुर्गते किं कर्त्तव्यमिति मन्दधियां संशयो भवेदतः 'प्राक्स्थापिताः शेषलवाः शराप्ता गम्ये लघुर्भूपतितो गतेऽसौ' इति पाठो नितान्तरमणीय इति प्रतिभाति । 'रूपाद्विशुद्धो लघुसंज्ञकः स्यात्' इति पाठस्तु वासनाविरोधादुपेक्ष्यः । एवं यावन्तोऽङ्काः शुध्यन्ति तावन्तः शोध्याः शेषेण सहानुपातः । यदि अशुद्धाङ्केन पञ्चभागा लभ्यन्ते तदाऽनेन शेषेण किमिति । अतः शेषमशुद्धाङ्कभक्तं कार्यमिति ।

तस्मिन् फले त्रिशुद्धाङ्कसंख्या योज्या । तत्र पूर्वं लघुः संयोजितो वर्त्तते स निष्काशनीय एव । तत्कालादेव पातज्ञानार्थम् । अतो लघूनमिति । यदि चन्द्रगतिभगैरेभिः १३ । १० । सर्वनक्षत्रघटिका लभ्यन्ते तदैभिः शेषभागैः किमिति । अत्र शेषस्य सर्वर्क्षनाड्यो गुणः । अतो भनाडीघ्नमिति । अत्र हरस्त्रयोदश सावयवाः । १३ । १० । पूर्वानुपाते गुणः पञ्चतुल्यः स्थितः । अत्र सञ्चारो यदि पञ्चतुल्ये गुणे सावयवास्त्रयोदश १३ । १० हरस्तदाऽऽचार्येण कल्पिते त्रिमिते गुणे को वा हरः । लब्धा अष्टौ । अतस्त्रिघ्नामिभाप्तमिति । लब्धघटीभिर्गतैष्यं पातमध्यं स्यादित्युपपन्नम् ॥ ११-१२ ॥

**विश्वनाथः**—अथ पातमध्यकालानयनमाह प्राक् स्थापिता इति ।तानङ्कानिति । प्राक् स्थापिताः शेषलवाः शराप्ता गम्ये लघुर्भूपतितो गते स्यादिति । अयमर्थः प्राक्स्थापितशेषांशानां यः पञ्चमांशस्तत्तुल्यं एष्यपाते लघुसंज्ञः स्यात् गते तु पाते शेषांशानां पञ्चमांशो ग्राह्यः । स रूपाद्विशुद्धः कार्यो लघुसंज्ञकः स्यादिति । प्राक् स्थापिताः शेषलवाः शराप्ता रूपाद्विशुद्धा लघुसंज्ञकः स्यादिति क्वचित् पाठःस तु वासनाविरुद्धत्वादुपेक्षितः । न्यस्य शेषमित्यादिना प्राक्स्थापिताः शेषलवाः ० । ३२ । ३१ । पञ्चभक्ताः फलम् ० । ६ । ३० । अनेन आद्यस्फुटाङ्कः १४ गुणितः १ । ३१ । ० । अनेन पूर्वानीतस्पष्टशरः ४३ । ४९ युक्तः ४५ । २० । ० । अस्मात् ते स्पष्टक्रान्त्यङ्काः शोध्यास्तत्र प्रथमाङ्के १४ शोधिते शेषम् ३१ । २० । ० । एतन्मध्ये द्वितीयाङ्क १५ शोधिते शेषम् १६ । २० । ० । एतस्मात् तृतीयाङ्को १७ । न शुद्ध्यति अतः शेषम् १६ । २० । ० । अशुद्धेन १७ भक्त ० । ५७ । ३८ । विशुद्धसंख्या-२ सहितम् २ । ५७ ।३८। लघू- ० । ६ । ३० नं २ । ५१ । ८ त्रिघ्नं ८ । ३३ । २४ भनाडी—६२ । ५५ घ्नं ५३८ । २१ । इभा-८ प्तम् ६७ । १७ । मध्यक्रान्तिसाम्यकाला--४५ । ५० देतावति गम्ये काले ६७ । १७ । वैशाखशुक्लसप्तम्यां शनौ आसु घटीषु ५३ । पलेषु ५ पातमध्यम् ॥ ११-१२ ॥

**सुधाकरः**— $\overset{\text{ए}_2}{\text{अ}}$ —— $\overset{}{\text{कं}}$ —— $\overset{\text{ए}_1}{\text{गं}}$ —— कल्प्यते अक = शेषांशाः = शे । अग=५°

एष्यपाते चैष्यस्पष्टक्रान्त्यन्तरखण्डं ग विन्दौ ए$_1$ समम् । गते च पाते अविन्दुगतमेष्यखण्डम् ए$_2$ । क विन्दौ च रविचन्द्रयोः क्रान्त्यन्तरं शरसममेव । एष्ये पाते पृष्ठे क्रान्त्यन्तरमुपचयेन भवति अग्रे चापचयेन । अत एष्ये पाते अविन्दौ क्रान्त्यन्तरज्ञानार्थमनुपातः । यदि अग पञ्चभिर्भागैरेष्यखण्डसमं क्रान्त्यन्तरं तदा अक शेषांशैः किम् । लब्धमकजन्यं क्रान्त्यन्तरम्

$= \frac{\text{अक} \times \text{ए}_1}{\text{अग}} = \frac{\text{शे} \times \text{ए}_1}{५}$ ल . ए$_1$ । $\left( \text{यदि } \frac{\text{शे}}{५} = \text{लघुः ।} \right)$ इदं कस्थानीयेन शरए-

मेन क्रान्त्यन्तरेण युक्तं जातमविन्दो क्रान्त्यन्तरम् = श+ए$_1$ . ल। एवं गते पाते एष्यखण्डम् =ए$_2$ । तत्राग्रतश्चालनेन क्रान्त्यन्तरमुपचितं भवति। अतो ग विन्दौ क्रान्त्यन्तरज्ञानार्थं कगजन्येन क्रान्त्यन्तरेण क विन्दुगतं शरसमं क्रान्त्यन्तरं योज्यम्। तत्र पूर्ववदनुपातेन फलम्

$$= \frac{\text{कग} \times \text{ए}_2}{\text{अग}} = \frac{(५ - \text{शे})}{५}\text{ए}_2 = \left(१ - \frac{\text{शे}}{५}\right)\text{ए}_2 = \text{ल}.\text{ए}_2 \left( \text{यदत्र } १ - \frac{\text{शे}}{५} = \text{लघुः} \right)$$

अतो मक्करिप्रतिपादिताचार्यलिखितजीर्णपुस्तकपाठः

'प्राक् स्थापिताः शेषलवाः शराप्ता लघुर्भवेद्‌भूच्युत एष्यपाते'

इत्येव पाठः साधीयान्। मक्कारिकलिखितः पाठश्च यद्यपि स्फुटार्थबोधकस्तथाऽपि स न युक्तः स्वाक्रमाचार्योक्तिविरुद्धत्वादिति चिन्त्यं विपश्चिद्भिः।

अथवमेष्यपाते अ विन्दौ गते पाते चगविन्दौ क्रान्त्यन्तरं जातम्। तस्य यदाऽभावस्तदैव क्रान्तिसाम्यं यच्च मध्यशब्देन व्यवह्रियते। अतस्तत्र स्पष्टक्रान्त्यन्तरखण्डानि शोधितानि। यतमानि शुद्धानि तद्‌घ्नपञ्चभागाः शेषोत्थफलेन अशुद्धखण्डेन, पञ्चभागास्तदा शेषेण किमित्यनुपातजातेन योज्यास्तेऽभीष्टभागाश्चालनात्मका भवन्ति। ऐष्ये पाते अ विन्दुतोऽग्रे गते च गविन्दुतः पृष्ठे तैरेव चालनांशैरधिको न्यूनश्च शशी भवति तत्र क्रमेण अकभागैः कगभागैश्च न्यूनीकृते क विन्दुत एष्या गताश्च चालनांशा भवन्तीति ध्येयम्। एवमत्रैष्या गता वा चालनांशाः $= ५\,\text{शु} + \frac{५\,\text{शे}}{\text{अशु}} - (\text{अक वा कग}) = ५\,\text{शु} + \frac{५\,\text{शे}}{\text{अशु}} - ५\,\text{ल} =$

$५\left(\text{शु} + \frac{\text{शे}}{\text{अशु}} - \text{ल}\right)$ अथैते चन्द्रस्य चालनांशाः कियद्भिर्घटिकाभिरुत्पद्यन्ते इत्येतदर्थमनुपातो यदि चन्द्रगतिभागैः षष्टिघटिकास्तदा पूर्वागतैश्चालनांशैः किम्। अत्र नक्षत्रभोगघटिकाभिश्चन्द्रस्याष्टशतीकलास्तदा षष्टीघट्या किमित्यनुपातेन कलात्मिका चन्द्रगतिः

$= \frac{६० \times ८००}{\text{नभो}}$ षष्टिभक्ता भागात्मिका गतिः $\frac{८००}{\text{नभो}}$। ततश्चालनांशभवा घटिकाः

$$= \text{चाघ} = \frac{६० \times ५ \times \text{नभो}\left(\text{शु} + \frac{\text{शे}}{\text{अशु}} - \text{ल}\right)}{८००} = \frac{३०० \text{ नभो}\left(\text{शु} + \frac{\text{शे}}{\text{अशु}} - \text{ल}\right)}{८००}$$

$= \frac{३\,\text{नभो}\left(\text{शु} + \frac{\text{शे}}{\text{अशु}} - \text{ल}\right)}{८}$। धनर्णवासना चातिसुगमेति सर्वमुपपन्नम्। क्रान्तिखण्डानां शरखण्डानां च दशगुणत्वादत्र सर्वत्र क्रान्त्यन्तरेण दशगुणं वास्तवक्रान्त्यन्तरं ज्ञेयमित्यनुक्तमपि बुद्धिमता ज्ञायत इति सर्वं निरवद्यम्॥ ११–१२॥

**अविशुद्धहता यमार्कनाड्यः १२२**
**प्राक् पश्चात् स्थितिरत्र पातमध्यात्।**

शुद्धाः क्वचिदत्र चेत् षडंकाः
संस्कार्याश्च तदग्रतस्त्रयोऽङ्काः ॥ १३ ॥

**मल्लारिः**—अथ पातस्थितिकालमाह । अविशुद्धेनाङ्केन हृता भक्ता यमार्केनाड्यो द्वाविंशत्यधिकशतमितघटिकाः । यत् फलं ताभिर्घटिकाभिः पातमध्यात् पूर्वमग्रतश्च स्थितिः स्यात् । तावत्समयं पातस्य कालोऽस्त्येव । अत्र क्वचिद्यदा षडङ्का अपि बाणात् शुद्धास्तदाऽन्येऽपि त्रयोऽङ्का पूर्वोक्तरीत्या संस्कार्याः ।

अत्रोपपत्तिः । स्थितिर्नाम मानैक्यखण्डतुल्यं यावत्क्रान्त्यन्तरं भवति तावत्पर्यन्तं पातोऽस्त्येव । अथ भाज्यः साध्यते । तत्र पञ्चदशभागानां कला ९०० यदि चन्द्रगतिप्रमाणेन७९०एतास्तदा रविगतिप्रमाणेन५९का इति जाताः कलाः ६७ । १३ । तथा मानैक्यखण्डस्य मध्यमस्य कलाः ३२।१५। तत्र मानैक्यखण्डमेतत्कलागुण्यं जातो भाज्योऽपरपर्यायः । यदि यमांगराम-३६२ मितक्रान्त्या पञ्चदशभागकला ९०० लभ्यन्ते तदा मानैक्यखण्डतुल्यक्रान्त्या ३२ । १५ का । चन्द्रगतिकलाभिः ७९० । ३५ । षष्टिघटिकाः ६० । तदाऽऽभिःकलाभिर्किं यदि यमांगराम-३६२ तुल्यभोगखण्डेनैतास्तदा अशुद्धेन खण्डेन काः । अयमनुपातो व्यस्तः । इच्छाह्रासे फले वृद्धेरपेक्षितत्वात् । तेनाशुद्धखण्डं हरः । यमांगरामा गुणः । पूर्वं हरश्च तयोर्नाशः । एवं जातो गुणत्रयघातो गुणः१७-४१५०० । हरश्चन्द्रगतिः । अशुद्धखण्डं च । चन्द्रगत्याऽपवर्त्ते कृते जातो भाज्यः२२०३ । अयं यमांगरामखण्डेन पञ्चदशभागोत्पन्नेन। ततोऽन्योऽनुपातः। यदि यमांगरामानामयं भाज्यः २२०३ । तदाऽऽच यैक्तविंशतिमितानां किमिति जातो भाज्यः १२२ । अस्याशुद्धाङ्को हरोऽस्त्यतोऽविशुद्धहृता यमार्कनाड्य इत्युपपन्नम् । इयं स्थितिरुभयतः समा । मानैक्यखण्डतुल्यान्तरस्य विद्यमानत्वात् । अत्र मानस्थितिमध्ये कृतं स्नानजपहोमादि अनन्तफलदं भवति । यत्र क्वचित् शरबाहुल्यात् षडङ्का अपि शुद्धास्तत्रान्ये त्रयः संस्कार्या इति प्रत्यक्षसिद्धम् ॥ १३ ॥

**विश्वनाथः**—पातस्थितिकालमाह अविशुद्धेति । यमार्कनाड्यः १२२ । अविशुद्ध--१७ हृताः फलं पातमध्यात् प्राक् पश्चात् स्थितिघटिकाः ७। १० । पातमध्यात् ५३ । ५ पूर्वमाभिर्घटीभिः ४५ । ५५ । पातप्रवेशः । रवौ घटी० पलेषु १५ निर्गमः । अथ षट्स्वपि अङ्केषु शुद्धेष्वग्राङ्कसंस्कारं स्थितिघटिकानयनमाह । शुद्धाः क्वचिदिति । बाणात् क्वचित् षडंकाः शुद्धास्तदा तदग्रतस्त्रयोऽङ्काः पूर्ववत् संस्कार्याः । तेभ्यः पूर्ववत् पातमध्यं साध्यम् ॥ १३ ॥

**सुधाकरः**—'तावत्सनातमेव क्रान्त्योर्विवरं भवेद्यावत् । मानैक्यार्धादल्पं साम्याद्बिम्बैकदेशजक्रान्त्योः' ॥

इति भास्करवचनादत्र मानैक्यार्धमध्यमं द्वात्रिंशत्कलासममाचार्येण प्रकल्पितं तच्च स्पष्टक्रान्तिखण्डजात्यर्थं षष्टिभक्तं दशगुणं चात्र कर्तव्यम् । एवं जातं तज्जातीयं मानैक्यार्धम् $= \frac{३२ \times १०}{६०} = \frac{१६}{३}$ ततोऽनुपातो यद्यशुद्धखण्डेन चन्द्रस्य चालनांशाः पञ्च भागा लभ्यन्ते तदा मानैक्यार्धेन किं लब्धाश्चालनांशाः $= \frac{५ \times १६}{३ \times अशु}$ । अथचालनघटीज्ञानार्थं स्वल्पान्तरतश्चन्द्रमध्यमगतिभागैः $\frac{७९०}{६०}$ रतघटीषष्ट्या चानुपातः । यदि चन्द्रगतिभागैः षष्टिघटिकास्तदा चालनांशैः किम् । जाताश्चालनघटिकाः $= \frac{६० \times ६० \times ५ \times १६}{७९० \times ३ \times अशु} = \frac{२ \times ६० \times ५ \times १६}{७९ \times अशु}$

$= \frac{९६००}{७९ \times अशु} = \frac{१२१\frac{४१}{७९}}{अशु} = १२२$ स्वल्पान्तरतः ।

अन्यत् सर्वं स्पष्टमित्युपपन्नम् ॥ १३ ॥

**षड्भार्कभच्युतरविस्त्विह सायनाब्जो-**
**ऽथार्के घटीसमकलाश्चलनं त्वथेन्दोः ।**
**भुक्त्यंशका भघटिकाप्तखखाहयः स्यु-**
**स्तच्चालितापमसमत्वमिह प्रतीत्यै ॥ १४ ॥**

**मल्लारिः**—अथात्र सूर्यात् चन्द्रज्ञानं वदति । व्यतीपाते पाते जाते रविः षड्राशिभ्यः शुद्धः सन् सायनचन्द्रो भवति । वैधृते पाते जाते रविर्द्वादशराशिभ्यः शुद्धः सायनश्चन्द्रो भवति । अथ सूर्यघटीसमकलाश्चालनं देयम् । अथ भघटीभिर्नक्षत्रसर्वघटीभिराप्ता भक्ताः खखाहयोऽष्टशतानि इन्दोश्चन्द्रस्य भुक्त्यंशका गतिभागाः स्युः । तया गत्या चालितो यश्चन्द्रः । तस्यापमः शरसंस्कृतः सूर्यापमः केवल एव । अनयोः समत्वं प्रतीत्यै स्यात् ॥

अत्रोपपत्तिः । अत्र व्यतिपातपाते सायनरविशशियोगः षड्राशितुल्यः । वधृते द्वादशराशितुल्यः । अतः षड्द्वादशराशिभ्यः शोधितः सायनो रविः सायनश्चन्द्रः स्यादिति प्रत्यक्षम् । पातकालीनसूर्यकरणार्थं पातघटीतुल्या एव कलाः स्वल्पान्तरत्वात् रवौ देया इत्युक्तम् । भघटीभक्ताः खखाष्टौ चन्द्रगतिः स्यादिति प्रत्यक्षोपपत्तिः । यदि सर्वर्क्षघटीभिरष्टशतकलाः ८०० तदा षष्टिघटीभिः का इति फलं चन्द्रगतिकलाः । ताः षष्टिभक्ता भागाः स्युः । तेन षष्टितुल्ययोर्गुणहरयोर्नाशे भघटिकाप्तखखाहयश्चन्द्रगत्यंशा इति । एवं तत्र रविचन्द्रयोः क्रान्तिसाम्यं स्यादेवेति ॥ १४ ॥

दैवज्ञवर्यस्य दिवाकरस्य सुतेन मल्लारिसमाह्वयेन ।
वृत्तौ कृतायां ग्रहलाघवस्य पाताधिकारः परिपूर्तिमागात् ॥ १४ ॥
इति श्रीग्रहलाघवस्य टीकायां पाताधिकारश्चतुर्दशः ।

**विश्वनाथः**—अथ क्रान्तिसाम्यकाले सूर्याच्चन्द्रज्ञानमाह षड्भाकात । अस्मिन् पातमध्ये व्यतीपातपाते सायनरविः षड्राशिभ्यः शुद्धः सन् सायनचन्द्रो भवति । वैधृतिपाते सायनरविर्द्वादशराशिभ्यः शुद्धः सन् सायनचन्द्रो भवति । प्रकृते मध्यक्रान्तिसाम्यकाले सायनार्कः १ । २० । ३२ । ३१ । वैधृतिपातत्वादयं द्वादशभच्युतो जातः सायनचन्द्रः १० । ९ । २७ । २९ । घटीसप्तकलाभिः ६७ । १७ चालितोऽर्कः १ । २१ । ३९ । ४८ । भघटिका-६२ । ५५ । भखखाहृयः । चन्द्रभुक्तयंशाः १२ । ४२ । ५५ । एतैश्चालितश्चन्द्रः । १० २३ । ४२ । ० । स्वगत्या चालितो राहुः ० । २५ । ७ । ३ । रविक्रान्तिः १८ । ३० । ५७ । चन्द्रक्रान्तिः १३ । ५० । १० । विराहुचन्द्रः ९ । २८ । ३५ । ५७ । पञ्चघेत्यादिना शरो दक्षिणः ४४ । ५५ । ० खकादिके इत्यादिना हारः ४१ । ३९।१९ । स्पष्टः शरः ४३ । ५० । १९ । अयं दशभक्तो जातोऽशकादिः ४ । २३ । १ । अनेन चन्द्रक्रान्तिरेकदिक्का युक्ता जाता स्पष्टा १८ । १३ । ११ । अत्र कलासु किञ्चिद्वैसादृश्यं दृश्यते स्वल्पान्तरत्वाददोषः ॥ १४ ॥

इति पाताधिकारोदाहरणम् ।

**सुधाकरः**— व्यतिपातवैधृतसम्भवलक्षणेनैव सायनचन्द्रानयनं स्पष्टम् । रविगतिश्च स्वल्पान्तरतः षष्टिकला गृहीताः । नक्षत्रभोगघटीभ्यश्चन्द्रगतिभागानयनमनन्तरोक्तमिति सर्वं स्फुटमेव ।

इति सुधाकरनिर्मितवासना सकलया कलया कलयासना ।
अपमसाम्यविधौ परया गता भवलयावलया वलयाऽऽगता ॥

इति पाताधिकारः समाप्तः ।

# अथ पञ्चाङ्गचन्द्रग्रहणानयनाधिकारः ।

**मासाः स्वार्धयुतास्तिथेर्दिनाद्यं**
**तावत्यो घटिकाश्च माससंघात् ।**
**त्र्यंशाढ्याः सहितं द्व्यत्रयाभ्यां**
**चक्रघ्नाक्षनवाङ्कवर्गयुक्तम् ॥ १ ॥**

**मल्लारिः**—अथ पञ्चाङ्गानयनाधिकारो व्याख्यायते । इष्टमासीयो मासगणो यस्त एव मासाः । ते स्वार्धयुताः । तिथादेर्दिनाद्यं वाराद्य स्यात् । ताव-

त्य एव घटिकाः । मासगणात् त्र्यंशाढ्याः । ततस्तत् द्व्यत्रयाभ्यां सहितं कार्यम् । चक्रेण गुणा अक्षाः पञ्च । नव प्रसिद्धाः । अङ्गवर्गः षट्त्रिंशत् । चक्रगुणेनानेन ध्रुवेण युक्तं तत्कार्यमित्यर्थः ।

अत्रोपपत्तिः । अत्र तिथ्यानयनार्थं मध्यमतिथिवाराद्यं साध्यम् । तत्र चान्द्रमासप्रमाणम् २९ । ३१ । ५० इदं सप्ततष्टं जातं वाराद्यम् १ ।३१।५० । अत्रानुपातः । यद्येकमासेनेदं तदेष्टमासगणने किमिति । अतो मासगणेनानेन गुण्यः । तत्र खण्डगुणेन मासगणतुल्या एव वारा एकं खण्डम् । द्वितीयखण्डम् ०। ३०। अतः सार्धयुक्ता इति घटिका अपि तावत्यः । अन्यत् खण्डम् ०।२० । अतस्त्र्यंशाढ्या इति । अत्र ग्रन्थारम्भे तिथिवारद्वयं घटित्रयं च । अतस्तद्युक्तमिति । एकचक्रे तिथिवाराद्यम् ५ । ९ । ३६ यद्येकचक्रेणेदं तदेष्टचक्रेण किमिति । अतश्चक्रघ्नाक्षनवांगवर्गयुक्तमित्युपपन्नम् ॥ १ ॥

## अथ पञ्चाङ्गचन्द्रग्रहणानयनोदाहरणम् ।

**विश्वनाथः**——अथ पञ्चांगचन्द्रग्रहणानयनम् । तत्र तिथिसाधनमाह मासा इति । शाके१५३४ कार्त्तिकशुक्ल-१५ गुरौ मासगणः५७। उदाहरणम् । मासाः ५७ स्वार्ध-२८ । ३० युताः । जातं तिथिदिनाद्यम् ८५ । ३० एतत्तुल्यघटिका अधःस्थापिताः ८५ । ११५ । ३० । एता घटिका माससङ्ख्या ५७ त्र्यंशे १९ योजिता नाड्यः ८५।१३४। ३० यथाक्रममूर्ध्वाधःस्थाने द्व्यत्रयाभ्यां सहितम् ।८७।१३७। ३० । इदं चक्र-८ घ्नाक्षनवांगवर्ग-४१।१६।४८ युक्तम् । १२८ । १५४ । १८ । इदं घटिकास्थाने षाष्टिभक्तं वारस्थाने सप्ततष्टं जातम् ४ । ३४ । १८ । इदं देशान्तरपलैः ४८ सहितं जातं कार्त्तिकशुक्लप्रतिपद्दिवाराद्यम् ४ । ३५ । ६ ॥ १ ॥

अथ पञ्चांगानयनचन्द्रग्रहणाधिकारः ।

**सुधाकरः**—एकस्मिन् चान्द्रे मासे सप्ततष्टा सावनसंख्या दिनाद्या = १ । ३१ । ५० = १। ३० + १ । ३० + २० = $\frac{3}{2}$ दि + $\frac{3}{2}$ घ. + $\frac{1}{3}$ घं. ततो यद्येकस्मिन् मासे पूर्वागतं दिनाद्यं लभ्यते तदेष्टमासगणेन किम् । इत्युपपन्नं मासगणभव तिथेर्दिनाद्यम् । शेषोपपत्त्यर्थं मासगणाधिकारे २ – ३ श्लोकोपपत्तिर्द्रष्टव्येति ॥ १ ॥

**खं सप्ताष्टयमा -। ० । ७ ।२८ श्च चक्रनिघ्ना**
**नागाम्भोधिघटीयुता भशुद्धाः ।**
**द्वाभ्यां पूर्णघटीभिर्विनिघ्नमासै-**
**र्युक्ता भद्युदलो भपूर्वकः स्यात् ॥ २ ॥**

**मल्लारिः**--अथ नक्षत्रध्रुवकं साधयति। खं शून्यम्। सप्त घटिकाः। अष्टविंशतिः पलानि। एते चक्रनिघ्नाः कार्याः। ततो नागाम्भोधि-४८ घटीभिर्युक्ताः कार्याः। ततस्ते सप्तविंशतेः शोध्याः। द्वाभ्यां धूर्जटिभिर्विनिघ्ना गुणिता ये मासाः। तैर्युक्ता भपूर्वो नक्षत्राद्यः। नक्षत्रध्रुवकः स्यादित्यर्थः।

अत्रोपपत्तिः। अत्रैकमासे नक्षत्रध्रुवकः सप्तविंशतितष्टः २। ११। अतो मासा अनेन गुण्या इति। तथैकस्मिन् चक्रे नक्षत्रध्रुवकश्चक्रशुद्धः० । ७। २८। अतोऽयं चक्रगुण इति। क्षेपश्च चक्रशुद्धोऽयम्। ०। ४८। अतो नागाम्भोधिघटीयुता इति स्वचक्रशुद्धत्वात् भशुद्ध इत्युपपन्नम्॥ २॥

**विश्वनाथः**--अथ नक्षत्रध्रुवकमाह खमिति। खसप्ताष्टयमाः ०। ७। २८। चक्र-८ निघ्नाः ०।३९।४४। नागाम्भोधि--४८ घटीयुताः १। ४७। ४४। भ-२७ शुद्धाः २५। १२। १६। मासा ५७ द्वाभ्यां २ धूर्जटिभि-११ र्विनिघ्नाः १२४। २७। एतैर्भशुद्धा २५। १२। १६ युताः १४९।३९।१६। इदं सप्तविंशति-२७ तष्टं जातो नक्षत्रपूर्वको नक्षत्रध्रुवकः १४।३९।१६॥ २॥

**सुधाकरः**—अत्र सूर्यसिद्धान्तमतेन युगे चन्द्रभगणाः = ५७७५३३३६

युगचान्द्रमासाः = ५३४३३३३६

युगचान्द्रमासभक्ता युगचन्द्रभगणा एकस्मिन् चान्द्रमासे भगणात्मकश्चन्द्रः $= \frac{५७७५३३३६}{५३४३३३३६}$

$= \frac{५७७५३३३६ \div २४}{५३४३३३३६ \div २४} = \frac{२४०६३८९}{२२२६३८९} = १\frac{१८००००}{२२२६३८९}$ ।भगणशेषं सप्तविंशत्या निहत्य हरेण विभज्य लब्धं नक्षत्रसंख्या २शेषं ४०७२२२ षष्ट्या संगुण्य २४४३३३२०तेनैवहरेण विभज्य लब्धा घटिकाः$=१०\frac{२१६९४३०}{२२२६३८९} = ११$ स्वल्पान्तरात्। अतो 'द्वाभ्यां धूर्जटिभिर्विनिघ्नमासैर्युक्ता' इत्युपपद्यते। अथैकमासिको भगणात्मको विधुः $= \frac{२४०६३८९}{२२२६३८९}$ अयमेकचक्रचांद्रमासै-१३६ रेतैर्गुणो हारेण हृतो लब्धा भगणाः १० प्रयोजनाभावात् त्यक्ताः। शेषं भगणशेषं २२१६११० सप्तविंशत्या निहत्य ५९८३४९७० तेनैव हारेण २२२६३८९ विभज्य लब्धा नक्षत्रसंख्या २६। शेषं १९४८८५६ षष्ट्या संगुण्य ११६९३१३६० तेनैव हरेण-विभज्य लब्धा घटिकाः ५२। शेष-११५९१३२ मिदम्। पुनः षष्ट्या संगुण्य२७५६२५० तेन हरेण विभज्य लब्धा विघटिकाः ३१। एवमेकचक्रसम्बंधिनक्षत्रादिकमिदं २६। ५२।३१ सप्तविंशतेः संशोध्य शेषं ०। ७। २९। स्वल्पान्तरतः ०। ७। २८। प्रकल्प्य तदिष्टचक्रगुणितमिष्टचक्रसंबंधि भादिमानमेष्यम्। तत्र ग्रन्थारम्भिकमेष्यक्षेपमानं स्वल्पांतरतः४८घटीसमं संयोज्य वास्तवार्थं योगो भतो विशोधितस्तत्र मासगणोत्थं फलं च योजितम्। ग्रन्थारंभे रविः = ११। १९°। ४१'। चंद्रः = ११। १९°। ६' आभ्यां दर्शान्तघटिका एष्याः

= २ । ५३ = ३ घटिकाः स्वल्पान्तरतस्तत्र चालितो विधुर्दर्शोतजो विधुः = ११ । १९° । ४४ ततो नक्षत्रादि = २६ न । १२ घ स्वल्पान्तरतः । इदं भतो विशुद्धं जातमेष्यं भादि = ० । ४८ स्वल्पान्तरतः । एवमत्राष्टशती कला यदा चंद्रगतिस्तदैव स्वमासान्तेऽमांते नक्षत्रध्रुवको भवति । यतः सर्वे तद्गतित एवायातीति गणकैर्विचिन्त्यम् ॥ २ ॥

**स्वर्गाः शरा नव च चक्रहता द्विनिघ्न-**
**मासान्विता द्विहृतमासयुता घटीषु ।**
**पिण्डो भवेद्युगकुभिः खचरैः समेत-**
**स्तष्टो गजाश्विभिरिदं भवतीह चक्रम् ॥ ३ ॥**

**मल्लारिः**--अथ पिण्डं साधयति । स्वर्गा एकविंशतिः । शराः पञ्च । नव प्रसिद्धाः । एते चक्रेण गुणनीयाः । ततो द्विगुणमासगणेन युक्ताः कार्याः । पुनर्घटीषु द्विभक्तमासगणेन युक्ताः कार्याः स पिण्डो भवेत् । युगकुभिः चतुर्दशभिरूर्ध्वस्थाने खचरैर्नवभिर्घटीषु समेतो युक्तः कार्यः । ततो गजाश्विभिरष्टविंशत्या तष्टः कार्यः । तच्चक्रं भवति । अत्र पिण्डे अष्टाविंशतिमितं चक्रम् ।

**अत्रोपपत्तिः** । पिण्डो नाम चन्द्रमन्दकेन्द्रम् । तस्य चक्रमध्ये ध्रुवोऽयं २१ । ५ । ९ अतोऽयं चक्रगुण इति । ततो मासध्रुवोऽयं २ । ० । ३० । अतो द्विघ्नमासान्विताः घटीषु द्विहृतमासयुता इति 'युगकु' इत्यादिक्षेपोऽतस्तद्युक्तः कार्यः । अष्टाविंशतिचक्रत्वात् तष्टः कार्य इत्युपपन्नम् ॥ ३ ॥

**विश्वनाथः**--अथ पिण्डसाधनमाह स्वर्गा इति । स्वर्गाः शरा नव च २१ । ५ । ९ । चक्र-८ हता १६८ । ४१ । १२ । द्विनिघ्नमासा--११४ । न्विताः २८२ । ४१ । १२ । द्विहृतमासयुता घटीषु । मासा ५७ द्विभक्ताः फलम् २८ । ३० । अनेन घटिका युताः २८३ । ९ । ४२ । ऊर्ध्वस्थाने चतुर्दशभिः १४ । घटीस्थाने खचरैः ९ समेताः २९७ । १८ । ४२ । ऊर्ध्वाङ्के गजाश्वि २८-तष्टे जातः पिण्डः १७ । १८ । ४२ । अत्र पिण्डेऽष्टाविंशतिमितं चक्रम् ॥ ३ ॥

**सुधाकरः**--आचार्येणैकचन्द्रकेन्द्रभगणे अष्टाविंशतिः पिण्डाः कल्पिताः । अतः पिण्डजातीयचन्द्रकेन्द्रार्थम्--

युगे सूर्यसिद्धान्तोक्ताश्चन्द्रभगणाः = ५७७५३३३६

चन्द्रोच्चभगणाः = ४८८२०३

अन्तरेण चन्द्रकेन्द्रभगणाः = ५७२६५१३३ एते युगचान्द्रमासैर्भक्ता एकस्मिन् चान्द्रमासे भगणात्मकं चन्द्रकेन्द्रम् = $\frac{५७२६५१३३}{५३४३३३३६}$ = १ $\frac{३८३१७९७}{५३४३३३३६}$ इदं भगणशेषमष्टाश्विभिः

संगुण्य हरेण विभज्य लब्धं २ शेषं ४२३६४४ षष्टया संगुण्य २५४१८६४० हरेण विभज्य लब्धा पिण्डघटिका शून्यम् । शेषं २५४१८६४० पुनः षष्टया संगुण्य हरेण विभज्य-लब्धाः सावयवा विघटिकाः २८ । ३३ । तत्राचार्येण भगणवैलक्षण्येन २८ । ४४ । ३३ एते गृहीताः । एवमेकस्मिन् मासे पिण्डादिकं चन्द्रकेन्द्रम् = २ । ० । २८ । ४४ । ३३ एते चैकचक्रमासगणेना-१३६ नेन गुणा जातमेकस्मि चक्रे केन्द्रं पिंडादिकम् = २१ । ५ । ९ एतेन 'स्वर्गाः शरा नव च चक्रहता' इत्युपपन्नम् । एकचक्रमासगणतोऽल्पे मासगणे च २ । ० । २८ । ४४ । ३३ एतत्स्थाने स्वल्पान्तरतः २ । ० । ३०

पि

एते गृहीतास्ततः २ । ० । ३० = २+$\frac{१}{२}$ घटी । अतो 'द्विनिघ्नमासान्विता द्विहृतमा सयुता घटीषु' इत्युपपद्यते । ग्रन्थारम्भे दर्शान्तसमये चन्द्रः = ११ । १९° । ४४′ स्वल्पान्तरतः ।

चन्द्रोच्चं च = ५ । १७° । ३४′ स्वल्पान्तरतः ।

चन्द्रकेन्द्रम् = ६ । २° । १०′ = १८२° । १०′

= १०९३०′ । ततोऽनुपातो यदि चक्रकलाभिरष्टाविंशतिपिण्डा लभ्यन्ते तदा पूर्वागताभिः कलाभिः के लब्धाः पिंडाः = $\frac{२८ \times १०९३०}{२१६००}$ = $\frac{७ \times १०९३०}{५४००}$ = $\frac{७६५१}{५४०}$ = १४$\frac{९१}{५४०}$

= १४ + $\frac{९१ \times ६०}{५४०}$ घटी = १४ + $\frac{९१}{९}$ घटी = १४ + १० घ० । तत्राचार्येण स्वल्पांतरतो घटीदशकस्थाने नव घट्यो गृहीता इत्युपपन्नं सर्वम् ॥ ३ ॥

**शि[illegible]शवसुषट्काऽव्याश्विनाद्योऽश्विभात् स्वं**
**खगुणशरनगांकाशेशदिग्दिग्नवाष्टौ ।**
**रसगुणखभिनर्क्षादादितेयादृणं स्यु-**
**र्द्वियुगरसगजांकाशेश्वरा वैश्वतः स्वम् ॥ ४ ॥**

**मल्लारिः**--अथ सूर्यनक्षत्रात् फलघटिका आह । अध ११।१०।८। ६। ४ । २ । पुन । ० । ३ । ५।७।९।१०।११।१०।१० । ९ । ८ । ६ । ३ । ० उषाध २ । ४। ६। ८ । ९ । १० । ११ । अश्विनीघटिका एताः सूर्यघटिका धनं स्युः क्रमात् शिवादयः । तथा आदितेयात् पुनर्वसुत एताः खमुख्या घटिकाः ऋणम् । तथा विश्वत उत्तराषाढातो द्वियुगाद्या घटिका धनं स्युरिति ।

अत्रोपपत्तिः । सूर्यस्य प्रतिनक्षत्रं सुखार्थं मन्दफलकलानां गत्यन्तरवशतो घटिकाः कृत्वा सिद्धाः पठिताः । तासां धनर्णोपपत्तिः । अश्विनीमारभ्य पुनर्वसुपर्यन्तं रविमन्दकेन्द्रं मेषादावतस्तत्र धनम् । एवं पुनर्वसुत उत्तराषाढपर्यन्तं केन्द्रं तुलादौ भवत्यतोऽत्र ऋणम् । उत्तराषाढमारभ्याश्विनीपर्यन्तं केन्द्रं मेषादावतस्तत्रापि धनमित्युपपन्नम् । यत् सूर्ये धनं तच्चन्द्रे ऋणं पुनर्भोग्यकरणे तदधिकमेव भवति इति सूर्ये यादृशं फलं तादृशमेव तिथावपीत्युपपन्नम् ॥ ४ ॥

**विश्वनाथः**—अथ सूर्यनक्षत्रात् घटीफलमाह शिवदशेति । अश्विनीनक्षत्रादेताः सूर्यघटिकाः क्रमात् शिवादयो धनं स्युः ११ । १० । ८ । ६ । ४ । २ । तथा आदितेयात् पुनर्वसुतः खमुख्या घटिका ऋणं स्युः ० । ३ । ५ । ७ । ९ । १० । ११ । १० । १० । ९ । ८ । ६ । ३ । ०। तथा वैश्वत उत्तराषाढतो द्वियुगादयो घटिका धनम् । २ । ४ । ६ । ८ ।९।१०।११॥४॥

**सुधाकरः**—अश्विन्यन्ते यदा रविस्तदा भैकचरणे त्रयो लवा विंशतिकलाधिका भवन्तीति नियमेन भागादिके रविः = १३° ।२०′।रविमन्दोच्चं च = २ रा । १८° ततो 'मन्दोच्चं ग्रहवर्जितं निगदितम्' इत्यादिना केन्द्रम् = २।४°।४०′।रविमन्दफलम् = १°।५८′ = ११८′। इदं षष्टिगुणं मध्यमरविचन्द्रगत्यन्तरकलाभिर्भक्तं लब्धा घटिकाः = १० तत्राचार्येण ११ गृहीताः । एवं कुत्रचिदेकाधिका न्यूना वा गृहीता घटिकाः स्थूलाः । दास्रादार्द्रापर्यन्तं षड् नक्षत्राणि तच्चरणाश्चतुर्विंशतिः । एकचरणभागादिभिश्चतुर्विंशतिगुणिता जातो रविः = ८०° = २रा २०° । ततो मन्दकेन्द्रम् = २रा । १८° –(२रा । २०°) = ११रा । २८° = ०रा । ०′ स्वल्पान्तरतः । अतो मेषादिकेन्द्रम् । एवमदितिभतस्तुलादिकेन्द्रप्रवृत्तिः । ततः पूर्वाषाढान्ते रविः = ८ रा । २७°

ततः केन्द्रम् = २ रा।१८° –(८रा । २७° ) = ५ रा ।२१° अत्र पूर्वाषाढतृतीयचरणफलं भागादिकं १०° योज्यते तदा तुलाकेन्द्रसमाप्तिर्भवति । पूर्वाषाढप्रथमचरणान्तासन्ने मेषादिकेन्द्रारम्भो भवति । आचार्येण वैश्वादिपादत एव मेषादिकेन्द्रप्रवृत्तिः स्थूलोक्तेति चिन्त्यम् । धनर्णवासनार्थं मासगणाधिकारे 'नाड्यः स्युः फलसंस्कृतिर्दशहता' इत्यादिश्लोकोपपत्तिर्द्रष्टव्या ॥ ४॥

> **वेदघ्नेष्टतिथिर्युतार्कभागा**
> **योज्या भध्रुवनाडिकासु तत् स्यात् ।**
> **सूर्यर्क्षं विगतं ततोऽर्कजाख्य-**
> **नाडीहीनयुतं स्फुटं भवेत् तत् ॥ ५ ॥**

**मल्लारिः**—अथ सूर्यनक्षत्रज्ञानमाह । चतुर्गुणा इष्टावर्त्तमानातिथिः स्वार्कभागयुता तिथेर्द्वादशांशेन युता । ततः सा नक्षत्रध्रुवघटीषु योज्या तद्गतं सूर्यर्क्षं सावयवं च मध्यमं स्यात् । ततस्तत् अर्कजाख्या इदानीमुदिता याः सूर्यनक्षत्रघटिकास्ताभिर्धनर्णत्वेन युतोनं सत् स्फुटं स्यात् ।

अत्रोपपत्तिः। प्रतितिथिनक्षत्रध्रुवसूर्यनक्षत्रयोर्घटिकाचतुष्टयं पञ्चपलाधिकमन्तरम् । अतोऽनुपातः । यद्येकया तिथ्येदं तदेष्टतिथिभिः किमिति । अत्र खण्डम् ४ । अन्यत् ० । ५ । अतो वेदघ्नेष्टतिथिर्द्वादशांशयुक्तेत्युपपन्नम् । इदं भध्रुवे योज्यं सूर्यनक्षत्रं स्यादेव तन्मध्यमतः सूर्यघटीभिर्मन्दफलोत्पन्नाभिः संस्कृतं स्पष्टं स्यादित्युपपन्नम् ॥ ५ ॥

**विश्वनाथः**--अथ सूर्यनक्षत्रसाधनमाह । वेदघ्नेष्टेति । इष्टतिथिः १५। वेद-४ घ्नः ६० । स्वद्वादशांशेन ५ युतः ६५ । भध्रुव--१४ । ३९ । १६ नाडिकायोजितो जातं गतं सावयवं सूर्यर्क्षम् १५।४४।१६ । अत्र रविर्विशाखा-नक्षत्रे वर्त्तते तथाऽर्कजाख्या घट्यः ९ ऋणम् । अथार्कजाख्यघटीनां स्फुटी-करणम् । विशाखाघटी ९ अनुराधाघटी-८ नामन्तरम् १ । अनेन सूर्यनक्षत्रघ-ट्यादि ४४।१६ । गुणितं जातं तदेव ४४ । १६ । षष्टिभक्तं फलम् । ०। ४४ । अग्रिमस्य क्षयत्वादृणम् । अनेन संस्कृता जाताः स्फुटार्कजा घट्यः ९ ऋण-संज्ञकाः ८ । १६ । आभिः सर्यनक्षत्रं १५ । ४४ । १६ हीनं जातं स्पष्टं सूर्य-नक्षत्रम् १५ । ३६ । ० ॥ ५ ॥

सुधाकरः—'रवौ पाक्षिकं चालनं खेन्द्रदेवा'–इति प्राग्मासगणाधिकारे आचार्येणोक्तं तत् पञ्चदशहृतं जातं एकतिथौ रविः कलादिकः $= ५८' । १२''$ अत्र स्थूलं रविचन्द्रगत्यन्तरम-ष्टशतसमं प्रकल्पितं ततो जाता एकतिथिसम्बन्धिन्योऽर्कभघटिकाः$=\frac{(५८' । १२'')\times ६०}{८००}$

$$= \frac{३४९२}{८००} = ४ + \frac{२९२}{८००} = ४ + \frac{४\times ७३}{८००} = ४ + \frac{४}{\frac{८००}{७३}} = ४ + \frac{४}{११}$$ स्वल्पान्तरतः । आचार्येण

स्थूलं $४ + \frac{४}{१२}$ वेदं गृहीतम् । इदमिष्टतिथिगुणितं जाता इष्टतिथिभवा अर्कभनाड्य-

$= ४$ इति $+ \frac{४ इति}{१२}$ । अतोऽत्रार्कभागा इति पदेन वेदघ्नेष्टतिथ्यर्कभागा ग्राह्या इति विश्वना थव्याख्या समीचीना । मल्लारिणा तु व्यर्थमेव गणितविरुद्धं स्वकल्पितं जल्पितमिति सुधी-भिश्चिन्त्यम् । अन्यत् स्फुटमेवेति सर्वं निरवद्यम् ॥ ५ ॥

**पिण्डे युक्तिथौ तदाद्यमनुषु स्वं शेषपिण्डेष्वृणं**
**विश्वेन्द्वोश्च शरा दशार्कयमयोः पञ्चेन्दवस्त्रीशयोः ।**
**गोचन्द्रा दशवेदयोर्यमयमा पञ्चांकयोः स्युर्जिनाः**
**षड्वस्वोश्च नगे तु तत्त्वघटिकाः शक्रे च खं पिण्डजाः ६**

**मल्लारिः**--अथ पिण्डफलमाह । वर्त्तमानतिथियुक्ते पिण्डोध्र्वाङ्के कृते सति एता घटिकाः स्युः । विश्वेन्द्वोः शराः । त्रयोदशतुल्ये एकतुल्ये वा पिण्डे-शराः पञ्चघटिकाः । तथैव अर्कयमयोः पिण्डयोर्दश । त्रीशयोः पञ्चेन्दवः । दशवेदयोर्गोचन्द्राः । पञ्चाङ्कयोर्यमयमाः । षड्वस्वोर्जिनाः। नगे तत्त्वघटिकाः। शक्रे खम् । एताः पिण्डघटिकाः प्रथमचतुर्दशमध्ये धनम् । अग्रे ऋणमित्यर्थः । परं पिण्डयुक्ततिथिमष्टाविंशतेः प्रोह्य शेषात् फलं ग्राह्यम् ।

अत्रोपपत्तिः । अत्र पिण्डो नाम चन्द्रमन्दकेन्द्रम् । तत्र प्रतिपिण्डं चन्द्रस्य मन्दफलानि प्रसाध्य गत्यन्तरकलाप्रमाणेन तेषां घटिकाः कृत्वा सिद्धाःपाठपठिताः । पिण्डापरपर्यायचन्द्रकेन्द्रमुच्चोनो ग्रहः केन्द्रमिति प्रकारेण भवति । अतस्तुलादौ स्वमजादौ ऋणमिति यद्यपि तथापि भोग्यकरणे चन्द्रमन्दफलं व्यस्तं भवतीति मेषादि षड्भे केन्द्रे फलं धनम् । अतश्चतुर्दशापिण्डमध्ये धनम्। तुलादावृणमतोऽग्रे ऋणमित्युपपन्नम् ॥ ६ ॥

**विश्वनाथः**--अथ पिण्डफलमाह । पिण्डेति । इष्टतिथियुक्ते पिण्डोर्ध्वाङ्के कृते सति एता घटिकाः स्युः । विश्वेन्द्वोः १३ । १ । शराः ५ । त्रयोदशतुल्ये रूपतुल्ये वा सतिथिपिण्डोर्ध्वाङ्के पञ्चघटिका ग्राह्याः । तथैवार्कयमयोः १२।२ दश । त्रीशयोः ३। ११ पञ्चेन्दवः १५। दशवेदयोः १० । ४। गोचन्द्राः १९ । पञ्चाङ्कयोः ५।९ । यमयमाः २२ । षड्वस्वोः ६ । ८ जिना २४ । नगे तत्त्वघटिकाः२५ । शक्रे १४ खम् ० । एताः पिण्डघटिकाः । अथ आद्यमनुषु १४ स्वम् । शेषपिण्डेषु ऋणमिति । तद्यथा।एकमारभ्य चतुर्दशपर्यन्ततिथियुक्तपिण्डोर्ध्वाङ्के सति एता घटिका धनसञ्ज्ञा ज्ञेयाः । ततोऽधिकेऽष्टाविंशतिपर्यन्तमृणसञ्ज्ञकाः । तद्यथा । तिथियुक्तपिण्डोर्ध्वाङ्कश्चतुर्दशाधिकः । अष्टाविंशतिमध्ये सावयवः शोध्यः। शेषस्योर्ध्वाङ्के या घटिकाः प्राप्तास्ता ऋणसञ्ज्ञका ज्ञेयाः । शेषपिण्डे ऋणमित्युक्तत्वात् । अष्टाविंशत्यधिकेऽष्टाविंशत्या तष्टाः कार्याः । शेषस्योर्ध्वाङ्के या घटिकाः प्राप्तास्ता धनसञ्ज्ञका ज्ञेयाः । प्रथमचतुर्दशमध्ये स्थितत्वात् पिण्डः । १७ । १८ । ४२ । इष्टतिथि-१५युक्तः ३२। १८ । ४२ । चक्राधिकत्वादष्टाविंशतिभिस्तष्टः कृतः ४ । १८। ४२ । अत्र दशवेदयोर्गोचन्द्रा इत्युक्तत्वात् पिण्डघटस्य एकोनविंशतिः १९ । ऊर्ध्वाङ्कस्य प्रथमचतुर्दशमध्ये स्थितत्वाद्धनम् । अथ पिण्डघटीस्फुटीकरणम् । अग्रिमपिण्डघटयः २२। आसामन्तरम् ३।अनेन पिण्डाधः स्थघटिकादि १८।४२ गुणितम् ५६।६। षष्टिभक्तं फलम् ० । ५६ । अग्रिमस्याधिकत्वाद्धनम् । अनेन संस्कृता जाताः स्पष्टाः पिण्डघटिका धनसञ्ज्ञकाः १९ । ५६ ॥ ६ ॥

**सुधाकरः**—एकस्मिन् पिण्डेऽनुपातेन लवादिमानम् $= \frac{१\times३६०}{२८} = \frac{९०}{७} = १३^{\circ}$ स्वल्पान्तरतः । एकतिथौ चन्द्रकेन्द्रमान च = ७९०′ । ३५″ − ६′ । ४१″ = ७८३′ । ५४″ $१३^{\circ}$ स्वल्पान्तरतः । अतः प्रतितिथि एकैकपिण्डवृद्धिः । अत्र मन्दोच्चोनश्चन्द्रः केन्द्रं पिण्ड इति साधितमाचार्येण । मेषादिषट्के पिण्डाश्चतुर्दश । तुलादौ च उत्तरार्धाश्चतुर्दश । चन्द्रवैपरीत्यान्मन्दफलं तुलादौ धनं मेषादावृणं भवति । तद्वशतो घटीफलं च मासगणाधिकारेन 'नाड्यः स्युः फलसंस्कृतिर्दशहता' इत्यादिकेन मेषादौ धनं तुलादावृणमित्युक्तम् ।

तदुपपत्तिश्च तत्रैव विलोकनीया। अथ यदा पिण्डः=१तदा केन्द्रं स्वल्पान्तरतः १३°। ततो 'विधोः केन्द्रदोर्भागषष्ठोननिघ्नाः' इत्यादिना चन्द्रमन्दफलम्= १°। ५′ स्वल्पान्तरतः। 'केन्द्रस्य कोटिलवखाश्विलवोननिघ्ना रुद्रा' इत्यादिना गतिफलमृणम्=६६′ स्वल्पान्तरतः। ततश्चन्द्रस्पष्टगतिः ७२४′ स्वल्पान्तरतः। रविगतिश्च मासगणाधिकारवत् खचरशरकला गृहीताः। ततो गत्यन्तरकलाभि-६६४ राभिर्घटीषष्टिस्तदा मन्दफलकलाभिः किं लब्धा घटिकाः= $\frac{६५' \times ६०}{६६४} = \frac{६५ \times १५}{१६६} = \frac{९७५}{१६६} = ५\ \frac{१४५}{१६६}$ =६स्वल्पान्तरतः। अत्राचार्येण स्थूलाः पञ्च गृहीताः। एवं बहुत्र एकाधिका न्यूनाश्च स्थूला गृहीताः। यत्पिण्डस्य या ज्या सैव तदूनभार्धस्यार्थात् तदूनचतुर्दशपिण्डानां ज्येति सर्वं ज्योत्पत्तिविधिना स्फुटम्॥ ६॥

**वारेषु तिथिर्देया हेया नाडीषु जायते मध्या।**
**रविजापिण्डफलाभ्यां सुसंस्कृता स्पष्टतां याति॥ ७॥**

**मल्लारिः**—अथ स्पष्टतिथिवारादिकमाह। यदानीतं मासगणात् तिथिवाराद्यं तस्य वारे वर्त्तमानतिथिर्देया। नाडीषु सैव तिथिर्हेया न्यूनीकर्त्तव्या सा मध्या स्यात्। सा रविजाभिर्घटीभिस्तथा पिण्डघटीभिः संस्कृता सती स्पष्टतां याति स्पष्टा स्यादित्यर्थः।

अत्रोपपत्तिः। अत्र तिथेर्मध्यमं वाराद्यम्। ०। ५९। ४। इदं तिथिगुणितं वारे योज्यम्। अतोऽत्र वारे तिथियुक्ता घटीषु न्यूनीकृता पलचतुष्टयं स्वल्पान्तरत्वात् त्यक्तं तन्मध्यमं तिथिवाराद्यं सूर्यचन्द्रमन्दफलघटिकाभी रविजापिण्डजासञ्ज्ञाभिः संस्कृतं स्पष्टं स्यादित्युपपन्नम्॥ ७॥

**विश्वनाथः**--अथ तिथेः स्पष्टीकरणमाह वार इति। वारादिकम् ४। ३५। ६। वारास्तिथि-१५ युक्ताः १९। नाडीषु ३५ हीनास्तथा कृते जातम् १९। २०। ६। वारे सप्ततष्टा जाता मध्यमा तिथिः ५। २०। ६। रविनाडी ८। १६। हीनाः ५। ११। ५०। पिण्डघटी१९। ५६। युक्ता जाता स्पष्टा तिथिः ५। ३१। ४६॥ ७॥

**सुधाकरः**—एकस्मिन् चान्द्रे मासे त्रिंशत्तिथ्यात्मके सावनदिनादि २९। ३१। ५० इदं त्रिशद्भक्तमेकतिथौ सावनघटिकादि= ५९। ४ स्वल्पान्तरात्। तत्राचार्येण पलचतुष्टयं हित्वा एकोनषष्टिघटिका गृहीताः। ततोऽनुपातो यदि एकतिथौ सावनघटिका एकोनषष्टिसमा लभ्यन्ते तदेष्टतिथिषु किम्। लब्धा इष्टतिथिसावनघटिकाः = ५९ इति = (६०-१) इति। एताः षष्टिहृता जातं दिनादि = $\frac{(६० - १)\text{इति}}{६०}$ = इति − $\frac{\text{इति}}{६०}$ = इति$^{\text{दि}}$ − इति घटिकाः। अतो दर्शान्तीयवारादौ ह्येतत्संस्कारेणेष्टतिथौ वारादिकं जायत इत्युपपन्नं सर्वम्। रविचंद्रफलसंस्कारोपपत्तिस्तु मासगणाधिकारीयतिथिसंस्कारोपपत्तिवदेवेति॥ ७॥

**स्याद्भं केवलयोस्तिथिध्रुवभयोर्योगे तिथेर्नाडिका**
**युक्ता व्यङ्गलवाद्विनिघ्नतिथिना व्यस्ताऽर्कजाः संस्कृताः।**
**नाडीभिर्ध्रुवभस्य चेन्न वियुतास्तद्धीनषष्ट्यान्विताः**
**सैकं भं घटिका वियत् षडधिकाः षष्ट्यूनिता व्येकभम् ॥८॥**

**मल्लारिः**---अथ नक्षत्रानयनं करोति । केवलयोस्तिथिध्रुवभयोर्योगे सप्तविंशतितष्टे भं नक्षत्रं स्यात् । तिथेर्नाडिका व्यङ्गलवः केवलतिथिषडंशहीनो यो द्विनिघ्नतिथिस्तेन युक्ताः कार्याः । व्यंगलवश्चासौ द्विनिघ्नतिथिश्चेति विग्रहः । व्यंगलवो द्वाभ्यां निघ्नः स चासौ तिथिश्चेति तत्पुरुषगर्भकर्मधारयो वा । ततो व्यस्ताभिर्धनर्णविपरीताभिरर्कजाभिर्घटीभिः संस्कृताश्च ताः कार्याः । ततो ध्रुवभस्य नक्षत्रध्रुवस्य नाडीभिर्वियुताः कार्याः।चेन्न भविष्यन्ति तदा तद्धीनषष्ट्या ता अन्विताः कार्याः । एवं कृते सति भं नक्षत्रं सैकं कर्त्तव्यम् । घटिकाश्चेद्वियत्षड्भ्यः षष्ट्या अधिकाः स्युस्तदा ताः षष्ट्यूनिताः कार्याः । व्येकभमेकहीनं नक्षत्रं कर्त्तव्यमित्यर्थः ।

अत्रोपपत्तिः।नक्षत्रध्रुवो मासान्तीयःकृतोऽस्ति।इष्टतिथिकालीनत्वकरणार्थं तिथिस्तत्र योज्या।तथातिथिघटिकानांनक्षत्रघटिकानां प्रतितिथिइदमन्तरम्१।५०। अतो व्यंगलवद्विनिघ्नतिथिना युक्ता इति। ततःस्पष्टत्वार्थं सूर्यघटीभिः संस्कार्याः। तत्र ग्रहापेक्षया तिथिनक्षत्रयोर्व्यस्तमतो व्यस्तार्कजाःसंस्कृता इति । एता नक्षत्रघटिका नक्षत्रध्रुवघटीभ्य उपरि समागताः । अतस्तद्धीना इति चेन्नोना भविष्यन्ति तदा तद्धीनषष्ट्या युक्ता इति । तदा नक्षत्रं सैकं कार्यमेव । यदा नक्षत्रघटिकाः षष्ट्यधिकास्तदा षष्ट्यूनाः । नक्षत्रमेकहीनं कार्यं भोग्यत्वात् ।। ८ ।।

**विश्वनाथः**----अथ नक्षत्रसाधनं स्यादिति। केवलयोरवयवरहितो भध्रुवकः १४ । इष्टतिथिः १५ । अनयोर्योगः २९ । सप्तविंशति--२७ तष्टे जातं २भरणीनक्षत्रम् । तिथिघटिकाः ३१।४६। तिथि-१५ द्विनिघ्नी ३० । व्यङ्गलव-५हीना २५। अनेन तिथिघटिका युक्ताः ५६ । ४६।अर्कजा घटी ऋणम् ८। १६ व्यस्त इत्युक्तत्वाद्धनं कृत्वा ६५।२ नक्षत्रध्रुवनाडी-३९ । १६ । भिर्वियता जाता नक्षत्रघटिकाः २५ । ४६ । नक्षत्रध्रुवनाड्यश्चेन्न शुद्ध्यन्ति तदा ध्रुवनाड्यः षष्टिमध्ये शोध्याः यच्छेषं तेन युक्ताः कार्याः । एवं कृते सति भं नक्षत्रं सैकं कार्यम् । चेद् घटिकाः षष्ट्यधिकाः स्युः । तदा षष्ट्यूनिताः कार्याः । व्येकमेकहीनं नक्षत्रमित्यर्थः ।।८।।

**सुधाकरः**-द्वितीयश्लोकोपपत्तावत्रैवाधिकारे पूर्वमेकस्मिन् चान्द्रमासेचन्द्रस्यैकोभगणोनक्षत्रद्वयमेकादशघटिका अर्थात् एकोनत्रिंशन्नक्षत्राणि एकादश घटिकाइतिदर्शितम्।अत्राचार्येणैका-

दशघटिकास्थाने स्वल्पांतरतो दश घटिका गृहीताः।एवमेकस्मिन् चान्द्रमासे नक्षत्राणि सावयवानि=२९।१०।एतानि त्रिंशत्तिथिहतानि लब्धमेकतिथौ नक्षत्रादि=०।५८।२० इदमिष्टतिथिगुणितमिष्टतिथिसम्बन्धि नक्षत्रादि=(०।५८।२०) इति= $\left\{ ०+(५८+२-२)+\frac{२०}{६०}घ \right\}$

इति = $\left\{ \begin{matrix} दि & & घ & \\ ० & +( & ६० & -२)+\frac{२०}{६०} \end{matrix} \right\}$ इति = $\left\{ १-(२-\frac{२}{६})घटी \right\}$ इति

=इति-(२-$\frac{२}{६}$)इति . घटी। कल्प्यते मासान्तसमये भध्रुवस्य नक्षत्रसंख्या=न, नाडीसंख्या च = ध्रुना। तदा भध्रुवो भादिकः = न + ध्रुना। अस्मिन् पूर्वागतेष्टतिथ्यन्तकालिकं नक्षत्रादि

=इति-(२ - $\overset{घ}{\frac{२}{६}}$) इति इदं युक्तं जातमिष्टतिथ्यन्ते गतं नक्षत्रादि=न+इति+ध्रुना-(२ - $\overset{घ}{\frac{२}{६}}$) इति। न + इति एतानि गतनक्षत्राणि वर्त्तमाननक्षत्रस्य ध्रुना - (२ - $\frac{२}{६}$) इति एता नाडिकाश्च तिथ्यन्तकाले गताः। तत्र सूर्योदयाद् तिथिघटिकाप्रमाणं यदि तिना भवेत् तदा तिथिनाडिकाभ्यो वर्त्तमाननक्षत्रगतघटीशोधनेन गतनक्षत्रस्य सूर्योदयाद् भोगघटीप्रमाणम्= तिना - $\left\{ ध्रुना - (२-\frac{२}{६}) इति \right\}$ = तिना + (२ - $\frac{२}{६}$) इति - ध्रुना......(१) पूर्वं ध्रुवनाडिकाः सूर्यर्क्षघटीकरणार्थं सूर्यर्क्षनाडीभिः संस्कृतास्ताश्च पुनर्मध्यमध्रुवनाडीज्ञानार्थं ध्रुवनाडीभिरर्थात् स्फुटसूर्यध्रुवनाडीभिर्व्यस्तसंस्कृतध्रुवनाड्यो मध्यमास्ता एव (१) समीकरणस्था ध्रुवनाडिका ज्ञेया यास्तु तत्र शोध्याः सन्ति। एवमेवोपपत्तितोऽत्र व्याख्या समुचिता। तत्र पुनर्यथागता चन्द्रपिण्डजा नाड्यश्च संस्कृता इत्याध्याहार्यम्। एवं स्फुटचन्द्रनक्षत्रघटयः समुचिता इति धीमद्भिः सन्धेयम्। मल्लारिविश्वनाथयोर्व्याख्याऽत्र दूरतो भ्रष्टा।

एवमत्र भघटिकाः = तिना + (२ - $\frac{२}{६}$) इति - ध्रुना। अत्र यदि ध्रुना > तिना + (२ - $\frac{२}{६}$) इति तदा ऋणावशेषमतस्तत्राग्रिमभस्य घटिकाः षष्ट्यधिकेन तिना+(२-$\frac{२}{६}$) इति + ६० - ध्रुना = तिना + (२ - $\frac{२}{६}$) इति + (६० - ध्रुना) एवमेव यदा भघटिकाः षष्ट्यधिकास्तदा षष्ट्यपगमे भसंख्या चैकेन न्यूनीकार्या। एवमत्र स्थूलतो रविचन्द्रमन्दफलाभ्यां तिथिनक्षत्रसंस्कारयोग्या घटिका एकेनैव हारेण गत्यन्तररूपेण साधिताः स्थूला एवेति चिन्त्यम्॥ ८॥

**सूर्यभेन्दुभयुतिर्भवेद्युति-**
**स्तद्घटीविवरमत्र नाडिकाः।**
**चेद्युभेऽल्पघटिकास्तदा सकु-**
**र्योगकोऽस्य घटिकाः खषट्-६० च्युताः॥ ९॥**

**मल्लारिः**—अथ योगसाधनमाह। सूर्यनक्षत्रचन्द्रनक्षत्रयोर्योगो योगः स्यात्। तथा तयोर्घटीनां यदन्तरं ता योगघटिकाः स्युः। द्युभे दिवसनक्षत्रे यदि घटिका

अल्पा: स्युस्तदा योग: सकुरेकयुक्त: कार्य: । अस्य योगस्य घटिकास्तदा खषट्च्युता: कार्या इत्यर्थ: ।

अत्रोपपत्तिरतिसुगमा ॥ ९ ॥

**विश्वनाथ:**–अथ योगसाधनं सूर्यभेति । सूर्यभम् १५ । चन्द्रभम् २ । अनयोर्योग: १७ । जातो व्यतीपातयोग: । अथ घटिकानयनम् । सूर्यनक्षत्रघटिका: ३६ । ० । चन्द्रनक्षत्रघटिका: २५ । ४६ । अनयोरन्तरे जाता योगघटिका: १० । १४ । अत्र दिननक्षत्रघटिका: सूर्यनक्षत्रघटिकातोऽल्पा: सन्ति इति कारणात् योगाङ्क एकयुक्तो योगो जातो वरीयान् योग: । पूर्वानीतघटिका: १० । १४ खषड्च्युता जाता: परिघयोगस्य घटिका: ४९ । ४६ ॥ ९ ॥

**सुधाकर:**—अत्र कल्प्यते सूर्यनक्षत्रं गतम्=सून, वर्त्तमाननक्षत्रस्य गतघट्य:=सूघ, तदा यद्यपि सूर्यर्क्षजनाडीफलं गत्यन्तरत: सिद्धं तथाऽप्यत्र स्थूलं गत्यन्तरमष्टशतीकला एव

माह्यास्ततो विपरीतेन कलादिको रवि: $= ८०० \text{ सून} + \frac{८०० \text{ सूघ}}{६०}$ एवमेव चन्द्रगतनक्षत्रम् =चन. वर्त्तमाननक्षत्रभोग्यघटीमानं सूर्योदयतश्चेत् चघ तदा गतघटीमानम्=६०–चघ स्वल्पान्तरत: । अत्रापि चन्द्रगति: स्थूला यद्यष्टशती कलास्तदा विपरीतेन चन्द्रकला: $= ८०० \text{ चन} + \frac{८०० (६० - \text{चघ})}{६०}$ द्वयोर्योगेन रविचन्द्रयोगकला: $= ८०० (\text{चन} + \text{सून}) + \frac{८०}{६०} \div (६० + \text{सूघ} - \text{चघ})$ अत्र यदि सूघ > चघ । तदा खखगजैर्भक्ता योगकला लब्धा गतयोगा:= सून + चन + १ । वर्त्तमानस्य गतघटिकाश्च गतियोगकला अष्टशतीसमा: प्रकल्प्य जाता: = सूघ – चघ । एष्यघटिकाश्च = ६० – (सूघ चघ) । वर्त्तमानयोगमानं च=सून + चन + १ + १ = सून + वर्त्तमानचन १ । आचार्येण सूर्यनक्षत्रं गतं साधितं चन्द्रनक्षत्र वर्त्तमानमेव गृहीतं तेनोपपन्नं 'सूर्यभेन्दुभयुति'रित्यादि । यदि सूघ < चघ, तदा गतयोगा:=सून+चन । वर्त्तमानयोगस्य गतघटिका:=६०+सूघ – चघ । एता: षष्टिशुद्धा एष्यघटिका: = चघ – सूघ । वर्त्तमानयोगमानं च = सून + चन + १=सून + वर्त्तमानचन्द्रनक्षत्रम् । अत उपपन्नं सर्वम् ॥ ९ ॥

> **चक्राहता: सप्त यमौ खबाणा ७।२।५०**
> **मासाहता: खं क्षितिरब्धिरामा: ।०।१।३४।**
> **भाद्यानयो: संयुतिरर्क-१२ शुद्धा**
> **भांशै-२७ र्युता शुक्लगमे तम: स्यात् ॥ १० ॥**

**मल्लारि:**–अथ पूर्णान्तकाले राहुं साधयति । सप्त । यमौ । खबाणा: । चक्रेण गुणिता: कार्या: । खम् । क्षिति: । अब्धिरामा: । मासगणेन गुणनीया: । अनयोर्भाद्या राशिपूर्वा या सयुति: सा अर्कशुद्धा द्वादशशुद्धा भांशै: सप्तविंशतिभागैर्युक्ता सती शुक्लगमे पौर्णमास्यन्ते तमो राहु: स्यात् ।

अत्रोपपत्तिः। एकचक्रे राहुध्रुवः ७। २। ५०। अतश्चक्रहतोऽयामिति। तथैकमासे राहुध्रुवः ०। १। ३४। अनेन मासगणो गुण्य इति अनयोः संयोगः चक्रशुद्धः कार्यः। ध्रुवाणां चक्रशुद्धत्वात् तत्र क्षेपः सप्तविंशतिभागाः। अतस्तद्युक्तः कार्य इत्युपपन्नम् ॥ १० ॥

**विश्वनाथः**—अथ पूर्णान्तकाले राहुसाधनं चक्राहता इति। सप्त यमौ खबाणाः ७। २। ५०। चक्रा-८-हताः ५६। २२। ४०। खं क्षितिरब्धिरामाः ०। १। ३४। मासा-५७ हताः ०। ५७। १९। ३८। अधः षष्टिभक्तं मध्ये त्रिंशद्भक्तं जातम् २। २९। १८। अनयो राश्याद्या संयुतिः ११। २१। ५८। अर्क-१२ शुद्धा ०। ८। २। सप्तविंशति-२७ भागैर्युता जातः शुक्लगर्भे पूर्णिमान्ते तमो राहुः १। ५। २। ०। ॥ १० ॥

**सुधाकरः**—एकस्मिन् चक्रे भादिको राहुध्रुवः ७। २। ५० 'शैला द्वौ खशरा अगोः' इत्याद्याचार्योक्तत्वात्। अयं चक्रगुणोऽभीष्टचक्रोद्भवः स्यात्। तथैकस्मिन् चान्द्रमासे—२९। ३१। ५० ऽस्मिन् कुदिनात्मके 'नवकुभिरिषुवेदैर्घस्रसंघाद्द्विधाऽऽप्तात्' इत्यादिना भादिको राहुः। ०। १। ३४ स्वल्पान्तरात्। अयमभीष्टमासगणहतोऽभीष्टमासगणोद्भवो भवति। 'तमसि खमुडवोऽष्टाग्नयः' इत्यस्य स्थाने स्वल्पान्तरतः ०। २७ क्षेपो गृहीत इत्युपपन्नं सर्वम् ॥ १० ॥

**वेदघ्नगोहृद्रविभुक्तधिष्ण्यं**
**तिथ्यन्तजोऽर्को गृहपूर्वकः सः।**
**राहूनितः पर्वणि तद्भुजांशा**
**मन्वल्पकाश्चेद् ग्रहसम्भवः स्यात् ॥ ११ ॥**

**मल्लारिः**—अथ सूर्यं साधयति। रवः सूर्यस्य भुक्तं नक्षत्रं यत् सावयवमतीतमस्ति तद्वेदघ्नगोहृत् चतुर्भिः संगुण्य नवभिर्भाज्यं फलं गृहपूर्वकोऽर्को राश्यादिकस्तिथ्यन्तजोऽर्कः स्यात् पर्वणि स रवी राहुणा ऊनितः कार्यः। तस्य भुजभागाश्चेत् मनुभ्यश्चतुर्दशभ्योऽल्पास्तदा ग्रहणसम्भवः स्यात्।

अत्रोपपत्तिः प्रत्यक्षसुगमा ॥ ११ ॥

**विश्वनाथः**—अथ सूर्यसाधनं वेदघ्नेति। रविभुक्तधिष्ण्यम् १५। २६। ०। वेद-४ घ्नम् ६२। २४। ०। नवभक्तं फलं राशयः ६। शेषम् ८। २४। ०। त्रिंशद्गुणम् २५२। ०। ०। नवभक्तं फलं भागाः २८। शेषम् ०। ०। षष्टिगुणम् ०। ०। ०। नवभक्तं फलं कला ०। एवं विकला ०। एवं जातस्तिथ्यन्तकाले राश्यादिः सूर्यः ६। २८। ०। ०। अथ ग्रहणसम्भवमाह। सूर्यः ६। २८। ०। ०। राहू-१। ५। २। ०-नितः ५। २२

५८ । ० । अस्य भुजांशाः ७ । २ । ०। चतुर्दशभ्योऽल्पाः सन्ति अतो ग्रहण-सम्भवः ॥ ११ ॥

सुधाकरः—रविगतधिष्ण्ये चतुर्णां चरणा भवन्ति । ततो नवचरणैरेको राशिस्तदा रविनक्षत्रचरणैः किमित्यनुपातेन गृहादिको रविर्भवति । शेषं चातिसुगममिति ॥ ११ ॥

पिण्डनाड्यन्तराङ्‌घ्र्यूनयुक्ता इनाः १२
स्वर्ग २१ पिण्डाद्रि ७ पिण्डात् क्रमाद्वर्जिताः ।
व्यग्विनाद्दोर्लवैः स्वार्द्धयुक्ता भवे-
च्छन्नमिन्दो रविच्छन्नकाद्युक्तवत् ॥ १२ ॥
वित्र्यंशेशाः पिण्डनाड्यन्तरस्य
षष्ठोनाढ्याः स्वर्गपिण्डाद्रिपिण्डात् ।
ग्लौविम्बं स्यात्तद्वदुर्वीप्रभा स्यात्
त्रिघ्नस्याक्षांशोनयुक्तानि भानि ॥ १३ ॥

**मल्लारिः**—अथ ग्रासमानं साधयति । गतैष्यपिण्डोत्पन्ना या घटिका-स्तासां यदन्तरं तस्य योऽङ्घ्रिश्चतुर्थांशस्तेन इना द्वादश ऊना युक्ताः कार्याः । स्वर्गपिण्डादिति एकविंशतिपिण्डमारभ्य षष्ठपिण्डपर्यन्तमूना अतोऽग्रे युक्ता इति । ततस्ते व्यग्विनात् विराहुसूर्याद्दोर्लवः भुजभागैर्वर्जिताः कार्यास्ततः स्वार्धेन युक्ताः सन्तश्चन्द्रस्य ग्रासोऽङ्गुलाद्यो भवेत् सूर्यग्रासादि पूर्ववत् साध्यम् ।

अत्रोपपत्तिः । प्रतिपादितप्रमेया। अथ चन्द्रविम्बभूछाये च साधयति।त्र्यं-शोना एकादश ११ पिण्डनाड्यन्तरषडंशेन स्वर्गाद्रिपिण्डात् क्रमात् ऊनाढ्याः कार्यास्तच्चन्द्रविम्बं स्यात् तद्वत्तथैव त्रिगुणस्य पिण्डनाड्यन्तरस्य अक्षांशेन पञ्चमांशेन सप्तविंशतिमितानि स्वर्गाद्रिपिण्डादेव क्रमादूनयुक्तानि कार्याणि सा भूछाया स्यात् । अस्योपपत्तिः । मासगणाधिकारे कथितैव ॥ १२-१३ ॥

**विश्वनाथः**—अथ ग्रासानयनं पिण्डेति । पिण्डघटीस्पष्टीकरणे गतैष्यपिण्डोत्पन्नघटिकानां यदन्तरं तस्य योऽङ्घ्रिश्चतुर्थांशस्तेन इना द्वादश १२ ऊना युक्ताः कार्याः । स्वर्गपिण्डाद्रिपिण्डात् २१ । ७ क्रमा-दिति । एकविंशतिपिण्डमारभ्य षष्ठपिण्डपर्यन्तमूनास्ततोऽग्रे सप्तपिण्डमारभ्य विंशतिपिण्डपर्यन्तं युक्ताः कार्याः । पिण्डनाड्यन्तरम् ३ । अस्यांघ्रिः ० ।४५ । अनेन अद्रिपिण्डात् विंशतिपिण्डमध्ये साधितपिण्डस्य विद्यमानत्वाद्युक्ताः १२। ४५ । विराह्वर्कभुजभागैः ७। २ । वर्जिताः ५ । ४३ । स्वार्धं २ ।५१युक्ताः। जातश्चन्द्रग्रासः ८ । ३४ । सूर्यग्रासादि पूर्ववत् साध्यम् । अथ चन्द्रविम्बभू-

भासाधनमाह त्रित्र्यंशेशा इति । पिण्डनाडयन्तरम् ३ । अस्य षडंशः ० । ३०। अनेन त्रित्र्यंशेशाः १० । ४० अद्रिपिण्डस्य विद्यमानत्वाद्युक्ता जातं चन्द्रबिम्बम् ११ । १० । अथ भूभासाधनम् । पिण्डान्तरम् ३ । त्रिघ्नम् ९ । अस्य पञ्चमांशे १ । ४८ । अद्रिपिण्डस्य सत्त्वादङ्गानि २७ युक्तानि जाता भूभा २८ । ४८ ॥१२-१३॥

सुधाकरः—त्रयोदशभागसमायां चन्द्रकेन्द्रगतौ पिंडनाडयन्तरमेव घट्यात्मकं गतिफलम् । तदन्तरमष्टशतीहतं षष्टिभक्तं जातं कलात्मकं गतिफलम् $= \frac{\text{अं} \times ८००}{६०} = \frac{४०\text{अं}}{३}$।

एकस्मिन् चक्रे २८ पिण्डाः । अतः पादे ७ पिण्डाः । मृगादिकेन्द्रं च स्वर्गपिण्डाददिपिंडपर्यन्तं ततः कर्क्यादिकेन्द्रम् । अतो 'गतौ धनर्णं केन्द्रे कुलीरमृगषट्कगते'--इत्यादिना चंद्रस्पष्टगतिः

$= ७९०' । ३५'' \mp \frac{४० \text{अं}}{३}$।अत्र मृगादिकेन्द्रे ऋणं कर्क्यादिकेन्द्रे धनं ज्ञेयम्। ततो 'भुक्तिर्युगचलभाजिता' इत्यनेन चन्द्रबिम्बम् $= \frac{७९०' । ३५'' \mp \frac{४० \text{अं}}{३}}{७४} = १० । ४१ \mp \frac{४० \text{अं}}{३ \times ७४}$।

'तदपि हिमगोर्बिम्बम् त्रिघ्नम्' इत्यादिना भूभाबिम्बम् $= \frac{३ \times १२}{११} \left( १० । ४१ \mp \frac{४० \text{अं}}{३ \times ७४} \right)$

$- ८ = \frac{३८४ । ३६}{११} - ८ \mp \frac{४० \text{अं} \times १२}{७४ \times ११} = ३४ । ५८ - ८ \mp \frac{४० \text{अं} \times १२}{७४ \times ११}$

$= २६ । ५८ \mp \frac{२० \times १२ \text{अं}}{३७ \times ११}$ । ततो द्वयोर्योगार्धेन जातं मानैक्यार्धम्

$= \frac{१० । ४१ + २६ । ५८}{२} \mp \frac{१० \text{अं}}{३७ \times ३} \mp \frac{२० \times ६ \text{अं}}{३७ \times ११} = \frac{३७ । ३९}{२} \mp \frac{(११० + ३६०) \text{अं}}{३ \times ११ \times ३७}$

$= \frac{३७ । ३९}{२} \mp \frac{४७० \text{अं}}{१२२१}$ । ततोऽनुपातो यदि नवत्यंगुलशरैस्त्रिज्या १२० विराहुरविभुजज्या तदा मानैक्यार्धेन किम् । लब्धा भुजज्या द्विभक्ता स्वल्पान्तरात् मानैक्यार्धसमशरसम्बंधिनो विराह्वर्कभुजांशाः $= \frac{१२०}{९० \times २} \left( \frac{३७ । ३९}{२} \mp \frac{४७० \text{अं}}{१२२१} \right) = \frac{२}{३} \left( \frac{३७ । ३९}{२} \mp \frac{४७० \text{अं}}{१२२१} \right)$

$= \frac{३७ । ३९}{३} \mp \frac{९४० \text{अं}}{३६६३} = १२ \mp \frac{\text{अं}}{४}$ स्वल्पान्तरात् । अन्यत् सर्वं मासगणाधिकारानयनवत् सुगमम् । शरसाधने 'तेंऽशा निघ्नाः शङ्करैः शैलभक्ता' इत्यनेन गुणकोऽयम् $= \frac{११}{७}$

$= १ + \frac{४}{७} = १ + \frac{१}{२}$ स्वल्पान्तरात् $= \frac{३}{२}$ अतश्छन्नसमशरभवा व्यग्वर्कभुजांशाः $\frac{३}{२}$ अनेन

गुण्या अर्थात् स्वार्धभागयुताश्छन्नांगुलानि भवन्तीति सर्वं निरवद्यम् ।

अनन्तरानीतं चन्द्रबिम्ब ।

$= \text{१० । ४१} + \frac{\overline{\text{२० अं}}}{\text{३} \times \text{३७}} = \text{१० । ४१} + \frac{\overline{\text{२० अ}}}{\text{१११}} = \text{१० । ४०} + \frac{\overline{\text{अ}}}{\text{६}}$ स्वल्पान्तरात्

$= \text{१०} \frac{\text{४०}}{\text{६०}} + \frac{\overline{\text{अं}}}{\text{६}} = \text{११} - \frac{\text{१}}{\text{३}} + \frac{\overline{\text{अ}}}{\text{६}}$ । अत उपपन्नं चन्द्रबिम्बानयनम् ।

अनन्तरानीतं भूभाबिम्बं च $= \text{२६ । ५८} + \frac{\overline{\text{२०} \times \text{१२ अं}}}{\text{३७} \times \text{११}} = \text{२६ । ५८} + \frac{\overline{\text{२०} \times \text{४} \times \text{३अं}}}{\text{३७} \times \text{११}}$

$\text{२६ । ५८} + \frac{\overline{\text{८०} \times \text{३अं}}}{\text{४०७}} = \text{२७} + \frac{\overline{\text{३अं}}}{\text{५}}$ स्वल्पान्तरतः । अत उपपन्नम् ॥ १२–१३ ॥

**वारादिके भूः कुगुणाः खबाणाः । १ । ३१ । ५० ।**
**पिण्डे द्वयं २ भे द्वयमीशनाड्यः २ । ११ ।**
**क्षेप्याः क्रमेण प्रतिमासमत्र**
**राहौ युगांकाः ९४ कलिका वियोज्याः ॥ १४ ॥**

**मल्लारिः**—अथ प्रतिमासवारादीनां चालनमाह । स्पष्टार्थमेतत् ।
अत्रोपपत्तिः सुगमा ॥ १४ ॥

दैवज्ञवर्यस्य दिवाकरस्य सुतेन मल्लारिसमाह्वयेन

वृत्तौ कृतायां ग्रहलाघवस्य पञ्चाङ्गपर्वानयनं समाप्तम् ।

इति श्रीग्रहलाघवस्य टीकायां पञ्चाङ्गचन्द्रग्रहणानयनाधिकारः पञ्चदशः ॥ १५ ॥

**विश्वनाथः**—अथ प्रतिमासं वाराद्ये चालनमाह वारादिके भूरिति । कार्त्तिकशुक्लप्रतिपदि वाराद्यम् ४ । ३५ । ६ । वारघटीपलेषु यथाक्रमं भूः १ कुगुणाः ३१ खबाणाः ५० । योजिता जातं मार्गशीर्षशुक्लप्रतिपदि वाराद्यम् ६ । ६ । ५६ । मासादौ पिण्डः १७ । १८ । ४२ । उपरि द्वयं योजितं जातोऽग्रिममासादौ पिण्डः १९ । १८ । ४१ । मासादौ नक्षत्रध्रुवकः १४ । ३९ । १६ । उपरि द्वयं घटिकासु एकादश योजिता जातोऽग्रिममासादौ नक्षत्रध्रुवकः १६ । ५० । १६ । राहौ १ । ५ । २ । ० युगाङ्काः ९४ कलिका वियोजिता जातो- ऽग्रिममासि राहुः १ । ३ । २८ । ० ॥ १४ ॥

इति पञ्चाङ्गानयनग्रहणाधिकारोदाहरणम् ।

**सुधाकरः**—एकचान्द्रमासस्य सावनसंख्या २९ । ३१ । ५० सप्ततष्टा जातो वारादौ क्षेपः = १ । ३१ । ५० । अस्यैवाधिकारस्य तृतीयश्लोकोपपत्तावेकस्मिन् चान्द्रमासे पिण्डमानम् = २ । ० । २८ । ३३ । आचार्येण स्वल्पान्तरत्वादाद्यांक एव गृहीतोऽतो जातः पिण्डे

क्षेपः = २। द्वितीयश्लोकोपपत्तौ प्रागेवैकचन्द्रमासे दर्शितं नक्षत्रादिकम् = २ । ११ एतदेवातस्तत्र क्षेपः। दशमश्लोकोपपत्तौ चक्रस्मिम् मासे राहुगतिः ० रा। १°। २४' = ९४'। एतेन राहुक्षेप उपपद्येते। चक्रशुद्धत्वादत्र राहोर्गतिर्वक्राऽतो 'वियोज्या' इत्युक्त आचार्येणेति सर्वमुपपन्नम् ॥ १४ ॥

इति सुधाकरनिर्मितवासना सकलया कलया कलयासना।
ग्रहतिथिप्रमुखे परया गता भवलयावलया वलयाऽऽगता ॥
इति पञ्चाङ्गग्रहणानयनाधिकारः समाप्तः।

## अथोपसंहाराधिकारः।

द्व्यब्धीन्द्राः शकरहितास्ततो भवाप्तं
चक्राख्यं रविहतशेषकं तु हीनम्।
खेटाद्यैः पृथगमुतः सदग्घ्नचक्रात्
सिद्धाढ्यादमरफलाधिमासयुक्तम् ॥ १ ॥
खत्रिघ्नं तिथिरहितं निरग्रचक्रा-
ङ्कांशाढ्यं पृथगमुतोऽब्धिषट्कलब्धैः।
ऊनाहैर्वियुतमहर्गणो भवेद्व
वारः प्राक् शरहतचक्रयुग्गणोऽब्जात् ॥२॥
चक्रनिघ्नध्रुवोपेताः सक्षेपा द्युगणोद्भवैः।
खेटैरूनाः स्युरिष्टाहे द्व्यब्धीन्द्राल्पः शको यदा ॥ ३ ॥
पूर्वे प्रौढतराः क्वचित् किमपि यच्चक्रुर्धनुर्ज्यें विना
ते तेनैव महातिगर्वकुभृदुच्चशृङ्गेऽधिरोहन्ति हि।
सिद्धान्तोक्तमिहाखिलं लघु कृतं हित्वा धनुर्ज्ये मया
तद्गर्वो मयि मास्तु किं न यदहं तच्छात्रता वृद्धधीः ॥ ४॥

**मल्लारिः**—अथ द्व्यब्धीन्द्राल्पेऽङ्के ग्रहज्ञानार्थमहर्गणसाधनं वदति। स्पष्टार्थमिदम्।

अत्रोपपत्तिः। विलोमविधिना पूर्वाहर्गणवासनातः सिद्धा ॥ १-३ ॥

अथ ग्रन्थालङ्कारमाह। पूर्वे भास्कराद्याचार्याः प्रौढतराः किञ्चिच्छायासाधनं धनुर्ज्ये विना चक्रुः। ते तेनैव कर्मणा महान् अतिगर्वलक्षणो यः कुभृत् पर्वतस्तस्य उच्चशृङ्गे उच्चशिखरे अधिरोहन्ति। यतो भास्करेण ब्रह्मतुल्ये छायाधिकारे उक्तम्। 'इति कृतं लघुकार्मुकशिञ्जिनीग्रहणकर्म विना द्युतिसाधन'मिति।

मया इहास्मिन् ग्रन्थे अखिलं गणितजातं कर्म सिद्धान्तोक्तं धनुर्ज्याविधिं हित्वा कृतं तद्‌गर्वस्तेषामपेक्षया गर्वो मयि किं मास्तु अपि तु न यतो मम बुद्धिवृद्धि- स्तच्छास्त्रतो जातेत्यर्थः ॥ ४ ॥

## अथोपसंहाराधिकारोदाहरणम् ।

**विश्वनाथः**--अथ द्व्यब्धीन्द्राल्पे शके ग्रहज्ञानार्थमहर्गणसाधनमाह । द्व्यब्धीन्द्राः १४४२ । शाकेन १४४१ रहिताः १ । अस्मादेकादश ११ भक्तं लब्धम् ० । चक्रम् ० । शेषाङ्कं रविहतम् १२। चैत्रतो गतमासाः ३ तैर्हीनम्९। पृथक्स्थम् ९ । सदृग्घ्नचक्रम्० । युतम् ९। सिद्धाढ्यम् ३३।अमर–३३। फला- धिमास-१ युक्तपृथक्स्थं जातो मासगणः १० । खत्रिघ्नम् ३०० । तिथि–१४ रहितम् २८६। निरग्रचक्राङ्कांशाढ्यम् २८६ । पृथक्स्थ–२८६ मस्मादाब्धिषट्क- ६४ लब्धैः ४ ऊनाहैर्वियुतं जातोऽहर्गणः २८२। शरहतचक्र ० युक् अहर्गणः २८२। सप्ततष्टो जातो बुधवासरः । अथ ग्रहसाधनमाह । ध्रुवः ० ।१।४९।११। चक्र-० निघ्नः ०।०।०। अनेन रविक्षेपः ११ । १९।४१।०।युक्तः११।१९।४१। ० । अहर्गणोत्पन्नसूर्येण ९ । ७। ५६।२६ रहितो जातः सूर्यः २ । ११ । ४४ । ३४ ॥ १-३ ॥

**विश्वनाथः**--अथ पूर्वाचार्याणां सगर्वत्वमात्मनः सविनयत्वं चाह पूर्वे ति । पूर्वे भास्करादयः प्रौढतराः क्वचित् स्थले त्रिप्रश्नादौ किमपि ग्रहकर्म- च्छायादि धनुर्ज्ये विना चक्रुः । ते तेनैव कारणेन महा अतिगर्वलक्षणो यः कुभृत् पर्वतस्तस्य उत् ऊर्ध्वे शृङ्गे शिखरे अधिरोहन्ति । यतस्तैरुक्तम् । 'इति कृतं लघुकार्मुकशिञ्जिनीग्रहणकर्म विना द्युतिसाधनम्' इत्यादि । इहास्मिन् ग्रन्थे मयाऽखिलं सर्वं सिद्धान्तोक्तं कर्म धनुर्ज्याविध हित्वा लघु सुगमं कृत तत् तस्मात् तेषां गर्वो मयि किं मास्तु अपि तु न । यद्यस्मात् कारणात् अहं तच्छास्त्रतस्तेषां भास्करादीनां शास्त्रमवलोक्य वृद्धधीरस्मि तच्छास्त्रं विलो- क्य मम बुद्धिर्विस्तृता अतस्तद्गर्वो मयि नास्त्विति ॥ ४ ॥

अथोपसंहाराधिकारः ।

**सुधाकरः**—अत्राहर्गणानयनेनैव 'द्व्यब्धीन्द्रोनितशक ईशहृ'दित्यादिना बीजगणितक्रियया श – १४४२ = –( १४४२ – श ) = – शे । इदमीशभक्तं लब्धं चक्राख्यमृणम् । शेषं च ऋणम् । तद्द्वादशहतिश्च ऋणरूपा तत्र चैत्रादिमासधनसंख्यायोजनेन 'धनर्णयोरन्तरमेव योगः' इति बीजक्रिययाऽन्तरमृणात्मकं जातम् । तस्मादृणतोऽधिमासानयने तत्र ऋणे द्विघ्नचक्रमृणं क्षेप्यमतो द्वयोर्ऋणयोर्योगः कृतः । धनाहर्गणे ग्रन्थादावधिमासशेषम् $= \frac{१०}{३३}$ इदमेकस्माद- धिमासाच्छोधितं जातं ग्रन्थारम्भतोऽग्रेऽधिमासपूर्त्तिकालेऽधिमासशेषम् $= १ - \frac{१०}{३३}$

$= \frac{३३ - १०}{३३} = \frac{२३}{३३} = \frac{२४}{३३}$ स्वल्पान्तरात्। अतोऽत्र विपरीताहर्गणानयनेऽधिमासार्थम्—२४ यं क्षेप्यस्ततोऽमरहृतादवाप्ता अधिमासा अस्वा एव समायान्ति। अतस्ते ऋणात्मके मासगणे पृथक्कृत्ये क्षेप्यास्ते चास्वा विधुमासा जाताः। ते त्रिंशद्गुणिता अस्वाश्चान्द्राहा जाताः। तत्र धनेष्टतिथियोजनेनान्तरमेव जातम्। एवमधुना इष्टचान्द्राहा निरग्रचकाङ्गांशेनाधनेन संयुक्तास्तत आगतैः क्षयाहैरस्वैर्वियुता जातो विपरीताहर्गणस्तत्र क्षये शरहतर्णचकस्य योजनेन ग्रन्थारम्भवारात् सोमात् प्राग्गणनयाऽभीष्टो वारो भवदिति सर्वमहर्गणानयनेन बीजधनर्णक्रियर्यैवोपपद्यत इति ॥ १–२ ॥

एवमहर्गणोद्भवः खेटः क्षयो भवत्यहर्गणस्य क्षयत्वात्। अधनाच्चकाच्च चक्रनिघ्नध्रुवा अधना जाताः। ते शोधनेन बीजक्रियया धना एव। तत्र ग्रन्थादिधनक्षेपयोगेन जातोऽभीष्टाहे ग्रहः = क्षे − अहर्गणभवखे. − ( − च × ध्रु )

= क्षे + च ध्रु − अहर्गणभवखे.

अत उपपन्नं सर्वम् ॥ ३ ॥

भास्कराचार्येण सोद्धतं वाक्यं किमपि नालेखि। वस्तुतोऽत्र गणेश एव भास्कराभिमानवर्णनव्याजेन स्वोत्कर्षं साभिमानं वर्णयति। भास्करवचने करणकुतूहलस्थे

'इति कृतं लघु कार्मुकशिञ्जिनीग्रहणकर्म विना द्युतिसाधनम्'

अस्मिन् न कुत्रापि गर्वभराणि वचनानि निरीक्ष्यन्ते ( द्रष्टव्यं मदीयशोधितं वासनाविभूषणसहितं करणकुतूहलम् )। एतेन

न भास्करे गर्वगतेर्हि लेशः सुधाकरे क्वास्तु च तत्प्रवेशः।
गणेशगोरेव गरीयसीह गर्वेण गीर्वाणगुरुर्न गण्यः ॥

इति मदुक्तं नायुक्तमिति मध्यस्थबुद्ध्या निपुणैर्विचिन्त्यमिति ॥ ४ ॥

**नन्दिग्राम इहापरान्तविषये शिष्यादिगीतस्तुति-**
**र्योऽभूत्कौशिकवंशजः सकलसच्छास्त्रार्थवित्केशवः।**
**सूनुस्तस्य तदङ्घ्रिपद्मभजनाल्लब्धावबोधांशकं**
**स्पष्टं वृत्तविचित्रमल्पकरणं चैतद्गणेशोऽकरोत् ॥ ५ ॥**

**मल्लारिः**—अथ स्वस्थितिपुरस्वनामादि कथयति। केशवो नन्दिग्राम अपरान्तविषये समुद्रतटनिकटपश्चिमदेशे शिष्यादिभिर्गीता स्तुतिर्यस्येति स तथा कौशिकगोत्रे जातः। सकलानि यानि सन्ति समीचीनानि शास्त्राणि तेषां येऽर्थास्तान् वेत्ति जानाति स तथा एवंभूतोयस्तस्य सूनुर्गणेशः। तदङ्घ्रिपद्मभजनात् तच्चरणकमलसेवनात् किञ्चिदवबोधांशकं ज्ञानलवं लब्ध्वा प्राप्य इदं करणं स्पष्ट

स्पष्टार्थं वृत्तैर्नानाछन्दोभिर्विचित्रम् । अर्थेन बहुलं च एतदकरोत् कृतवानित्यर्थः इति पूर्वशकाद्ग्रहानयनप्रकारो ग्रन्थालङ्कारश्च कृतः ।

इति श्रीमद्गणकचूडामणिदिवाकरदैवज्ञसुतमल्लारिदैवज्ञविरचितायां ग्रहलाघवस्य टीकायां ग्रन्थसमाप्त्यलङ्कारव्याख्यानं समाप्तम् ।। १६ ।।

देशे पार्थसमाह्वयेऽतिरुचिरे तीरे च गोदोत्तरे
गोलग्रामपुरे पुरारिचरणार्चासक्तविद्वद्युते ।
आसीत्तत्र दिवाकरेति चतुरो दैवज्ञसंघाग्रणी-
र्विश्वेशे सततं यदीयहृदयं यस्तस्य पुत्रोऽकरोत् ।। १ ।।
मल्लारिर्गणकाग्रणीर्गुरुपदद्वन्द्वाब्जभक्तौ रतो
लब्ध्वा बोधलवं ततो हि विवृतिं सार्थोपपत्तिं स्फुटाम् ।
वर्यस्य ग्रहलाघवस्य गणकश्रीमद्गणेशाभिध-
प्रोक्तस्याथ कृपालवो हि सुधियः पश्यन्तु तुष्यन्त्विमाम् ।। २ ।।

**विश्वनाथः**—अथाऽलंकारश्लोकमाह नन्दिग्राम इति । अपरान्तविषयेऽपरा पश्चिमदिक् तस्या अन्तः प्रान्तः । तस्मिन् विषयः स्थानं यस्य स तस्मिन् नन्दिग्रामे केशव आसीत् । किम्भूतः । शिष्यादिभिर्गीतः स्तुतः । कौशिकगोत्रजः कौशिकवंशोत्पन्नः । सकलसच्छास्त्रार्थवित् सर्वसमीचीनशास्त्रार्थवेत्ता । एवंविधः केशवस्तस्य सूनुर्गणेशः । तदंघ्रिपद्मभजनात् तच्चरणकमलसेवनात् किञ्चिदवबोधांशकं ज्ञानलवं लब्ध्वा प्राप्य इदं करणं स्पष्टं स्पष्टार्थं वृत्तैर्नानाछन्दोभिर्विचित्रम् । अर्थेन बहुलं च एतदकरोत् कृतवानित्यर्थः ।। ५ ।।

इति श्रीदिवाकरदैवज्ञात्मजविश्वनाथदैवज्ञविरचितं
सिद्धान्तरहस्योदाहरणं समाप्तम् ।

**सुधाकरः**—स्पष्टार्थम् ।। ५ ।।

इति सुधाकरनिर्मितवासना सकलया कलया कलयाऽऽसना ।
श्रीमद्दिवाणके परया गता भवलयावलया वलयाऽऽगता ।।
श्रीमत्कृपालोरिह लाचिदेव्यां तत्कुक्षिरत्नाकरतोऽभवद्यः ।
सद्वासनाऽकारि सुधाकरेण तेनास्य बुद्धेर्विदुषां विवृद्ध्यै ।।

इति सुधाकरद्विवेदिविरचिता ग्रहलाघवसद्वासना समाप्ता ।

अथ गुरोरुदयास्तसाधने पृष्ठे २६६ क्षेपसाधनम् ।

आर्यभटमतेन कलिमुखात् १४४२ शकादौ चान्द्रमासाः = ५७१५६
रविगुर्वोर्योगाः = १४९८४ । तत्संबन्धिनश्चान्द्रमासाः = २०२३९९

५७१५६ एभिः पूर्वोक्ता योगा लभ्यन्ते तदा कलि-
१४९८४ मुखाद्ग्रन्थारम्भशकसंबन्धिचान्द्रमासैः
के इत्यनुपातेन जाता योगाः = ४२३१*

२२८६२४
४५७२४८
५१४४०४
२२८६२४
५७१५६

२०२३९९)८५६४२५५०४(४२३१*
८०९५९६

४६८२९५
४०४७९८

६३४९७०
६०७१९७

२७७७३४
२०२३९९

७५३३५ = शेषम् ।

एभिः १४९८४ योगैरयं शेषः ७५३३५ तदेकेन किमिति शेषमानम् = $५\frac{४१५}{१४९८४}$ ।

अर्थात् ५ मासाः । दिनम् $\frac{१२४५०}{१४९८४}$ ।

तथा हि शेषम्—

१४९८४)७५३३५(५ मासाः ।
७४९२०

४१५ एते द्विगुणिताः सन्तो दश मासाः,
३० द्वौ वासरौ चार्यभटोक्त्याऽऽगच्छतस्त-
त्राऽऽचार्येण नव दिनान्यधिकानि गृहीतानि सन्ति ।
१२४५० इति विद्वद्भिश्चिन्त्यम् ।

अथ शुक्रोदयास्तसाधने पृष्ठे २६९ क्षेपसाधनम् ।

ब्रह्मसिद्धान्तमूलकसिद्धान्तशिरोमणौ कल्पे शुक्रोच्चभगणाः = ७०२२३८९४९२

सूर्यभगणाः = ४३२००००००००

अनयोरन्तरेण तन्मते शुक्रशीघ्रकेन्द्रभगणाः = २७०२३८९४९२

आर्यभटमतेन शुक्रशीघ्रकेन्द्रभगणाः = २७०२३८८७४६

अनयोरैक्यस्यास्य ५४०४७७८२३८ दलम् २७०२३८९११९ ।

एतदेवाचार्यमतेन वास्तवं शुक्रशीघ्रकेन्द्रभगणमानं 'शौक्रं केन्द्रमजार्यमध्यगं –' इत्युक्तेः ।

कल्पादेः १४४२ शकादौ चान्द्रमासाः ५७१५६ । ततोऽनुपातेन—

२७०२३८९११९
५७१५६
―――――――
१६२१४३३४७१४
१३५११९४५५९५
२७०२३८९११९
१८९१६७२३८३३
१३५११९४५५९५
―――――――
५३४३२३३६०००)१५४४५७७५२४८५५६४(२८९० गतभगणाः ।
१०६८६६६७२
―――――――
४७५९१०८०४
४२७४६६६८८
―――――――
४८४४४११६८
४८०९००१२४
―――――――
२७०२३८९११९)३५४११४४५५६४(१३ ३
२७०२३८९११९
―――――――
८३८७५५४३७४
८१०७१६७३५७
―――――――
२८०३८७०१७
३०
―――――――
८४११६१०५१०
८१०७१६७३५७
―――――――

एवं च गणितेनाऽयं क्षेपो १३ । ३ भवितुमर्हति तत्राऽऽचार्येण $\frac{६४}{५}$ = १२।२४ अयं गृहीत इति सुधीभिर्मृशं चिन्त्यम् ।

पता
खेमराज श्रीकृष्णदास
श्रीवेंकटेश्वर "स्टीम्" प्रेस बम्बई.

तथा
गङ्गाविष्णु श्रीकृष्णदास
लक्ष्मीवेंकटेश्वर प्रेस "कल्याण" बम्बई.